१।२।७ भक्तियोगसमायुक्तानीश्वरार्पितमानसान् ।
प्रणायामादिषु रतान् दूरात् परिहरामलान् ॥१६
प्रणवासक्तमनसो रुद्रजप्यपरायणान् ।
अथर्वशिरसोऽध्येतॄन् धर्मज्ञान् परिवर्जय ॥१७
बहुनाऽत्र किमुक्तेन स्वधर्मपरिपालकान् ।
ईश्वराराधनरतान् मन्नियोगान्न मोहय ॥१८
एवं मया महामाया प्रेरिता हरिवल्लभा ।
यथादेशं चकारासौ तस्माल्लक्ष्मीं समर्चयेत् ॥१९
श्रियं ददाति विपुलां पुष्टिं मेधां यशो बलम् ।
अर्चिता भगवत्पत्नी तस्माल्लक्ष्मीं समर्चयेत् ॥२०
ततोऽसृजत् स भगवान् ब्रह्मा लोकपितामहः ।
चराचराणि भूतानि यथापूर्वं ममाज्ञया ॥२१
मरीचिभृग्वङ्गिरसः पुलस्त्यं पुलहं क्रतुम् ।
दक्षमत्रिं वसिष्ठं च सोऽसृजद् योगविद्यया ॥२२
नवैते ब्रह्मणः पुत्रा ब्रह्माणो ब्राह्मणोत्तमाः ।
ब्रह्मवादिन एवैते मरीच्याद्यास्तु साधकाः ॥२३
ससर्ज ब्राह्मणान् वक्त्रात् क्षत्रियांश्च भुजाद् विभुः ।
वैश्यानूरुद्वयाद् देवः पादाच्छूद्रान् पितामहः ॥२४

---

१-४ –c) दे$_1$ स्वाध्याय (→स्वाध्याये), व$_2$ °नेष्टया, दे$_3$ °नेच्छया (→°नेज्यया). –d) न$_1$ वर्जयेत्, प्र$_2$ च वर्जय(→वर्जय), दे$_1$ प्रयत्नेन विवर्जयेत्

१५ श्लोकानन्तर न$_1$ पुस्तके अधिकम्—

1 *नमस्कारादिसंयुक्तं शिव इत्यक्षरद्वयम् ।
जिह्वाग्रे वर्तते येषां तान् प्रयत्नेन वर्जयेत् ॥

१६ –c) व$_3$ प्रणायामादिषु, तै$_1$ पूर्णयामादिषु (→प्राणायामादिषु) –d) द$_1$ °रान्मयान् (→°रामलान्), न$_1$ तान् प्रयत्नेन वर्जयेत्

१७ –a) का$_1$ व$_{1\,3}$ द$_{10}$ °वाशत° (→°वासक्त°) –b) का$_1$ दे$_{6\,10}$ न$_1$ द$_1$ ग$_5$ °जाप्य° (→°जप्य°), दे$_1$ °परायणा (→°परायणान्) –c) का$_1$ °षोऽध्येतॄन्, व$_1$ दे$_{8\,9}$ मुबें मुए मुव °षोवेतॄन्, दे$_{10}$ °सो वेदन् (→°साध्येतॄन्), दे$_1$ शास्त्रष्वभिरतान् धीरान्, द$_1$ यथर्मवंदाध्येतॄ श्च, ग्र$_{1\,2}$ म$_1$ यथर्ववेदाध्ये (ग्र$_2$ °ध्यं) तृ श्च –d) दे$_{10}$ °वर्जयेत् (°→वर्जय), न$_1$ तान् प्रयत्नेन वर्जयेत्

१८ –c) न$_1$ तै$_1$ म$_1$ °परान् (→°रतान्) –d) न$_1$ °नियोगो (→°नियोगान्), दे$_4$ विवर्जय (→न मोहय), दे$_6$ मन्नियोगानुमोहय, ते$_1$ मन्नियोगाद्विसर्जय, +मन्नियोगोदिव सर्जय

१९ –a) दे$_{1\,4}$ माया (→मया), दे$_{1\,6}$ महाभागा, द$_1$ महा*या (→महामाया) –b) द$_1$ °वल्लभ (→°वल्लभा), दे$_4$ प्रेरितादतिलाञ्जना(?) –c) द$_1$ ग्र$_{1\,2}$ म$_1$ चकारादो (→चकारासौ)

२०. म$_1$ दे$_{4\,5}$ तै$_1$ द$_1$. ○ (द म ) –a) व$_2$ ददाभि (?) (→ददाति), व$_2$ दरसा (→विपुलां) –b) व$_3$ पुष्टि (→पुष्टिं), दे$_1$ मेधं, म$_1$ मेधा (→मेधां) –c) दे$_3$ अर्चिता,(?) दे$_{10}$ अर्चितो (→अर्चिता), दे$_{10}$ भगवत्पत्नी, म$_1$ भगवन् पत्नी, ग्र$_2$ भगवत्पत्नीं (→भगवत्पत्नी) –d) दे$_1$ °ल्लक्ष्मी॰ (→°ल्लक्ष्मी), का$_1$ दे$_3$ समाश्रयेत् (→समर्चयेत्)

२१ –a) दे$_{10}$ सु-, द$_1$ ग्र$_{1\,2}$ न$_1$ च (→स) –b) दे$_{10}$ ब्रह्म (→ब्रह्मा), दे$_{5\,6}$ पितामह (दे$_8$ °ह्) (→पितामह) –c) दे$_1$ चराचराणा, वे$_1$ परावराणि (→चराचराणि) –d) दे$_3$ मयाज्ञया, न$_1$ स्वयं प्रभु (→ममाज्ञया)

२२ –a) का$_1$ म$_1$ दे$_{1,\,3\text{-}6\,8\text{-}10}$ द$_1$ व$_2$ मुबें °भृग्वङ्गिरस (→°भृग्वङ्गिरस ), व$_{2\,3}$ दे$_9$ मरीचि (व$_3$ °चो) भृग्वङ्गिरस –b) न$_1$ पुलस्त्य (→पुलस्त्यं); दे$_6$ न$_1$ पुलह- (?), दे$_{10}$ पुलमा(?) (→पुलहं) –c) व$_3$ वशिष्ठं (→वसिष्ठं) –d) का$_1$ स सृजद् (→सोऽसृजद्), द$_1$ वंग°(?) (→योग°), दे$_4$ °गायया (→°विद्यया), प्र$_2$ सोसृजत् विद्ययानया

२३. –a) द$_1$ ग्र$_1$ नव ते (→नवैते) –b) व$_{1\,3}$ ब्रह्मण्या, व$_2$ दे$_{8\text{-}10}$ ब्रह्मणा, दे$_1$ ब्रह्मना, दे$_{2\,3}$ ब्रह्मणो, दे$_{4\,6}$ न$_1$ तै$_1$ मुबें मुए मुव ब्राह्मणा (दे$_4$ °णो), द$_1$ ब्रह्मणे, म$_1$ ब्रह्मण्यो (→ब्रह्माणो), का$_1$ ब्राह्मणोत्तम, दे$_{1\,9\,10}$ ब्रह्मणोत्तमा, दे$_8$ ब्रह्मणोत्तम (→ब्राह्मणोत्तमाः) –d) दे$_{1\,10}$ मरीचाद्या (→मरीच्याद्यास्तु), दे$_2$ माधव , दे$_{3\,6}$ सात्वता (→साधका ); तै$_1$ मरीच्याद्या स्वसाधका

२४ –a) दे$_{10}$ ससर्ज , प्र$_2$ ससर्ज (→ससर्ज), तै$_1$ ब्रह्मणो (→ब्राह्मणान्), द$_1$ ग्र$_{1\,2}$ म$_1$ °णान्नास्यात् (→°णान् वक्त्रात्) –b) वे$_1$ तु (→च); तै$_1$ द$_1$ ग्र$_{1\,2}$ म$_1$ भुजा (वे$_1$ °जात्) द्विजा (→भुजाद्विभुः). –c) दे$_1$ वैश्या°(?) (→वैश्या°), दे$_{10}$ °द्वयात्(?) (→°द्वयाद्), व$_{2\text{-}3}$ दे$_{6\,10}$ तै$_1$ °देव (→°द्देव ), –d) दे$_{1,3\,8\text{-}10}$ मुबें मुए मुव. पद्भ्यां शूद्रान्, दे$_3$ पादाच्छूद्रान्, प्र$_2$ पदात् शूद्रान् (→पादाच्छूद्रान्), दे$_3$ पितामहा , न$_1$ पितामहान् (→पितामहः).

२४. श्लोकानन्तर व$_2$ पुस्तके अधिकम्—

* चराचराणि भूतानि यथापूर्वममाज्ञया । ( = २१cd)

यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज ह ।
गुप्तये सर्ववेदानां तेभ्यो यज्ञो हि निर्बभौ ॥२५
ऋचो यजूंषि सामानि तथैवाथर्वणानि च ।
ब्रह्मणः सहजं रूपं नित्यैषा शक्तिरव्यया ॥२६
अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी भूता यतः सर्वाः प्रवृत्तयः ॥२७
अतोऽन्यानि तु शास्त्राणि पृथिव्यां यानि कानिचित् ।
न तेषु रमते धीरः पाषण्डी तेन जायते ॥२८
वेदार्थवित्तमैः कार्यं यत्स्मृतं मुनिभिः पुरा ।
स ज्ञेयः परमो धर्मो नान्यशास्त्रेषु संस्थितः ॥२९
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥३०
पूर्वकल्पे प्रजा जाताः सर्वबाधाविवर्जिताः ।
शुद्धान्तःकरणाः सर्वाः स्वधर्मनिरताः सदा ॥३१
ततः कालवशात् तासां रागद्वेषादिकोऽभवत् ।
अधर्मो मुनिशार्दूलाः स्वधर्मप्रतिबन्धकः ॥३२
ततः सा सहजा सिद्धिस्तासां नातीव जायते ।
रजोमात्रात्मिकास्तासां सिद्धयोऽन्यास्तदाभवन् ॥३३ ब्रं.१.२

२५. –b) दे3 शूद्रवज्ञ, दे10 शूर्यवर्ज (?), ब2 शूद्रवस्त (?) (→शूद्रवर्जं), दे5 हा (→ह). –c) दे10 गुप्ता य (→गुप्तये), ब3 दे2 4.8-10 ते1 द1 ग्र1.2 मुबं. मुए. मुब °देवाना, ग1 °भूताना (→°वेदाना). –d) दे10 यज्ञा (→यज्ञो).

२६. –a) प2 *चो (→ऋचो), दे1 यजुषि, दे10 यजुष– (→यजूंषि) –b) दे4 °थर्वगानि (→°थर्वणानि). –c) ब3 ब्राह्मण, दे1 द1 ब्राह्मण (→ब्रह्मण), दे1 सहज– (→सहज) –d) दे1 निरपेशा, दे10 निश्शैषा, द1 ग्र1 2 हत्ये (द1 °त्यै) ग1, म1 प्रत्येषा (→नित्यैषा).

२७ –b) न1 वाग् विसृष्टा, ते1 वागुत्सृष्टा (→वागुत्सृष्टा) –c) ग्र1 2 म1 माद्या (→पादौ), दे4 °मया (→°मयी), ते1 माता (→भूता) –d) द1 ग्र1 2 म1 भूतपूर्वा (→यत सर्वा), ब2 सर्व– (→सर्वा), दे1 प्र* त्तय, (→प्रवृत्तय)

२८ –a) का1 दे2 3 5 6 ततोन्यानि, दे1 प * न्यानि, दे8-10 अन्यान्यपि (→अतोऽन्यानि), ब3 दे6 * दे7 8 9 द1 मुबं मुए. मुर हि (→तु). –b) दे6 जाति–(→यानि), ब3 दे3.6 8 10 यानि च (→कानिचित्) –c) ब1 न तेषा, दे3 न तेषु, दे6 न तेरव–(→न तेषु), का1 दे5 समते (→रमते), ग1 न1 वीर (→धीर) –d) दे4 8-10 का1 येन जायते, दे8 9 रमते पुनं, दे10 द1 ग्र1 2 म1 जायते पुन (→तेन जायते).

२९ –a) ब1 वेदानुवित्तमे (→वेदार्थवित्तमैः) –b) प1 2 म1 स्मृत यत (→यत् स्मृतं), म1 यत्स्मृत सर्ववैदिक –c) दे3 6 यज्ञो य दे4 यज्ञेय (→स ज्ञेयः) –d) म1 नान्या° (→नान्य°), म1 संस्थित (→संस्थितः)

३०. –a) दे10 यो, दे1 य (→या), का1 दे9-10 ते1 °बाह्या (?) (→°बाह्या), –b) प2 या च (→याश्च), प2 कुदृष्टय (→कुदृष्टय) –c) ब2 ता सर्वा, दे3 सर्वास्ता (→सर्वास्ता), का1 नि फला, ब2 3 दे4 द1 निष्फला (ब2 °ला) (→निष्फला), न1 प्रोक्ता, प्र2 प्रेत्य (→प्रेत्य) –d) ब3 ता (→ता), ब1 3 दे8 श्रुता, दे2 श्रुता, +श्रुता, म1 परे (→स्मृता)

३१ –a) ब3 °कल्प, म1 °काले (→°कल्पे), ग1 –आसन्, ब3 सर्व-,दे1 3 6 10 ते1 जाता (→जाता) –b) ब1 3 हेतुवाद°, ब2 दे3 ते1 सर्वाबाधा°, दे5 सर्वदोष°, द1 ग्र2 म1 सर्वबोधंद°, ग1 सर्वं बोधंद° (→सर्वबाधा°), ब1 दे10 °विवर्जित, दे1 °विवर्जिता (→विवर्जिता) –c) ग्र1 °करणस् (?) (→°करणास्), द1 ग्र1 2 म1 सर्वं (→सर्वा) –d) दे5 धर्म (→धर्म-), ब3 °निरतास्तथा, दे1 8-10 द1 प्र1 2 म1 मुबं मुए. मुब °परिपालका (→°निरता सदा)

३२ न1 ३२a–३४d ⊙ (द्र स), द1 ३२c–३३d ○ (द्र स) –a) दे2 **(→तत), का1 °वशाद् (→°वशात्) –b) दे1 ग1 भवेद् (→[अ]भवत्) –c) ते1 ग्र1 2 म1 अधर्मा (ते1 °मात्) (→अधर्मो) –d) दे4 ग्र1 2 म1 °प्रतिबन्धक (→°प्रतिबन्धक)

३३ न1 द1 ○ (द्र ३२ पा टि) –a) दे1 ततश्च, दे10 तमस्ता (?) (→तत सा), ब2 दे4 प1 2 म1 सहसा, दे1 सज्जा (→सहजा), प2 सिद्ध (→सिद्धि) –b) ब3 नातीव, म1 तारीव (→नातीव) –c) प्र1 2 तमो-, म1 ततो (→रजो-), ग्र1 2 मात्रादि (प1 °त्रि) काम् (→मात्रात्मिकाम्), ब2 रजो मात्रात्मि***, ते1 रजुमात्रापिकास्तासा –d) दे2 3 9 तदाभवद्, दे10 तदाभव, ते1 तथाऽभवन्, प1 2 म1 ततो भवेत् (प1 °भवत्) (→तदाभवन्)

व.१.२.३५ तासु क्षीणास्वशेषासु कालयोगेन ताः पुनः ।
वार्तोपायं पुनश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ।
ततस्तासां विभुर्ब्रह्मा कर्माजीवमकल्पयत् ॥३४
स्वायंभुवो मनुः पूर्वं धर्मान् प्रोवाच धर्मदृक् ।
साक्षात् प्रजापतेर्मूर्तिर्निसृष्टा ब्रह्मणा द्विजाः ।
भृग्वादयस्तद्वदनाच्छ्रुत्वा धर्मानथोचिरे ॥३५
यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहम् ।
अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमाः ॥३६
दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः ।
दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥३७
शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम् ।
कारुकर्म तथाजीवः पाकयज्ञोऽपि धर्मतः ॥३८
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ।
गृहस्थं च वनस्थं च भिक्षुकं ब्रह्मचारिणम् ॥३९
अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् ।
गृहस्थस्य समासेन धर्मोऽयं मुनिपुंगवाः ॥४०
होमो मूलफलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्मोऽयं वनवासिनाम् ॥४१
भैक्षाशनं च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥४२

३४ म1 a-d ⊙ (द्र ३२ पा वि); दे9 ३४ d 'स्तसि° -४२d धर्मो' ⊙ -a) ब3 दे3 8 क्षीणासु, दे4 क्षीणास्व (→क्षीणास्व-), द1 प्र1 3 म1 जीर्णास्व° (प्र2 °ष्व°) (→क्षीणास्व°), ब3 दे3 4 8 शेषासु (→[अ]शेषासु), दे1 [अ]-शेषासु (→[अ]शेषासु) -b) का1 दे1 2 वा (→ताः) -c) ब1 वर्त्तोपाय, दे1 6 वार्त्तापाय, दे2 जाता पाय, तै1 वार्तोपाया (→वार्त्तोपाय), ब2 दे3 6 प्र1 2 ततश्चक्रु, दे4 *तश्चक्रु, द1 नतश्चक्रु, ग1 विधिश्चक्रुः (→पुनश्चक्रु) -d) ब1 2 दे3 4 6 तै1 अर्थसिद्धि (दे1 °द्धिश्), प्र2 हितबुद्धिं, मुव हस्तसिद्धिश्, (→हस्तसिद्धि); प्र2 शर्मदाम् (→ कर्मजाम्). -e) ब2** संह्वा (→विभुर्ब्रह्मा) -f) का1 दे9 कर्माजीव्य°, दे1 3 6 कर्मवीव°, तै1 कर्मजीवि°, प्र1 2 म1 कर्मादिक° (→कर्माजीव°)

३५ दे9 ⊙ (द्र ३४ पा. वि) -a) तै1 स्वय° (→स्वाय°), दे4 पूर्वं (→पूर्वं) -b) द1 धर्मं (→धर्मान्), दे6 ब1 दे1 4 8 10 न1 मुवँ मुए मुव सर्वदृक् (व1 °दृग्), दे6 धर्मधृक्, तै1 द1 प्र1 2 म1 धर्मवित् (→धर्मदृक्) -c) का1 प्रजायते (→प्रजापते), द1 मूर्तिन, प्र2 पूर्वं (→मूर्ति) -d) दे2 निसृष्टा., द4 निसृष्टो, तै1 निर्दिष्टो (→निसृष्टा), दे1 ब्रह्मण, दे5 न1 तै1 मुवँ मुए मुव ब्रह्मणो, द1 ब्राह्मणा (→ब्रह्मणा), -e) ब1 दे4 दे1 4 द1 प्र1 2 म1 पुरा, दे10 द्विजः (→द्विजा.) -f) वचनात्, द1 वदता, दे1 प1 2 भ1 वचन (→वदनात्) दे4 इत्वा (→श्रुत्वा), प्र2 मनुक्रमात् (→थोचिरे)

३६ दे9 ⊙ (द्र ३४ पा वि) -b) प3 दे8 10 म1 मुवँ. मुए मुव प्रतिग्रह, दे8 पतिग्रह, न1 परिग्रह (→प्रतिग्रह) -d) का1 धर्माश्च, ब2 धर्माणि (→कर्माणि)

३७ दे9 ○ (द्र ३४ पा वि), दे4 cd ⊙ -a) दे5 प्र1 म1 यज्ञा (म1 °ज्ञा), प3 यज्ञ (→यज्ञो) -b) प्र2 धर्मं (→धर्मः); दे3 क्षत्रि च (→क्षत्रिय-) -c) द1 प्र1 2 ग1

द्वन्द्व- (→दण्डो) -d) का1 कृषो (→कृषिर्), दे10 सस्यते (→शस्यते)

३८ दे9 ⊙ (द्र ३४ पा वि) -a) दे1 शुश्रूषैव, दे6 शुश्रूषा वै, दे10 शुश्रूषा वै (→शुश्रूषैव), दे1 द्विजातानां (→द्विजातीनां) -b) दे6 °साधनं (→°साधनम्) -c) दे3 चातुर्कर्म, द3 कारुकर्म, द1 म1 पाककर्म, प्र1 2 पापकर्म (→कारुकर्म), दे8 10 यजिज्याति- (दे10 °ति) (→तथा जीव) -d) का1 दे2 °यज्ञोऽपि, मुवँ मुए मुव °यज्ञादि (→°यज्ञोऽपि), प्र1 2 म1 कर्मत (→धर्मत), दे6 पाकयज्ञो विधेर्मत, दे8-10 कय-विक्रयण तथा, न1 प्रातयज्ञोपि धर्मत, द1 पाकयज्ञोविकर्मन

३९ दे9 ⊙ (द्र ३४ पा वि) -a) दे3 ततः स्थितेसु, दे4 ततस्ते तेषु, तै1 ततस्तु त्रिषु, प्र2 तत्र स्थितेषु, मुवँ. मुए तथा स्थितेषु (→तत स्थितेषु), ब2 3 दे2 प्र1 2 धर्मेषु, दे10 वर्त्तेषु, म1 कर्मेषु (→वर्णेषु) -b) दे4 °मायु (→°मान्), -c) दे3 गृहस्थश्च, म1 ग्रहस्थश्च (→गृहस्थ च), दे3 वनस्थश्च (→वनस्थ च) -d) दे1 ब्रह्मचारिणो (→ब्रह्मचारिणम्)

४० दे9 ○ (द्र ३४ पा वि) -a) दे10 अनया, म1 आग्नेयो (→अग्नयो), का1 तै1 °शूश्रुषा, दे1 °शुश्रुषा, न1 °शुश्रूपा (→°शुश्रूषा) -b) का1 यज्ञा, तै1 यज्ञ (→यज्ञो), प्र1 *न (→दान) -c) दे1 गृहस्थ* (→गृहस्थस्य)

४१ दे9 ⊙ (द्र ३४ पा वि) -a) दे8 होम (→होमो), दे1 °फलाभिल, दे1 2 °फलाशित्वं, प्र2 °फलाशि* (→°फलाशित्व) -b) म1 स्वाध्याय (→स्वाध्याय) -c) का1 सविभागे (→संविभागो), ब1 शान्+थाय, प्र1 ** (→न्याय), न1 तथा न्यायम् (→यथान्यायम्)

४२ दे9 abc ⊙ (द्र ३४ पा वि) -a) का1 दे1 2 6 द1 प्र2 म1 भिक्षाश(का1 दे2 °श)न, दे3 भैक्ष्याशनम्, न1 भैक्ष्याशनं

भिक्षाचर्या च शुश्रूषा गुरोः स्वाध्याय एव च ।
सन्ध्याकर्माग्निकार्यं च धर्मोऽयं ब्रह्मचारिणाम् ॥४३
ब्रह्मचारिवनस्थानां भिक्षुकाणां द्विजोत्तमाः ।
साधारणं ब्रह्मचर्यं प्रोवाच कमलोद्भवः ॥४४
ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः ।
पर्ववर्जं गृहस्थस्य ब्रह्मचर्यमुदाहृतम् ॥४५
आगर्भसंभवादाद्यात् कार्यं तेनाप्रमादतः ।
अकुर्वाणस्तु विप्रेन्द्रा भ्रूणहा तु प्रजायते ॥४६
वेदाभ्यासोऽन्वहं शक्त्या श्राद्धं चातिथिपूजनम् ।
गृहस्थस्य परो धर्मो देवताभ्यर्चनं तथा ॥४७
वैवाह्यमग्निमिन्धीत सायं प्रातर्यथाविधि ।
देशान्तरगतो वाथ मृतपत्नीक एव वा ॥४८
त्रयाणामाश्रमाणां तु गृहस्थो योनिरुच्यते ।
अन्ये तमुपजीवन्ति तस्माच्छ्रेयान् गृहाश्रमी ॥४९
ऐकाश्रम्यं गृहस्थस्य त्रयाणां श्रुतिदर्शनात् ।
तस्माद् गार्हस्थ्यमेवैकं विज्ञेयं धर्मसाधनम् ॥५० वे. १.२.

---

(→भैक्षाशन), दे10 मौनत्व, ग्र3 मौनत्त्व (→मौनित्व) –b) का1 मन्यस्था (ज्ञा) न, दे4 गगज्ञानं, न1 गम्यव्यान, म1 सत्यज्ञान (→अभ्यस्ता°) –d) का1 दे3 6 भिक्षुणां, ग्र1 2 म1 भैक्षु (म1 °क्ष) को (→भिक्षुके); न2 मत (→मत)

४३ –a) च1 भिक्षा च थ च (?), च3 भिक्षाचार्यं०, दे1 2 ते1 भिक्षाचर्यं, दे4 भिक्षाचर्यश्च, न1 भिक्षाचार्यं, ग्र2 भिक्षाचार्यपि (→भिक्षाचर्या च); ग्र1 ** षा (→शुश्रूषा) –b) दे1 ते1 ग्र1 गुरो, दे8 9 गुणा (→गुरोः) –c) का1 दे2 °कर्माग्नि कार्यं च, च1 °कर्माग्निहोत्रञ्च, + °कर्माग्निकार्यञ्च, न1 °धर्माग्निकार्यं च, ग्र3 °कर्माणि नर्यञ्च (→°कर्माग्निकार्यञ्च) –d) का1 च2 दे2 3 5 10 ब्रह्मचारिणः (→ब्रह्मचारिणाम्)

४४ –a) दे10 न1 ते1 म1 ब्रह्मचारी° (→ब्रह्मचारि°) –b) च1 3 दे5 10 भिक्षुकाना, दे3 भिक्षुणा च (→भिक्षुकाणां), का1 द्विजोत्तमा, + द्विजोत्तमः (→द्विजोत्तमाः) –c) ग्र2 साधारणं (→साधारणं)

४५ –a) च2 [अ]भिगमन, म1 [अ] भिगा (का) मित्व (→[अ]भिगामित्व). –b) का1 च1-3 दे2 6 स्वदारे च (→स्वदारेषु), च2 न चान्यथा, दे4 द1 ग्र1 2 म1 च नान्यत, दे8 न चा ** (→न चान्यत) –c) का1 °वर्जं (?), द1 न1 ग्र2 °वर्ज्य, दे10 °वर्ज्ं (→°वर्ज्जं)

४६ –a) दे10 प्रगर्भ° (→आगर्भ०), दे1 8 10 द1 ग्र1 2 म1 मुवं मुए मुव °धारशाद्, ते1 ** वाद् (→°सम्भवाद्), का1 च2 3 म1 यावत्, दे1 थद्यात्, दे4 यत्नात्, दे5 8-10 द1 ग्र1 2 म1 मुवं मुए मुव प्राज्ञा (दे10 °ज्ञो) (→आद्यात्) –b) च3 कामार्थितेन, दे1 कार्येन तेन, दे8 9 द1 ग्र1 2 म1 मुवं मुए मुव कार्या तेन, ते1 कार्यं चैव (→कार्यं तेन), दे2 प्रमादतः (→[अ] प्रमादतः), दे10 यतिस्वप्रमादतः (?) –c) दे1 अकुर्वाणस्के (→अकुर्वाणस्तु), द1 विप्रेन्द्र, दे3 6 ते1 विप्रेन्द्रो (→विप्रेन्द्रा). –d) का1 दे1-2 5 भ्रूणहत्या प्रजायते, दे4 भ्रूणहा सोपि जायते, दे8-10 ते1 मुवं मुए मुव भ्रूणहा तु (दे10 °ह)प जायते, द1 ग्र1 2 म1 भ्रूणहा चोपजायते

४७ दे1 ४७ b '°थातिथि-' ४८ b 'विधि' यावत् खण्डितम् –a) च1 3 भक्त्या, द1 ग्र1 चार्या, ग्र2 म1 कार्ये (→शक्त्या). –b) च2 म1 °भोजनम्, न1 °पूजनात् (→पूजनम्)

४८ दे1 ab ⊙ (द्र ४७ पा टि) –a) दे4 विवाह्यम् (→वैवाह्यम्), का1 अग्नि, + अग्ने, ते1 अग्नौ (→अग्निम्), का1 मन्वीयात्, + सघीत, दे2 8 मन्वीत, ते1 चिन्वीत (→इन्धीत), दे3 अग्निमन्धीत, दे4 अग्निमिषात् (?), न1 अग्निमथित्व, द1 अग्निमन्थीत (→अग्निमिन्धीत) –b) दे10 °विधि (→°विधि) –c) दे1 चाशान्तर° (→देशान्तर°), मुव °गते (→°गतो) –d) का1 °पत्नीक (→°पत्नीक), द1 8 8-10 न1 ते1 ग्र2 म1 मुवं मुए च (→वा), दे5 मृतपत्नीकरे-व वा, मुव सुतः पत्नीतिवेव वा

४९ –a) च1 3 ग्र2 म1 च(→तु) –b) दे4 गृहस्थे (→गृहस्थो), च2 मुनिरुच्यते, दे5 योनिपुच्यते, न1 यो निरुच्यते (→योनिरुच्यते), ग्र2 स गृहस्थो निरुच्यते –c) द1 तमुनि°, ग्र1 2 म1 तमनु° (→तमुप°) –d) ग्र2 °च्छ्रे.यो (→°च्छ्रेयान्), दे1 गृहीश्रमो (→गृहाश्रमी).

५० दे3 ५० d धर्म- ५१ a ह्यर्थो ⊙ (द्र. म). –a) का1 दे1-2 एकाश्रम्य, दे5 ते1 ग्र2 एकाश्रम, न1 आश्रयेन्य (→ऐकाश्रम्य), ग्र2 गृहस्तस्य (→गृहस्थस्य) –b) दे1 द1 ग्र1 2 म1 वर्णाना, दे8 9-10 मुवं, मुए मुव चतुर्णां (→त्रयाणा), न1 °चोदनात् (→°दर्शनात्) –c) दे10 गृहस्थ्यम्, न1 गार्हस्थम (→गार्हस्थ्यम्), ग्र1 3 म1 एवेदं (→एवैकं) –d) च1 कर्मं° (→धर्म°), ग्र2 श्रेयधर्मसमाश्रन.

वृ.१.२.२३ परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
सर्वलोकविरुद्धं च धर्ममप्याचरेन्न तु ॥५१
धर्मात् संजायते ह्यर्थो धर्मात् कामोऽभिजायते ।
धर्म एवापवर्गाय तस्माद् धर्मं समाश्रयेत् ॥५२
धर्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः ।
सत्त्वं रजस्तमश्चेति तस्माद्धर्मं समाश्रयेत् ॥५३
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥५४
यस्मिन् धर्मसमायुक्तावर्थकामौ व्यवस्थितौ ।
इह लोके सुखी भूत्वा प्रेत्यानन्त्याय कल्पते ॥५५
धर्मात् संजायते मोक्षो ह्यर्थात् कामोऽभिजायते ।
एवं साधनसाध्यत्वं चातुर्विध्ये प्रदर्शितम् ॥५६
य एवं वेद धर्मार्थकाममोक्षस्य मानवः ।
माहात्म्यं चानुतिष्ठेत स चानन्त्याय कल्पते ॥५७
तस्मादर्थं च कामं च त्यक्त्वा धर्मं समाश्रयेत् ।
धर्मात् संजायते सर्वमित्याहुर्ब्रह्मवादिनः ॥५८
धर्मेण धार्यते सर्वं जगत् स्थावरजङ्गमम् ।
अनादिनिधना शक्तिः सैषा ब्राह्मी द्विजोत्तमाः ॥५९
कर्मणा प्राप्यते धर्मो ज्ञानेन च न संशयः ।
तस्माज्ज्ञानेन सहितं कर्मयोगं समाचरेत् ॥६०

५१ [illegible]

५२ [illegible]

५३ [illegible]

५४ [illegible]

५५ [illegible]

५६ [illegible]

५७ [illegible]

५८ [illegible]

५९ [illegible]

६० [illegible]

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
ज्ञानपूर्वं निवृत्तं स्यात् प्रवृत्तं यदतोऽन्यथा ॥६१
निवृत्तं सेवमानस्तु याति तत् परमं पदम् ।
तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत् पुनः ॥६२
क्षमा दमो दया दानमलोभस्त्याग एव च ।
आर्जवं चानसूया च तीर्थानुसरणं तथा ॥६३
सत्यं सन्तोष आस्तिक्यं श्रद्धा चेन्द्रियनिग्रहः ।
देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ॥६४
अहिंसा प्रियवादित्वमपैशुन्यमकल्कता ।
सामासिकमिमं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥६५
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥६६
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तताम् ।
गान्धर्वं शूद्रजातीनां परिचारेण वर्तताम् ॥६७
अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् ।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम् ॥६८
सप्तर्षीणां तु यत्स्थानं स्मृतं तद् वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा ॥६९ वे १.२

६१ –a) दे1 ते1 द1 श्री2 प्रवृत्ति, दे5 प्रवृत्ता (→प्रवृत्त), दे1 तै1 द1 श्री2 निवृत्ति (→निवृत्त) –b) का1 धर्म (?), दे10 कर्म (→कर्म), दे1 वैदिक, दे17 एव च (→वैदिकम्). –c) दे8 •• पूर्व, म1 ज्ञान पूर्वं-, प्र2 ज्ञानपूर्णं (→ज्ञानपूर्वं), का1 व2 दे1-3 5 6 प्र2 निवृत्ति (दे6 प्र2 °त्ति) (→निवृत्तं), दे1 यत् (→स्यात्) –d) का1 व2 दे1-3 6 ते1 प्र2 प्रवृत्ति (दे3 6 प्र2 °त्ति), प्र2 यन्नतो (→यदतो), दे1 ज्ञानवर्जं यतोऽन्यथा

६२. –a) का1 व2 दे1-3 5 6 प्र2 निवृत्ति (व2 दे6 °त्ति) (→निवृत्त), व3 दे10 ते1 सेव्यमा° (→सेवमा°) –c) का1 व2 दे2 3 5 6 ते1 निवृत्ति (दे8 °त्ति), दे1 प्रवृत्तिभि, म1 निमित्त (→निवृत्त), का1 व2 दे1-3 5 6 ते1 गंसेव्या (→गंसे-व्यम्) –d) ते1 ह्यन्यथा (→मन्यथा), का1 दे2 द1 रास्मरेत्, दे11 गश्चरेत्, प्र2 [स]गुसरेत् (→ससरेत्), व1 नर (→पुन)

६३ दे7 d प्रक्षिप्तम् –a) म1 रक्षा, ते1 शमी (→क्षमा), दे1 5 दया (→दमो), दे4 5 दमा (→दया), व2 दान- (→दान) दे3 न लाभ, प्र2 प्रलोभ (→मलोभ) –c) दे3 गुण मार्जव (→मार्जवं), का1 व2 दे1 2 10 प्र1 2 गुणे गुण चानुसूया (→चानसूया) –d) व1 दे10 °सरण, व3 °सरण (→°सरणं), व2 तर, दे1 9 10 दया (→तथा)

६४ दे5 cd 'नाभ्य······विशे' प्रक्षिप्तम् –a) दे1 •• द17 सत्य- (→सत्य) व1 सन्तोर, दे1 2 9 10 पूर्वे पूर्ण, पूर्व सन्तोष दे8 • तोष (→सन्तोषः)

६५ दे5 bc '°मक······°धर्मं' प्रक्षिप्तम् –a) व2 °वादन (→°वादित्व) –b) का1 द2 मकल्कता, व2 दे5 मक • ता, व3 न1 दे10 द1 प्र1 म1 मकन्यता (व3 दे10 द1 °ना), दे1 मकता, दे4 मकट्टा (→मकल्कता) –c) प्र2 सामासिक-मत्यंत्व, व3 सामासिकममर्थं च, दे3 मामासिकमिदर्थं, दे8 सामासिकाम • धर्म, ते1 सामसिकामदं च, प्र2 सामासा इदन्धर्मं, म1 सामान्य (थि) कमिम धर्मं –d) का1 दे2 प्र1 चातुर्वर्ण्य (का1 °र्ण्यं), व1 म1 चातुर्वर्णे (→चातुर्वर्ण्ये); दे3 पुन, द1 प्र2 मुनि (→मनुः)

प्रन: पर दे10 पुस्तके प्रधिकम् –
•मपि ! भगवान् पत्नी नमस्तस्मै नमनम

६६ दे8 abc 'ब्राह्म······स्था' प्रक्षिप्तम् –b) का1 व1 3 दे2 3 श्रुत, व2 शुभ, ते1 कृत (?) (→स्मृत), का1 दे10 क्रियावती, व1 क्रियावनाम् (→क्रियावताम्) –c) द1 प्र1 2 म1 संग्रामेपि (→संग्रामेषु), का1 [प]लायिनी (→[प]लायिनाम्), दे10 संग्रामे च पलायनम्

६७ द1 व1 2 म1 ६७b–६६a ⊙ (१ प), दे3 ab 'वैश्यानाम······मनु' प्रक्षिप्तम्, प्र1 b ⊙. –b) का1 मनुवर्तन, व1 मनुवर्ति दे1 नर्तितिना, दे4 न1 मनुवर्तिना (→मनुवर्तताम्) –c) दे11 गन्धर्व- (→गान्धर्वं), दे10 शूद्र° (→शूद्र°) –d) दे1 परिचर्यानुवर्तिना, दे9 परिच······.

६८. द1 व1 2 म1 ⊙ (१ ६७ पा टि), न1 ६८d–७१a ⊙ (१ प.) दे3 ६८d–६९c यत्स्थान······प्राजापत्य' प्रक्षिप्तम्, दे1 9 10 ६८d–६९a ⊙ (१ प), दे8 a प्रक्षिप्तम् –a) ते1 सहस्राणि (→सहस्राणां) –b) द1 मुनीनां, दे1 ऋषीणां (→ऋषीणाम्) –c) दे3 स्मृति (→स्मृतं), ते1 च (→तु), व2 दिवि यत्तस्य स्थानं –d) दे3 गुरु° (→गुरु°)

६९ न1 ⊙ (१ ६८ पा टि), दे9 ab ⊙, दे1 9 10 द1 प्र1 2 म1 a ⊙ (१ ६८ पा टि) –a) व1 च (→तु) –b) व1 3 श्रुत (→स्मृत).

६९b अनन्तर व1 अधिकम्–
• शूद्रा गान्धर्वमाप्नोति शीघ्रनामभवम ।

तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ।
सांन्यासिकः स विज्ञेयो वानप्रस्थाश्रमे स्थितः ॥७९

योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः ।
ज्ञानाय वर्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥८०

यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ।
सम्यग् दर्शनसंपन्नः स योगी भिक्षुरुच्यते ॥८१

ज्ञानसंन्यासिनः केचिद् वेदसंन्यासिनोऽपरे ।
कर्मसंन्यासिनः केचित् त्रिविधाः पारमेष्ठिकाः ॥८२

योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च ।
तृतीयोऽत्याश्रमी प्रोक्तो योगमुत्तममास्थितः ॥८३

प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना ।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥८४

तस्मादेतद् विजानीध्वमाश्रमाणां चतुष्टयम् ।
सर्वेषु वेदशास्त्रेषु पञ्चमो नोपपद्यते ॥८५

एवं वर्णाश्रमान् सृष्ट्वा देवदेवो निरञ्जनः ।
दक्षादीन् प्राह विश्वात्मा सृजध्वं विविधाः प्रजाः ॥८६

ब्रह्मणो वचनात् पुत्रा दक्षाद्या मुनिसत्तमाः ।
असृजन्त प्रजाः सर्वा देवमानुषपूर्विकाः ॥८७

इत्येष भगवान् ब्रह्मा स्रष्टृत्वे स व्यवस्थितः ।
अहं वै पालयामीदं संहरिष्यति शूलभृत् ॥८८ वि. १.२.६१

---

७९ –a) दे8-10 कर्षितैत्यर्थं, न1 ग्र1 म1 कशितोत्यर्थं, द1 कशितोत्पर्थं (→कर्षितोऽत्यर्थं) –b) क1 ध्याम° (→ध्यान°); ब1 मत, + भवेत् (→भवेत्) –c) का1 ब2 दे1-8 सन्यासिक (दे6 °न), ब1 3 म1 सान्यासिक, दे10 सन्यासिक, द1 ग्र1 म1 सन्यसेत, ग्र2 सन्यस्तयो (→सान्यासिक) –d) दे3 वानप्रस्थो (→वानप्रस्था-)

८० –c) ग्र2 वर्तते (→वर्तते) –d) दे3 प्रोच्यते (→प्रोच्यते), का1 ब1-3 दे1 10 द1 म1 परमेष्ठिक (→पारमेष्ठिक)

८१ –a) का1 ग्र2 य आत्म°, ब3 यस्त्वात्म°, दे3 5 यपात्म°, ग्र2 य स्वात्म° (→यस्त्वात्म°), न1 °मति° (→°रति°), दे10 यस्त्वात्मनिरतो नित्य –b) दे4 6 महामति (→महामुनि), दे10 युगो निष्ठेमहामुनि

८२ दे6 न1 b c ⊙ (द दं) –a) ब1 2 ज्ञानग (?) स्यासिन ब3 ज्ञानसन्यासिनः, द1 ज्ञान सन्यासिन (→ज्ञानसन्यासिन) –b) का1 केचित्, दे1 कर्म– (→वेद–), ग्र1 2 म1 पर (→[प]परे) –c) दे1 वेद° (→कर्म°), ब1-3 दे2 3 °न (?) स्यासिन (→°सन्यासिन) –d) ब3 त्रिविधा (→त्रिविधा), दे10 विविधा परमेष्ठिर

८३ –a) ग्र2 त्रिविधा (→त्रिविधो) –b) दे1 म (?) स्य (→सांख्य) –c) ब1 2 दे1 2 मुख [प]त्यश (दे1 °त्यश?) श्रमी, ब3 चाश्रमः, दे4 चांतिमा, दे10 चाश्रमी, न1 द1 ग्र1 मुखे मुए त्याश्रमी, दे1 [प] त्याश्रमी, म1 [प] त्याश्रमः (→[प] त्याश्रमी), ग्र2 प्रोक्त (→प्रोक्ता), –d) ब2 दे1,6,8-10 दे1 द1 ग्र1 म1 मुखं, यदिव (दे1 °ना) मुए ग्र2 पाप (?) रा (→मास्थित).

८४ –a) ग्र1 प्रथमां (→प्रथमा), ग्र2 भवनात (→भावना), दे4 6 पूर्वं, दे1 पूर्वा (→पूर्वे) –b) दे4 सातो (?), दे1 सांख्या (→सांख्ये); दे10 चाक्षर° (→त्वक्षर°), दे1 °भावनात (→°भावना) –c) ब1 दे1 3 तृतीया (→तृतीये), दे3 ग्र2 चान्तिमा (ग्र2 °मो), ग1 चान्तिमा (→चान्तिमा), ब1 3 [इ] त्युक्तवा, ग्र2 प्रोक्त (→प्रोक्ता). –d) का1 दे10 द1 ग्र2 परमेश्वरी (→पारमेश्वरी).

८४ श्लोकस्यास्य दे3 पुस्तके अधिकम्—
योगमुत्तममास्थित । प्रथमा भावना पूर्वं सांख्याक्षर...
(= ८३d–८४b)

८५ –a) द1 ग्र1 2 म1 तस्मादेव (→तस्मादेतद्); का1 ग्र2 दे1 2 4 विजानीयाद्, न1 विजानी(ष्व)श्रम (→विजानीध्वम्) –b) ब3 चतुष्टयं (→चतुष्टयम्) –d) दे1 पञ्चमो (→पञ्चमो)

८६ ग्र1 ८६–९१b ⊙ –a) दे8 वर्णाश्रमा, न1 द1 वर्णाश्रम (न1 °मा) (→वर्णाश्रमान्), का1 म1 दृष्ट्वा (→सृष्ट्वा) –b) ग्र1 °देवं (→°देवो), न1 निरुपेण (→निरञ्जन) –c) दे8 दक्षादी (?) ग्र2 दी (?) दक्षादीन् (→दक्षादीन्), –d) ब1 त्रिविधा (?) (→विविधा)

८७ म1 ⊙ (द ८६ पा वि) –a) ग्र2 पुत्रान् (→पुत्रा[ ]) –b) ब2 °मुखया, दे1 °मसम (→°सत्तमा) –c) ब3 दे1 न1 असृजन्त (दे4 °न्ते ?), द1 ग्र1 2 असृज° (ग्र2 °जद्) न्ते (ग्र2 °ती) (→असृजन्त); दे8-10 ब2 सुरे, सर्वे (→सर्वा) –d) दे3 4 पूर्वे, °पूर्वका, न1 °पूर्विका (→°पूर्विका).

८८ म1 ⊙ (द ८६ पा. वि.). –a) का1 इत्येषा, दे8-10 द1 मुखे. इत्येव (दे10 °व) (→इत्येष); दे3 भग॰

वं.१.२११ तिस्रस्तु मूर्तयः प्रोक्ता ब्रह्मविष्णुमहेश्वराः ।
रजःसत्त्वतमोयोगात् परस्य परमात्मनः ॥८९
अन्योन्यमनुरक्तास्ते ह्यन्योन्यमुपजीविनः ।
अन्योन्यं प्रणताश्चैव लीलया परमेश्वराः ॥९०
ब्राह्मी माहेश्वरी चैव तथैवाक्षरभावना ।
तिस्रस्तु भावना रुद्रे वर्तन्ते सततं द्विजाः ॥९१
प्रवर्तते मय्यजस्रमाद्या चाक्षरभावना ।
द्वितीया ब्रह्मणः प्रोक्ता देवस्याक्षरभावना ॥९२

अहं चैव महादेवो न भिन्नौ परमार्थतः ।
विभज्य स्वेच्छयात्मानं सोऽन्तर्यामीश्वरः स्थितः ॥९३
त्रैलोक्यमखिलं स्रष्टुं स देवासुरमानुषम् ।
पुरुषः परतोऽव्यक्ताद् ब्रह्मत्वं समुपागमत् ॥९४
तस्माद् ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः ।
एकस्यैव स्मृतास्तिस्रस्तनूः कार्यवशात् प्रभोः ॥९५
तस्मात् सर्वप्रयत्नेन वन्द्याः पूज्याः प्रयत्नतः ।
यदीच्छेदचिरात् स्थानं यत्तन्मोक्षाख्यमव्ययम् ॥९६

(→भगवान्), द1 ब्रह्मन् (→ब्रह्मा) -b) क1 दे6 सृष्ट्वं, व2 सृष्ट्वर्थं, दे1 सृष्ट्वे॰, दे2 सृष्ट्वद, दे3 9 10 सृष्ट्वे (→स्रष्टुं वै) दे10 ग1 द1 ब2 स (ब2 मा) व्यवस्थित (ब2 °ता) (→मृत्व्यवस्थित), ब्र1 स्रष्टा सत्वे व्यवस्थित . -c) दे1 [ह]वि (→[ह]द). -d) दे2 शूलधृक्, न1 शूलभुक् (→शूलभृत्)

८९ म1 ⊙ (द्र ८६ पा. वि). -a) दे10 निमूस्तु (→तिस्रस्तु); ब1 मूर्तय[ ], दे10 मूतय (→मूर्तय ). -b) दे1 ब्रह्माविष्णु (→ब्रह्मविष्णु), व2 °शिवात्मिका, दे8 9 °महेश्वर (→महेश्वरा) -c) ब1 सत्वं (→सत्त्व-) -d) दे1 परमहात्मन (→परमात्मन), दे5 परम्परमहात्मन

८९ श्लोकस्य ab, cd मध्ये न1 अधिकम्

• एकस्यैव महेशस्य देवदेवस्य शूलिन ।

९०. म1 ⊙ (द्र ८६ पा वि) -b) दे1 म2 यन्यो, द1 ब1 सन्यो (→ह्यन्यो) -c) ब1 दे1 8-10 न1 ते1 मुर्वे सन्योन्य- (→अन्योन्य), दे5 प्रानता, दे8 प्रणता (→प्रणताश्) -d) दे4 10 न1 परमेश्वर (→परमेश्वरा)

९१ म1 ⊙ (द्र ८६ पा वि) -b) दे4 [ए]वेश्वर° न1 त्वक्षर°, ब1 चाक्षर° (→[ए]वाक्षर°). -c) दे4 रुद्रे (→रुद्रे) -d) का1 दे3 ब1 वर्तते, ब2 वर्तन्ति (→वर्तन्ते)

९२ म1 ⊙ (द्र ८६ पा वि), द1 प1 2 cd ⊙, ब1 'मय्य ........'क्षर' इति पत्रत्रुटि -a) क2 3 दे2-4 6 ते1 प्रवर्तन्ते, ब2 प्रवर्तते (→प्रवर्तते), का1 मय्यमं तु, दे1 ते1 मयाजस, दे3 मयं(?)जस्र, दे6 मयाजस्रं, ब2 मय्यजस्र (→मय्यजस्रम्) -b) का1 माद्यास्या (द्या)क्षर°, क1 2 दे6 ते1 मान्यामक्षर°, दे3 मान्याक्ष्याक्षर°, न1 यन्याक्षर°, मुए मुवे माद्याक्षर° (→माद्या चाक्षर°), क1 2 दे3-6 ते1 °भावना (→°भावना। -c) न1 द्वितीयो (→द्वितीया) -d) ते1 देवस्या-क्षर° (→देवस्याक्षर°)

९२ श्लोकस्य दे4 पुनर्वं अधिकम्—

• ........ तथैवाक्षर भावना ।
तिस्रस्तु भावना •रूद्रे वर्तन्ति सतत द्विजा ।
प्रवर्तते मय्यजस्र माद्याचाक्षरभावना ।
द्वितीया ब्रह्मण प्रोक्ता देवस्याक्षरभावना ।
(=९१d-९२)

९३ म1 ⊙ (द्र ८६ पा वि) -a) न1 °देवा (→°देवो) -b) ब1 दे5 6 ते1 मुवें. मुए भिन्नो (दे5 मुवें. मुए °न्न), व2 भिन्ना (→भिन्नौ), ब2 परमात्मन (→परमार्थत). -c) दे10 विभाज्य (?) (→विभज्य), दे3 स्वद्धया (?) (→स्वेच्छया) -d) प1 2 मन्तर्यामी (→सोऽन्तर्यामी), क1 [ई]श्वर स्थिर, प2 ईश्वरस्थित (→[ई]श्वर स्थित).

९४ म1 ⊙ (द्र ८६ पा वि) -a) दे3 माखिल (→अखिल), क3 श्रेष्ठ, दे1 स्रष्टो, दे10 ते1 सृष्ट्, म1 द्रष्टु (→स्रष्टु) -c) दे8 10 परमो (→परतो), का1 क2 3 6 न1 [ब्र]ह्मका दे1 4 [ब्र]ह्मतत्, दे8 9 मुवे मुए [ब्र]ह्मको, दे10 वग्नु (→[ब्र]ह्मत्वम्) -d) ते1 सष्टुत्व (→ब्रह्मत्व), क1 3 दे4 समुपागत (→समुपागमत्)

९५ म1 ab ⊙, न1. ९३c-९७ ⊙ -b) क1 3 प्रभु (→परः). -c) क1 3 दे5.8 प1 स्मृता स्रिया (क1 °स्तु), दे10 स्मृतिस्तन, प2 मृतास्तिस (→स्मृतास्तिस्रस्). -d) का1 दे5 तनु, ब1 दे8-10 मुवें मुए तनत, ब2 तनु, प2 दे4 द1 प्र1 2 तस्तत्, दे1 तत्र, दे3 सुहि ते1 तहि, म1 तस्मात्,मुव मूर्ती (→तनू), का1 ब1 दे9 10 द1 प्रभो ते1 स्मृता, प2 प्रभु (→प्रभो)

९६. म1 ⊙ -a) दे2 °प्रकारेण (→°प्रयत्नेन) -b) प2 विस्तवा, (→वन्द्या), क2 दे1 3 8-10 द2 प्र1 2 म1 मुवें, मुए विर्त्तियत (→प्रयत्नत) -c) क1 यदीच्छेद, ते1 यदि वेद, (→यदीच्छेद्), दे3 यचिरात्, द1 तु चिरात् (→दचिरात्), दे10 मात्र, ते1 मात्र (→स्थानं) -d) दे13 यमात्, प2 यत्तं (→यत्तन्); दे3 मोक्षात्तं (→मोक्षाख्य)

वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः ।
पूजयेद् भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥९७
चतुर्णामाश्रमाणां तु प्रोक्तोऽयं विधिवद्द्विजाः ।
आश्रमो वैष्णवो ब्राह्मो हराश्रम इति त्रयः ॥९८
तल्लिङ्गधारी सततं तद्भक्तजनवत्सलः ।
ध्यायेदथार्चयेदेता ब्रह्मविद्यापरायणः ॥९९
सर्वेषामेव भक्तानां शंभोर्लिङ्गमनुत्तमम् ।
सितेन भस्मना कार्यं ललाटे तु त्रिपुण्ड्रकम् ॥१००
यस्तु नारायणं देवं प्रपन्नः परमं पदम् ।
धारयेत् सर्वदा शूलं ललाटे गन्धवारिभिः ॥१०१
प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम् ।
तेषां ललाटे तिलकं धारणीयं तु सर्वदा ॥१०२
योऽसावनादिर्भूतादिः कालात्माऽसौ धृतो भवेत् ।
उपर्यधो भावयोगात् त्रिपुण्ड्रस्य तु धारणात् ॥१०३
यत्तत् प्रधानं त्रिगुणं ब्रह्मविष्णुशिवात्मकम् ।
धृतं त्रिशूलधरणाद् भवत्येव न संशयः ॥१०४
ब्रह्मतेजोमयं शुक्लं यदेतन् मण्डलं रवेः ।
भवत्येव धृतं स्थानमैश्वरं तिलके कृते ॥१०५
तस्मात् कार्यं त्रिशूलाङ्कं तथा च तिलकं शुभम् ।
त्रियायुषं च भक्तानां त्रयाणां विधिपूर्वकम् ॥१०६ सं.१.२.१

९७ न1 ⊙, दे1 10 bc ⊙ –a) व2 न्वर्णा° (→वर्णा°); व2 3 दे3 6 वर्णाश्रम (व2 3 °म) प्रयत्नेन. –b) द1 ब1.2 म1 प्रतिमयु (व2 °हृ) त (→प्रीतिसंयुत). –c) दे3 पूजयद् (→पूजयेद्); ते1 °यतेन (→°युक्तेन) –d) द1 दे8-10 प1 2 यावज्जीव- (→यावज्जीवं), प1 -प्रतिज्ञिया (→प्रतिज्ञया).

९८ –a) व2 चातुर्वर्णाश्रमाणान्तु –b) दे1 विविधो, दे10 च विधि, म1 विविध (→विधिवद्) –c) दे6 10 व2 ब्राह्मो (→ब्राह्मो) –d) दे3 दूराश्रम, दे6 शिवाश्रम, दे1 प1 ह[रि] प) राश्रम (→हराश्रम), दे1 स्मृत, + त्रय (→त्रय)

९९ –a) दे1 6-10 द1 प1 2 म1 मुद्रै मुए नित्यं (प1 °त्यं), दे5 गन० (→सततं) –b) म1 भक्त (→भक्त-) –c) प1 मर्यादेवांयेद् व3 प० र्चयेद्, दे1 प्रथार्चयेद्, द1 नदार्चयेद्, प2 तानर्चयेद् म3 तदार्चयेद् (→यथार्चयेद्) द3 प2 एवान दे8-10 तता (→एतान्).

१००. –a) व3 देवानां (→भक्तानां) –b) प1 शम्भो लिङ्गम, व2 ०० [लङ्ग, म3 श्रीलिङ्गम (→शम्भोर्लिङ्गम) –c) दे3 नमेन, न1 पि (ति) तेन, व2 न तेन (→सितेन), दे3 कार्यं (→कार्यं) –d) व2 ते1 च (→तु)

१०१ –a) द1 यस्तु (→यस्तु) –b) द3 प्रपन्न, दे1 प्रपन्न (→प्रपन्न) ते1 परम् (→परमं) –c) न1 म धार (→धारये) दे15 ऊर्ध्वं (→शूल) –d) म1 धारिणा, ते1 धारिभि (→वारिभि)

१०२ –a) दे1 प्रपन्ना, व2 प्रपद्यन्द (→प्रपन्ना ये) दे3 बीज (?) म1 बिन्दु (→बीजं). –c) म1 ललाट- (→ललाटे) ते1 तिलका (→तिलकं) –d) ते1 धारणं तत्तु सर्वदा, व2 धारिण्ये ० न्तु सर्वदा.

१०३ –a) दे1 5 र्° (→रो°), दे3 8 ग1 द1 म1 मनादि- (?) (→मनादिर्), दे10 भूतादि, न1-भूतादि (→भूतादिः). –b) न1 कालात्मा स, व2 कालात्मानो (→कालात्माऽसौ), व1 3 कृतो, व2 [भ]वो (→धृतो), दे3 8 [भ]वद् (→भवेत्), ते1 कालात्मा माध्यगो भवेत् –c) दे1 द1 उपर्यपो, दे8 उपार्यपो (→उपर्यधो), म3 दे3 8 प1 म1 भाग° (→भाव°), दे3 -योगात्, न1 -योगी (→योगात्), व2 उपरी ०००००० प –d) प1 त्रिपुण्ड्रस्य तु, म1 त्रिपुण्ड्रस्य, दे1 ते1 त्रिपुण्ड्रस्य च (→त्रिपुण्ड्रस्य तु), म1 धारणा, दे2 धारिणा (→धारणात्)

१०४ –a) दे1 प1 प्रधान-, ते1 तत्प्रधान, द1 ब1 2 म1 यत् प्रसादन्तु (→यत्तत् प्रधान) –c) ब1 3 दे1 6 ते1 त्रिशूल च (दे1 °च) स्यात्, दे1 त्रिशूलं स्यात्, दे2 3 4 8-10 मुद्रै मुए तु शूलधरणाद्, म1 त्रिशूलधरणं (→त्रिशूलधरणात्), व2 धृतिन्तु शूलधारणात् –d) दे1 भव(न)तेव, दे3 भवत्यव (→भवत्येव)

१०५ –a) व2 3 शुद्ध, दे5 शुभ्र (?), दे10 शुभं, द1 प1 2 म1 शुभ्र (→शुक्लं) –b) प1 यदेवम्, व2 य एवम्, म1 तदेव (→यदेतन्) द1 प1 2 म1 रवेन् (→रवे) –c) दे3 भवमेव, दे10 म(?)वत्व (→भवत्येव), व2 म1 धृत, द1 धृत (→धृतं), दे10 स्थान, ते1 नादेव (→स्थानम) –d) म1 ऐश्वर्य व2 ईश्वरे (→ऐश्वरं), दे5 [म]न्ते (?), म1 तु वै, द1 प1 2 म1 कृते (→कृते)

१०६. –a) दे3 कार्ये (?). दे10 कार्ये, व2 कार्य (→कार्यं), दे3 8 म1 त्रिशूलाङ्ग (→त्रिशूलाङ्कं). –b) म1 तथैव (→तथा च) –c) व1 ब1-3 दे2 5 6 मुद्रै मुए दुद्र त्र्यायुष-श्चापि, दे1 त्र्यायुषा चापि, दे3 त्र्यायुषश्चापि, दे० ॥ म2 त्र्यायुष भा

वॅ.१.२.१०९ यजेत जुहुयादग्नौ जपेद् दद्याज्जितेन्द्रियः ।
शान्तो दान्तो जितक्रोधो वर्णाश्रमविधानवित् ॥१०७

एवं परिचरेद् देवान् यावज्जीवं समाहितः ।
तेषां संस्थानमचलं सोऽचिरादधिगच्छति ॥१०८

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे द्वितीयोऽध्यायः ॥२॥

# ३

ऋषय ऊचुः ।

वर्णा भगवतोद्दिष्टाश्चत्वारोऽप्याश्रमास्तथा ।
इदानीं क्रममस्माकमाश्रमाणां वद प्रभो ॥१

श्रीकूर्म उवाच ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ॥२

उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
प्रव्रजेद् ब्रह्मचर्यात् तु यदीच्छेत् परमां गतिम् ॥३

---

(दे10 वा)पि, तै1 त्रयायुरेण, द1 अथायुप च, म2 ॰यायुपञ्च (→त्रियायुप च), दे1 भूतानां (→मतानां)

१०७ –a) का1 यजेत, दे10 जयेत, तै1 जपेच्च (→यजेत) –b) दे4 देवान् (→दद्यात्), य3 जप कुर्याज्जितेन्द्रिय –d) तै1 विभाग॰ (→विधान॰)

१०८. –a) दे3 एव (?) (→एव), तै1 पचचरेद् (→परिचरेद्), दे2 देव, तै1 देहान् (→देवान्), –b) दे10 यावज्जीव–(→यावज्जीव), दे10 समाहिता (→समाहित) –c) य1 3 दे1 4 5-8-10 ज3 द1 प1 2 मुबॅ. स्वस्थान, म1 सु स्थान (→संस्थानम्), दे10 द1 मतुल (→मचल) –d) य2 न चिराद्, तै1 यचिराद् (→सोऽचिराद्), का1 मधिगच्छति, दे4 एव गच्छति (→धिगच्छति)

पुष्पिका—

पुराणनाम—का1 दे3 इत्यादि महापुराणे, द1 इति कौर्मे, य1 य2 इति कूर्मपुराणे, य3 इति कौर्मे षट्साहस्र्यां संहितायां, दे1 8-10 द1 प1 मुबॅ मुए इति श्रीकूर्मपुराणे, दे2 इत्यादि महापुराणे कौर्मे, दे4 5 इत्यादि महापुराणे कौर्मे, दे6 इत्यादिमहापुराणे कूर्मे, न1 इति श्रीकूर्मे, तै1 इत्यादि महापुराणे कूर्मपुराणे, म1 श्रीकूर्मपुराणे, मुक. इति श्रीकूर्मे महापुराणे पूर्वभागे अध्यायनाम—द1 प1 म1 ○, का1 य1 दे2 3 श्रीकूर्मपुराणे (य3 ॰णे) वर्णाश्रमोपवर्णने, य1 2 दे2 4 म1 दे6 श्रीकूर्मपुराणे, दे8 9 वर्णाश्रमवर्णन, दे1 8-10 मुबॅ. मुए मुक. वर्णाश्रमवर्णनं नाम, दे5 वर्णाश्रमोपवर्णने, तै1 श्रीकृष्ण वर्णाश्रमोपवर्णने अध्यायसंख्या—का1 य1 3 दे1-3 8 9

न1 तै1 द1 प1 2 म1 द्वितीयोऽध्याय, य2 दे6 ॥२॥, दे10 मुबॅ मुए मुक द्वितीयोऽध्याय ॥२॥

३

ऋ द1 ○, दे1 ऋषय॰॰॰, दे10 ऋषय उवाच, म1 तै1 द1 प2 म1 ऋषय

१ –a) दे1 भगवतोद्दिष्टां, दे10 भगवतोद्दिष्टम्, तै1 द1 प1 2 म1 भगवतादिष्टाम् (→भगवतोद्दिष्टाः) –b) दे1 [श]प्याश्रमा, दे4 तै1 ह्याश्रमाः (→[अ]प्याश्रमा) –c) दे1 क्रममस्मा॰, न1 कर्मणास्माक (→क्रममस्माक) –d) दे1 ॰श्रमाणा (→श्रमाणां)

श्री. का1 य1 3 दे2 3 5 6 8-10 मुबॅ मुए कूर्म उवाच, दे4 श्रीभगवानुवाच, न1 प2 कूर्म, तै1 द1 म1 श्री कूर्म

२ –a) दे10 गृहस्थस्य, द3 य1 2 म1 गृहस्थाय, य3 गृहस्थो वा (→गृहस्थश्च) –b) का1 वाणप्रस्थो (→वानप्रस्थो) –d) का1 करणाद्, य2 तारण्याद् (→कारणाद्), दे1 प्रन्यथो (→न्यथा) य1 3 तै1 भवत्, य2 मुब नहि, दे8 8-10 न1 भवत् (→भवेत्)

३ –a) य1 प3 विज्ञान, दे5 मुबॅ विज्ञानी, द1 विज्ञाना (→विज्ञानो), म1 उत्पन्नज्ञान(विज्ञान)विज्ञाना –b) न1 वैराग्य (→वैराग्यं), दे8 गता (→गत) –c) द1 प्रव्रजे(?), य1 प्रव्रजन् (→प्रव्रजेत्), य2 दे3 6 ब्रह्मचर्यमेतु, य3 ब्रह्मचर्याय, द1 ब्रह्मचर्या तु, दे1 न1 ब्रह्मचर्या तु, तै1 ब्रह्मचर्याद्धे, द1 वनचर्या तु, प1 2 म1 वनचर्यां तु (→ब्रह्मचर्यात् तु) –d) य2 यदि गच्छेत् परां गति,

दारानाहृत्य विधिवदन्यथा विविधैर्मखैः ।
यजेदुत्पादयेत् पुत्रान् विरक्तो यदि संन्यसेत् ॥४

अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजम् ।
न गार्हस्थ्यं गृही त्यक्त्वा संन्यसेद् बुद्धिमान् द्विजः ॥५

अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ।
तत्रैव संन्यसेद् विद्वाननिष्ट्वापि द्विजोत्तमः ॥६

अन्यथा विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ।
तपस्तप्त्वा तपोयोगाद् विरक्तः संन्यसेद् यदि ॥७

वानप्रस्थाश्रमं गत्वा न गृहं प्रविशेत् पुनः ।
न संन्यासी वनं चाथ ब्रह्मचर्यं न साधकः ॥८

प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा द्विजः ।
प्रव्रजेत गृही विद्वान् वनाद् वा श्रुतिचोदनात् ॥९

प्रकर्तुमसमर्थोऽपि जुहोति यजति क्रियाः ।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद् द्विजः ॥१०

सर्वेषामेव वैराग्यं संन्यासाय विधीयते ।
पतत्येवाविरक्तो यः संन्यासं कर्तुमिच्छति ॥११ वे. १.३.-

४. -a) दे5 दारानाहृत्य, प्र2 दारानाश्रित्य (→दारान्नाहृत्य) -b) ब2 3 पुत्रार्थी, दे6 प्रथवा (→प्रन्यथा). -c) दे4 यजेनोत्पादयेत् (→यजेदुत्पादयेत्), दे6 पुत्राद् (→पुत्रान्). -d) ब2 3 दे5 प्र1.2 म1 सन्यसेत्, (→संन्यसेत्)

५ -a) व1 दे1-10 प्रनिष्ठा (?), प्र2 प्रनिष्ट्वा (→प्रनिष्ट्वा), ब3 म1 विधिवं (→विधिवद्). -b) ब3 प्र2 प्रनुत्पाद्य (→प्रनुत्पाद्य), दे1 [प्र]था (→तथा), दे1.3 8-10 ते1 द1 प्र1.2 म1 मुवें, मुए मुव [मा]त्मजान् (दे3 °जा), दे5 [प्रा]त्मज, न1 [प्रा]त्मक (ज) (→[प्रा]त्मजम्). -c) का1 ब1.2 दे3 5 6 न1 ते1 द1 म1 मुवें, मुए गार्हस्थ, दे1.10 गार्हस्था, प्र2 गार्हस्थ्य (→गार्हस्थ्यं), का1 गृहीकृत्वा, ब1.3 दे6 ते1 गृहीगत्वा, ब2 गृही•त्वा, दे8 9 गृहीत्वैव, दे10 गृहीत्वैव, न1 गृहीत्विय (?)(त्य)क्त्वा, द1 प्र1.2 म1 गृहीत्वा तु (→गृही त्यक्त्वा). -d) ब1 3 दे4-6 द1 म1 सन्यसेत् (→संन्यसेत्), दे1 बुद्धिसाश्रय, प्र2 बुद्धिमान् द्विजा (→बुद्धिमान् द्विज).

६ -a) ब3 प्र2 °योगेन (→°वेगेन) -b) का1 नोत्सहे• (→नोत्सहते), का1 दे2.3.5 गृहस्य, दे6 गृहगत (→गृहे) -c) दे6 तत्रैव, प्र2 तत्र वो (→तत्रैव), ब1 3 दे5 6 द1 सन्यसेत् (→संन्यसेत्) -d) न1 प्रनिष्ट्वाप्र, प्र2 प्रनिष्ट्वैव, द1 प्र1 म1 प्रनिष्ट्वैव, ते1 ब्रह्मनिष्ठो (→प्रनिष्ट्वापि), ब2 3 दे4 10 प्र2 द्विजोत्तमा (→द्विजोत्तम)

७ -a) द1 मुवें मुए मुव तथापि, दे8 9 द1 प्र1 यथापि दे10 यथापि, प्र2 यथा च, म1 यथवा (→प्रन्यथा) -b) का1 [प्र]थाश्रयेत्, दे8-10 [प]नाश्रयत्, (दे8 °यन्, दे9 °यत्) न1 [प्र]थाश्रयेत्, प्र2 म1 मुवें मुए मुव [प] याश्रयन् (प्र2 °यत्) (→[प्र]थाश्रयेत्) -c) ते1 प्रथास्तप्त्वा (→प्रपस्तप्त्वा), का1 ब1-3 दे3 ते1 तनो, दे4 यपो, द1 प्र1.2 म1 [प्र]पि वा (→तपो-), द1 प्र1.2 म1-वेगात् (→-योगात्) -d) दे6 विरक्ता (→विरक्त), ब2 3 दे2 द1 प्र1 म1 सन्यसेद् (→संन्यसेद्), द2 मुवें मुए मुव यदि, दे4-5 यदि, ते1 ••, प्र2 इति (→यदि)

८ -b) दे1 प्रविविशेत् (→प्रविशेत्) -c) ब1 सन्यासो च, ब3 स सन्यासी, (→न सन्यासी); दे3 वनवासाय, ते1 वन गच्छेत्, द1 प्र1.2 म1 वनावार (प्र2 °द्वा) स (→वनं चाथ). -d) का1 दे3 9 ब्रह्मचर्या (दे3 °र्यं) यं-, ब1 ब्रह्मचर्यस्व-, ब3 ब्रह्मचर्येण, दे1 ब्रह्मचर्यश्च (?), दे5 मुवें मुए मुव ब्रह्मचर्यञ्च (→ब्रह्मचर्यं न), दे4 8-10 ते1 साधव, न1 वा गृही (→साधक)

९ -a) ब2 दे1.4 प्राजापत्या (प्र2 °त्य) (→प्राजापत्यां), का1 निरूप्येष्टिम्, दे6 न1 निरूप्येष्टिन् (न1 °ष्टिम्) (→निरूप्येष्टिम्) -b) ब2 पुन, ब3 द1 म1 द्विजा (→द्विज). -c) ब1-3 दे1-6 न1 मुवें, मुए मुव प्रव्रजेतु (ब3 °स्व, दे1 °द्वा), प्र2 प्रव्रजीत (→प्रव्रजेत), ब1 3 दे1 2 गृहाद् (→गृही), का1 पृष्टभे तु गृहाद्विद्वान् -d) दे4 वनाद्वा, ते1 वनं वा, प्र1 म1 व्र(म1 वृ)ताद्वा (→वनाद्वा), दे8 9 श्रुतिनोदनात्, द1 प्र1.2 म1 इति चोदना (प्र2 °नात्) (→श्रुतिचोदनात्)

१० -a) ब1 5 य (→प्र-), दे1 न प्रवर्तुं समर्थोऽपि. -b) ते1 जुहो• (→जुहोति), ब1.3 यजति, दे1-10 यजति, ते1••• (→यजति), ब1 दे4 न1 क्रिया (→क्रिया) -c) प्र2 म1 पङ्गुर्दरिद्रो (→पङ्गुर्दरिद्रो) -d) ब1.2 द1 म1 सन्यसेत् (→संन्यसेत्), ब1 द्विज (→द्विज).

१० श्लोकानन्तर दे5 पुस्तके ८८—१०० प्राप्तम्.

११. -a) दे3 वैराग्य (?) (→वैराग्यं) -b) ब1-3 दे8 सन्यासाय, दे1 8-10 प्र1 मुवें मुए मुव. सन्यासे तु, द1 सन्यासे तु, प्र2 सन्यासेनि, म1 सन्यासेषु (→संन्यासाय) -c) दे4 पतत्येवो, दे8-10 एतत्सेवी (दे10 °वा), द1 म1 पतत्यथा-(→पतत्येवा-), का1 दे2 3 8 8-10 वा (→य.). -d) ब1-3 दे1 4 द1 सन्यास (→संन्यास), दे4 सहूँमि (→इच्छति).

बं. १.३.१२ एकस्मिन्नथवा सम्यग् वर्तेतामरणं द्विजः ।
श्रद्धावानाश्रमे युक्तः सोऽमृतत्वाय कल्पते ॥१२
न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः ।
स्वधर्मपालको नित्यं सोऽमृतत्वाय कल्पते ॥१३
ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ।
प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥१४
ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥१५
नाहं कर्ता सर्वमेतद् ब्रह्मैव कुरुते तथा ।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिः तत्त्वदर्शिभिः ॥१६
प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः ।
करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् ॥१७
यद्वा फलानां संन्यासं प्रकुर्यात् परमेश्वरे ।
कर्मणामेतदप्याहुः ब्रह्मार्पणमनुत्तमम् ॥१८
कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम् ।
क्रियते विदुषा कर्म तद्भवेदपि मोक्षदम् ॥१९
अन्यथा यदि कर्माणि कुर्यान्नित्यमपि द्विजः ।
अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥२०
तस्मात् सर्वप्रयत्नेन त्यक्त्वा कर्माश्रितं फलम् ।
अविद्वानपि कुर्वीत कर्माप्नोत्यचिरात् पदम् ॥२१
कर्मणा क्षीयते पापमैहिकं पौर्विकं तथा ।
मनः प्रसादमन्वेति ब्रह्म विज्ञायते ततः ॥२२

१२ –a) दे3 8 तै1 एतस्मिन्नथवा, दे10 एकस्मिन्**व (→एकस्मिन्नथवा) –b) दे3 वर्त्तत (→वर्तेत), का1 दे3 [आ]मरणा (दे3 °णात) द्विज, व1-3 दे3-6 [आ]मरणा (दे4 °ण) द्विजा, दे1 8 10 द1 प्र1 2 म1 मुवँ मुए मुव [आ] मरणान्ति (प्र2 °न्त्य) कम (→[आ]मरण द्विज) –c) व1 श्रद्धावनाश्रमे, दे3 6 श्रुत्वा वा (दे6 °चा) श्रमे (→श्रद्धावानाश्रमे), का1 युक्ते, दे4 युत, दे10 युक्ता, द1 म1 रक्त (→युक्त) –d) प्र2 [अ]नृतत्वाय (→[अ]मृतत्वाय)

१३ दे5 ○ (द स) –a) दे0 द1 न्यायधनगत (→न्यायागतधन), तै1 न्याय**धनश्शान्तो –b) द1 प्र1 2 म1 °विशारद (→°परायण) –c) व3 स्वकर्म° (→स्वधर्म°) –d) दे1 8-10 द1 प्र1 2 म1 मुव मुए मुव ब्रह्मभूयाय (→सोऽमृतत्वाय)

१४ –a) दे1 ब्रह्मण्याधाय (→ब्रह्मण्याधाय), द1 प्र1 म1 बुद्धिं वै (→कर्माणि) –b) दे1 3 नि सङ्गो (दे3 °ङ्गा) (→निःसङ्ग) –c) दे4 प्रशश्चो ऽव (→प्रसन्नेनैव)

१५ –a) दे10 ब्रह्माणं, न1 तै1 ब्रह्मणे (→ब्रह्मणा), तै1 **ते (→दीयते), दे6 म1 देव (→देय) –b) न1 तै1 द1 प्र1 3 ब्रह्मणा, तै1 ब्रह्माण (→ब्रह्मणे), तै2 *** यते (→संप्रदीयते) –c) तै1 धीयते (→दीयते) –d) तै1 ब्रह्मर्पणम् (→ब्रह्मार्पणम्) दे1 इमम् (→इदम्), तै1 पदम् (→परम्)

१६ –a) न1 अहम् (→नाहम्) –b) द1 यथा (→तथा) –c) दे5 प्रोक्ता (→प्रोक्त) –d) का1 तत° (→तत्त्व°), दे8 9 °दर्शिने, द1 °वादिभि (→°दर्शिभि)

१७ –a) व1 प्रीणाति, म1 प्रीणान्तु (?) (→प्रीणातु) –b) का1 दे3 4 8 9 तेन (→[अ]नेन) –c) द1 बुद्ध्वा (→बुद्ध्या).

१८. –a) व1 3 दे5-8 द1 प्र1 म1 सन्यास (→संन्यास) –b) दे1 5 10, परमेश्वर (दे5 °र, दे10 °र) (→परमेश्वरे) –c) दे1 न1 [आ]हु, द1 प्र1 3 म1 [उ]क्त (→[आ]हुः) –d) दे4 ब्राह्मणार्पणमुत्तमम्.

१९ –a) व3 दे8 9 तत्, प्र2 य (→यत्) –b द1 प्र2 म1 °वर्जित (→°वर्जितम्) –c) दे1 3 6 8 9 न1 विदुषा (→विदुषा), द1 प्र1 2 म1 कार्यं (→कर्म), –d) तै1 यति (→अपि).

२०. –a) दे5 8 9 द1 प्र1 2 म1 मुव मुए अथवा, (→अन्यथा) –b) व2 दे3 नित्यश्यपि (?) दे1 2 8 10 मुवँ मुए मुव नित्यान्यपि, द1 नित्य यति, प्र1 म1 नित्य यदि, प्र2 नित्यहितो (→नित्यमपि), दे4 द1 प्र1 2 म1 द्विजा (→द्विज) –c) व2 मयि (→कृत) व1 3 दे2 5 प्र1 °सन्यास (→°संन्यास), दे4 अफल नस्य संन्यास, प्र2 अकृत्वाग्नि फलत्यागी, म1 अकृत्वा तु फलन्यास –d) प्र2 बुध्यते (→बध्यते), दे4 5 यत् (→तत्), दे4 5 तत् (→तु)

२१ –b) का1 दे2 3 6 प्र1 2 म1 कर्माणि तत्, दे5 द1 कर्माश्रि तत् (→कर्माश्रित) –c) का1 कुर्वाण (→कुर्वीत) –d) व1 3 दे1 4 5 8-10 न1 मुवँ मुए मुव चिरात्, दे3 [अ]चिरात्, द1 प्र1 म1 च तत्, प्र3 *तत् (→[अ]चिरात्), दे1 तै1 परम्, प्र2 फल (→पदम्)

२२ –a) दे4 जायते (→क्षीयते) –b) म1 विहित (→ऐहिक) दे1 पूर्वक तै1 पार्थिक, द1 प्र1 2 पूर्विक, (→पौर्विक) –c) दे1 3 प्रासादम् (→प्रसादम्), का1 दे2 4 5 [अ]न्व्येति, तै1 [अ]न्येति (→[अ]न्वेति) –d) दे8 10 न1 द1 प्र1 म1 मुव मुए मुव °विज्ञायते (→विज्ञायते), दे8 10 मुवँ मुए मुव नत (→ततः).

कर्मणा सहिताज्ज्ञानात् सम्यग् योगोऽभिजायते ।
ज्ञानं च कर्मसहितं जायते दोषवर्जितम् ॥२३

तस्मात् सर्वप्रयत्नेन तत्र तत्राश्रमे रतः ।
कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयात् ॥२४

संप्राप्य परमं ज्ञानं नैष्कर्म्यं तत्प्रसादतः ।
एकाकी निर्ममः शान्तो जीवन्नेव विमुच्यते ॥२५

वीक्षते परमात्मानं परं ब्रह्म महेश्वरम् ।
नित्यानन्दं निराभासं तस्मिन्नेव लयं व्रजेत् ॥२६

तस्मात् सेवेत सततं कर्मयोगं प्रसन्नधीः ।
तृप्तये परमेशस्य तत् पदं याति शाश्वतम् ॥२७

एतद् वः कथितं सर्वं चातुराश्रम्यमुत्तमम् ।
न ह्येतत् समतिक्रम्य सिद्धिं विन्दति मानवः ॥२८ नं. १.३.२८

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे तृतीयोऽध्यायः ॥३॥

---

२३ –a) दे₄ सहितात् (?) (→सहितात्), न₁ ज्ञानाम् (→ज्ञानात्) –b) दे₄ [श्र]सम्यग् (?) (→सम्यग्), ते₁ सम्यगेवाभिजायते, द₁ य₁.₂ म₁ सम्यक् ज्ञान विधीयते. –c) य₂ दोषरहित (→कर्मसहित) –d) दे₅ °वर्जित. (→°वर्जितम्)

२४. –b) दे₁ ३ ५ ६ ८-१० मुवें. मुए मुव यत्र (→तत्र), य₂ ततदाश्रमे (→तत्र तत्राश्रमे), का₁ तत, दे₄ तर (?) (→रत) –c) दे₄ १० °तुल्य (दे₁₀ °ध्या)र्थं (→°तुष्ट्यर्थं) –d) दे₄ ते₁ कुर्वन् (→कुर्यात्); दे₃.₄ ८ न₁ नैष्कर्मम् (→नैष्कर्म्यम्), य₁ कुर्यान्निष्कर्मतामनुयात्

२५ –a) वे₁ चरम(?) (→परम) –b) य₃ नैष्कर्म्यम् (→नैष्कर्म्यम्), दे₃ स्वत् (→तत्) –c) य₂ म₁ निर्मल (→निर्मम), दे₁ शोतो(?) (→शान्तो) –d) दे₁ जीवनेव(?) (→जीवन्नेव)

२६ –a) का₁ व₁ ३ दे₁-३ ५ ६.१० वीक्ष्यते, द₁ वीक्ष्येत, य₁ म₁ वीक्षेव, य₂ वीक्षे तत् (→वीक्षते), दे₄ परमा॰ न, य₂ परमज्ञान (→परमात्मान). –b) य₂ पर–(→परं), दे₇ न₁ महेश्वर (→महेश्वरम्) –c) का₁ व₁-₃ दे₂ ३ ५ ६ ८-१० मुवें मुए. मुव नित्यानन्दी, दे₄ नित्यानन्द–(→नित्यानन्द), का₁ व₁ २ दे₂ ३ ५ ६ ८-१० मुवें मुए मुव निराभास (य₂ °प), (→निराभास) –d) दे₁ ६ तस्मिन्नेव (दे₆ °न्नेव) द₁ य₁ म₁ स्वयमेव (→तस्मिन्नेव)

२७. –a) दे₁ सेवत, य₂ सर्वेण (→सेवेत) –b) दे₁ प्रशान्तधी (→प्रसन्नधी) –c) दे₁₀ तृप्तय (→तृप्तये), य₁ च परेशस्य (→परमेशस्य). –d) दे₅ शा॰तम् (→शाश्वतम्).

२८. –a) वा₁ व₁.₂ दे₂-४ ६ ते₁ सम्यक् (→सर्वं) –b) दे₁ १० य₂ च (दे₁₀ चा) तुराश्रम (→चातुराश्रम्य), दे₉ °नुत्तमम् (?) (→°मुत्तमम्), दे₄ उत्तम ब्रह्म परम –c) दे₁ न ह्येतत्, दे₃ सर्वं तत्, य₂ न ह्येति (→न ह्येतत्) –d दे₁.₁₀ य₁ विन्दन्ति, ते₁ गच्छति (→विन्दति); दे₁ य₁ मानवा (→मानव)

न₁ पुस्तके २८ श्लोकस्य ab, cd चरणयोर्मध्ये अधिकम् —

*इदानीं श्रोतुमिच्छामि यथा सम्भवते जगत् (= १.४ २cd)

पुष्पिका—

पुराणनाम—का₁ इति श्री कौर्मपुराणे, व₁ दे₂ ₃ इति कौर्मे, व₂ दे₁ इति कूर्मपुराणे, व₃ इति महापुराणे कौर्मे, दे₄ न₁ इत्यादिमहापुराणे श्रीकू(न₁ कौ)र्मे, दे₅ इति कौर्मपुराणे, दे₆ इत्यादि महापुराणे कौर्मे, दे₈-₁₀ द₁ य₁.₂ म₁ मुवें मुए इति श्रीकूर्मपुराणे, ते₁ इत्यादि महापुराणे श्रीकूर्म पुराणे,मुव इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम— व₁ २ दे₄ म₁ द₁ य₁ २ म₁ ⊙, दे₁ ८ ९ चा(दे₁ च) तुराश्रम्य (दे₁ °म) वर्णन, दे₁₀ मुवें मुए मुव चातुराश्रम्य (दे₁₀ °म) वर्णन नाम, ते₁ चातुराश्रम्यं नाम. अध्यायसंख्या—दे₄ ○ का₁ व₁ ३ दे₁-₃ ९ न₁ ते₁ द₁ य₁ २ म₁ तृतीयोऽध्याय, दे₉ १० मुवें मुए. मुव. तृतीयोऽध्याय ॥३॥, य₂ ॥३॥

बं. १.३.१२ एकस्मिन्नथवा सम्यग् वर्तेतामरणं द्विजः ।
श्रद्धावानाश्रमे युक्तः सोऽमृतत्वाय कल्पते ॥१२
न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः ।
स्वधर्मपालको नित्यं सोऽमृतत्वाय कल्पते ॥१३
ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ।
प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥१४
ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥१५
नाहं कर्ता सर्वमेतद् ब्रह्मैव कुरुते तथा ।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिः तत्त्वदर्शिभिः ॥१६
प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः ।
करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् ॥१७
यद्वा फलानां संन्यासं प्रकुर्यात् परमेश्वरे ।
कर्मणामेतदप्याहुः ब्रह्मार्पणमनुत्तमम् ॥१८
कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम् ।
क्रियते विदुषा कर्म तद्भवेदपि मोक्षदम् ॥१९
अन्यथा यदि कर्माणि कुर्यान्नित्यमपि द्विजः ।
अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥२०
तस्मात् सर्वप्रयत्नेन त्यक्त्वा कर्माश्रितं फलम् ।
अविद्वानपि कुर्वीत कर्माप्नोत्यचिरात् पदम् ॥२१
कर्मणा क्षीयते पापमैहिकं पौर्विकं तथा ।
मनः प्रसादमन्वेति ब्रह्म विज्ञायते ततः ॥२२

---

१२ –a) दे३ ६ ते१ एतस्मिन्नथवा, दे१० एकस्मिंतेऽथ (→एकस्मिन्नथवा) –b) दे३ वर्तत (→वर्तेत), का१ दे२ [मा]मरणा (दे२ °णात्) द्विज, व१-३ दे३-६ [आ]मरणा (दे४ °ण) द्विजा, दे१ ८-१० द१ प्र१ २ म१ मुबे मुए मुब [मा] मरणान्ति (प्र२ °न्त्य) कम् (→[मा]मरण द्विज) –c) व१ श्रद्धावनाश्रमे, दे३ ६ श्रुत्वा वा (दे६ °चा) नाश्रमे (→श्रद्धावानाश्रमे), का१ युक्ते, दे४ युत, दे१० युक्ता, द१ म१ रक्त (→युक्त°) –d) प्र२ [म]नृतत्वाय (→[म]मृतत्वाय)

१३ दे५ ⊙ (द. स) –a) दे८ द१ न्यायागनगत (→न्यायागतधनः), ते१ न्याय••धनश्शान्तो –b) द१ प्र१ २ म१ °विशारद (→°परायण) –c) व३ स्वशर्म° (→स्वधर्म°) –d) दे१ ८-१० द१ प्र१ २ म१ मुबे मुए मुब ब्रह्मभूयाय (→सोऽमृतत्वाय)

१४ –a) दे१ ब्रह्मण्याधाय (→ब्रह्मण्याधाय), द१ प्र१ २ म१ बुद्धिं वै (→कर्माणि) –b) दे१ ३ निःसङ्गो (दे३ °ङ्गा) (→निःसङ्ग) –c) दे४ प्रशान्ते नैव (→प्रसन्नेनैव)

१५ –a) दे१० ब्रह्मणे, न१ ते१ ब्रह्मणे (→ब्रह्मणा), ते१ ••ते (→दीयते), दे६ म१ देव (→देय) –b) न१ ते१ द१ प्र१-३ ब्रह्मणा, ते१ ब्रह्मण (→ब्रह्मणे), ते२ ••• यते (→संप्रदीयते) –c) ते१ पीयते (→दीयते) –d) ते१ ब्रह्मार्पणम् (→ब्रह्मार्पणम्), द१ इमम् (→इदम्), ते१ पदम् (→परम्)

१६ –a) न१ महम् (→नाहम्) –b) द१ यथा (→तथा) –c) दे५ प्रोता (→प्रोक्त) –d) पा१ तत° (→तत्त्व°), दे८ ९ °दर्शिने, द१ °वादिभि (→°दर्शिभि)

१७ –a) व१ प्रीणाति, द१ प्रीणान्तु (?) (→प्रीणातु) –b) का१ दे३ ४ ८ ९ तेन (→[अ]नेन). –c) द१ बुद्ध्वा (→बुद्ध्या).

१८. –a) व१ ३ दे७-८ द१ प्र१ म१ सन्यास (→संन्यास) –b) दे१ ५ १०, परमेश्वर (दे५ °र, दे१० °र) (→परमेश्वरे) –c) दे१ न१ [प्या]हु, द१ प्र१-३ म१ [उ]क्त (→[प्या]हु) –d) दे४ ब्रह्मणार्पणमुत्तमम्.

१९. –a) व३ दे८ ९ तत्, प्र२ य (→यत्) –b) प्र२ म१ °वर्जित (→°वर्जितम्) –c) दे१ ३ ६ ८ ९ न१ निदुषा (→विदुषा), द१ प्र१-२ म१ कार्यं (→कर्म). –d) ते१ मपि (→मपि).

२०. –a) दे५-८ ९ द१ प्र१ २ म१ मुब मुए अथवा, (→अन्यथा) –b) व२ दे३ नित्यन्यपि (?), दे१ २ ३ १३ मुबे मुए मुब नित्यान्यपि, द१ नित्य मति, प्र१ म१ नित्य यदि, प्र२ नित्यहितो (→नित्यमपि), दे४ द१ प्र१ २ म१ द्विजा (→द्विज) –c) व२ मपि (→कृत-), प१-३ दे२ ५ प१ °सन्यास (→°संन्यास), दे१ मफल नद्य सन्यास, प्र२ मह्त्वापि फलत्यागी, म१ मह्त्वा तु फलन्यास –d) प्र२ बुध्यते (→बध्यते), दे४ ५ नद्य (→नत्-), द४ ५ तत् (→तु)

२१ –b) का१ दे२ ३ ८ प्र१ २ म१ कर्माणि तत्, द५ द१ कर्माश्रि तत् (→कर्माश्रित) –c) का१ कुर्वाण (→कुर्वीत). –d) व२ ३ दे१ ४ ५ ८-१० न१ मुबे मुए मुब विरात्, द१ [म]चिरात्, द१ प्र१ म१ च तत्-, प्र२ नत् (→[म]चिरात्), दे१ ते१ परम्, प्र२ पर (→पदम्).

२२ –a) दे४ जायते (→क्षीयते) –b) म१ विहिन (→ऐहिक), द१ पूर्वक, ते१ पार्थिव, द१ प्र१ २ पूर्विक, (→पौर्विक) –c) दे१ ३ प्रमादम (→प्रसादम), का१ दे२ ४ ५ [म]न्वेति, ते१ [म]न्यति (→[म]न्वेति) –d) दे१ १० न१ द१ प्र१ म१ मुबे मुए मुब °विज्ञायत (→विज्ञायते), दे८-१० मुबे मुए मुब मद (→तत).

कर्मणा सहिताज्ज्ञानात् सम्यग् योगोऽभिजायते ।
ज्ञानं च कर्मसहितं जायते दोषवर्जितम् ॥२३

तस्मात् सर्वप्रयत्नेन तत्र तत्राश्रमे रतः ।
कर्माणीश्वरतुष्टयर्थं कुर्यान्नैष्कर्म्यमाप्नुयात् ॥२४

संप्राप्य परमं ज्ञानं नैष्कर्म्यं तत्प्रसादतः ।
एकाकी निर्ममः शान्तो जीवन्नेव विमुच्यते ॥२५

वीक्षते परमात्मानं परं ब्रह्म महेश्वरम् ।
नित्यानन्दं निराभासं तस्मिन्नेव लयं व्रजेत् ॥२६

तस्मात् सेवेत सततं कर्मयोगं प्रसन्नधीः ।
तृप्तये परमेशस्य तत् पदं याति शाश्वतम् ॥२७

एतद् वः कथितं सर्वं चातुराश्रम्यमुत्तमम् ।
न ह्येतत् समतिक्रम्य सिद्धिं विन्दति मानवः ॥२८ वें १.३.२८

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे तृतीयोऽध्यायः ॥३॥

---

२३ –a) दे₄ सहिताज़ (?) (→सहिताज्), न₁ ज्ञानात् (→ज्ञानात्) –b) दे₄ [स]साम्यग् (?) (→सम्यग्), है₁ सम्यगेवाभिजायते, द₁ प्र₁-₂ म₁ सम्यक् ज्ञान विधीयते –c) प्र₂ दोषरहित (→वर्गसहित) –d) दे₅ °वर्जित (→°वर्जितम्)

२४ –b) दे₁ ३ ५ ६ ८-१० मुबं. मुए मुब यत्र (→तत्र), प्र₂ तत्तदाश्रमे (→तत्र तत्राश्रमे), श्रा₁ तत, दे₄ तर (?) (→रत) –c) दे₄ १० °मुष्य (दे₁₀ °ष्ट्या)र्थं (→°तुष्ट्यर्थं) –d) दे₄ है₁ कुर्वन् (→कुर्यात्); दे₃ ४ ८ न₁ नैष्कर्मण (→नैष्कर्म्यम्), प्र₁ कुर्यान्निष्कर्म्यताम्नुयात्

२५ –a) वे₁ परम(?) (→परम) –b) व₃ नैष्कर्म्यम् (→नैष्कर्म्यं), दे₃ तत्र (→तत्) –c) प्र₂ म₁ निर्मल (→निर्मम), दे₁ शोभो(?) (→शान्तो) –d) दे₁ जीवनेव(?) (→जीवन्नेव)

२६ –a) श्रा₁ व₁ ३ दे₁-३ ५ ६,१० वीक्ष्यते, द₁ वीक्ष्यत, प्र₁ म₁ वीक्षेत, प्र₂ वीक्षे तत् (→वीक्षते), दे₄ परमा॰ न, प्र₂ परमज्ञान (→परमात्मानं). –b) प्र₂ पर–(→परं), दे₇ न₁ महेश्वर (→महेश्वरम्) –c) श्रा₁ व₁ ३ दे₂ ३ ५ ६ ८ १० मुबं मुए मुब नित्यानन्दो, दे₄ नित्यानन्द–(→नित्यानन्द). श्रा₁ व₁ ₂ दे₂ ३ ५ ६ ८-१० मुबं मुए मुब निराभास (व₂ °प), (→निराभासं) –d) दे₁₀ तस्मिन्नेव (दे₆ °न्नेव) द₁ प्र₁ म₁ स्वयमेव (→तस्मिन्नेव)

२७ –a) दे₁ सेवत, प्र₂ सर्वेण (→सेवेत) –b) दे₁ प्रशस्तधी (→प्रसन्नधीः) –c) दे₁₀ तुष्टय (→तृप्तये), श्रा₁ च परेशस्य (→परमेशस्य) –d) दे₅ शा॰नत् (→शाश्वतम्)

२८ –a) श्रा₁ व₁ ₂ दे₂ ४ ६ दे₁ सम्यक् (→सर्वं) –b) दे₁ १० प्र₂ न (दे₁₀ चा) तुराश्रम (→चातुराश्रम्यम्), दे₉ °नुत्तमम् (?) (→°मुत्तमम्), दे₄ उत्तम ब्रह्म परम् –c) दे₁ न ह्येवत्, दे₃ सर्व तत्, प्र₂ न ह्येति (→न ह्येतत्) –d दे₁ १० श्रा₁ विन्दन्ति, ते₁ यच्छति (→विन्दति), दे₁ प्र₁ मानवा (→मानवः)

न₁ पुस्तके २८ श्लोकस्य ab, cd चरणयोर्मध्ये अधिकम् —

*इदानीं श्रोतुमिच्छामि यथा सम्भवते जगत् (= १.४.२cd)

पुष्पिका—

पुराणनाम—श्रा₁ इति श्री कौर्मपुराण, व₁ द₂ ३ इति कौर्मे, व₂ दे₁ इति कूर्मपुराणे, व₃ इति महापुराण कौर्म, दे₄ न₁ इत्यादिमहापुराणे श्रीकू(न₁ कौ)र्मे, द₁ इति कौर्मपुराणे, दे₆ इत्यादि महापुराणे कौर्मे, द₄ १० द₁ प्र₁ २ म₁ मुबं मुए इति श्रीकूर्मपुराण, ते₁ इत्यादि महापुराणे श्रीकूर्म पुराणे,मुब इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम—व₁ २ दे₄ न₁ द₁ प्र₁ २ म₁ ⊙, दे₁ ८ ९ चा(दे₁ च) तुराश्रम्य (दे₁ °म) कथन, दे₁₀ मुबं मुए मुब चातुराश्रम्य (दे₁₀ °म) कथन नाम ते₁ चातुराश्रम्य नाम अध्यायसंख्या—दे₈ ○ श्रा₁ व₁ ३ दे₁ ₇ ९ न₁ ते₁ द₁ प्र₁ २ म₁ तृतीयोऽध्याय, दे₈ १० मुबं मुए. मुब. तृतीयोऽध्याय ॥३॥, व₂ ॥३॥

१।१५।४९ सञ्चिन्त्य मनसा देवः सर्वज्ञानमयोऽमलः ।
नरस्यार्धतनुं कृत्वा सिंहस्यार्धतनुं तथा ॥४९
नृसिंहवपुरव्यक्तो हिरण्यकशिपोः पुरे ।
आविर्बभूव सहसा मोहयन् दैत्यपुङ्गवान् ॥५०
दंष्ट्राकरालो योगात्मा युगान्तदहनोपमः ।
समारुह्यात्मनः शक्तिं सर्वसंहारकारिकाम् ।
भाति नारायणोऽनन्तो यथा मध्यंदिने रविः ॥५१
दृष्ट्वा नृसिंहवपुषं प्रह्लादं ज्येष्ठपुत्रकम् ।
वधाय प्रेरयामास नरसिंहस्य सोऽसुरः ॥५२
इमं नृसिंहवपुषं पूर्वस्माद् बहुशक्तिकम् ।
सहैव त्वनुजैः सर्वैर्नाशयाशु मयेरितः ॥५३
तत्सन्नियोगादसुरः प्रह्लादो विष्णुमव्ययम् ।
युयुधे सर्वयत्नेन नरसिंहेन निर्जितः ॥५४
ततः सञ्चोदितो दैत्यो हिरण्याक्षस्तदानुजः ।
ध्यात्वा पशुपतेरस्त्रं ससर्ज च ननाद च ॥५५
तस्य देवादिदेवस्य विष्णोरमिततेजसः ।
न हानिमकरोदस्त्रं यथा देवस्य शूलिनः ॥५६
दृष्ट्वा पराहतं त्वस्त्रं प्रह्लादो भाग्यगौरवात् ।
मेने सर्वात्मकं देवं वासुदेवं सनातनम् ॥५७

---

४९ दे3 6 ◯ –a) द1 श्र1 2 म1 [श्र]चि (प (→देव) –b) म3 म1 °मयाहरि, द2 °मयोमल, म1 °मयोमय, + °मलोमल (→°मयोऽमल) –c) दे2 श्र2 °स्यार्थं (→°स्यार्ध-) दे° तनु (→ तनुं) –d) का1 व2 3 दे1 5 म1 तदा, दे2 तत (→तथा)

५० दे3 8 ◯ –a) दे1 नृशिह (→नृसिंह-), दे2 °तनु° (→°वपु°), व2 3 म1 °रव्ययो (→°रव्यक्तो) –b) व1 गृहे दे4 द1 श्र1 2 पुर, दे5 पुर (→पुरे) –ab) म1 हिरण्यकशिपु हन्तु नारसिंहवपुस्तदा –d) म1 मोहयन् (→मोहयन्), दे1 8 10 मुवँ मुए मुव °दानवान् (→°पुङ्गवान्), दे2 मोहयन्निव दानवान्

५१. दे3 8 ◯ –a) दे4 द1 श्र1 2 म1 दुर्धर्षो (→योगात्मा) –d) व2 °कारण, दे1 °कारणात्, दे2 व2 °कारिणी, द1 °करकाम्, श्र1 °कारक (→°कारिकाम्) –f) म1 रवि (→रविः)

५२ द3 8 ◯, दे4 ५२c–५३b ◯, दे8 10 ५२b ५३a ◯ (५ म1)–a) श्र2 दृष्ट्वा (→दृष्ट्वा), व1 3 दे5 तेसिंह° (→नृसिंह°), का1 दृष्ट्वा ते सिंहपुरुष, व1 दे8 8 10 मुवँ मुए मुव दृष्ट्वा नृसिंह (दे10 ह) पुरुष, दे1 नृसिंह वपुष दृष्ट्वा, दे1 द1 श्र1 2 दृष्ट्वा नृसिंह वपुष –c) म1 प्रहरण(?), दे1 विधाय (→वधाय), का1 व1 2 दे5 द1 श्र1 2 म1 प्रेषया° (→प्रेरया°), व1 दे5 दे1 प1 नारसिंहस्य, दे1 नृसिंहस्य च (→नरसिंहस्य)

५३ दे3 8 ◯, दे4 ab ◯, 8 10 a ◯ –a) व3 इद, दे1 दृष्ट्वा, दे5 द1 इय (→इम) व3 दे1 2 मुवँ मुए मुव नृसिंह (व3 ह) पुरुष, व2 नृसिंह वपुष (→नृसिंहवपुष) –b) व1 पूर्वमतुल्य, व2 पूर्वस्मादर-, म1 पूर्वस्मात्पर, दे2 पूर्वस्मादुप, दे8 10 म1 मुवँ मुए मुव पूर्वस्मा-द्रुत, दे1 पूर्वस्मादुप, द1 पूर्वस्मात्सम, श्र1 पूर्वस्मिन् द्रुत- (→पूर्वस्माद्बहु-), द1 शक्तिक (→ शक्तिक), म1 पुरुष पुरुषर्षभम् –c) य1 सह त्वम (→सहैव), दे1 2 द1 तनुजैः, दे5 दनुजैः, दे8 10 मुवँ मुए मुव तेऽनुजैः म1 मनुजैः (→त्वनुजैः) –d) का1 नाशयाशु, दे1 नाशायस (?) (→नाशयाशु), दे1 मयेरितम्, द1 प रथरित श्र2 वयेरित, म1 रथोस्यत (→मयरित)

५४ दे3 8 ◯ –a) दे1 2 8 10 मुवँ मुए, मुव स तन्नियोगाद् (→तत्सन्नियोगाद्), म1 तन्नियोगादसुरश्च –b) का1 दे1 4 5 10 द1 प्रह्लादा (→प्रह्लादो) –c) दे2 युयोधे (च ?) (→युयुधे) –d) दे1 यत्न, दे10 नजित (?), प्र° निर्जित (→निर्जित), द1 नृसिंहेन विवर्जित

५५ दे3 8 ◯, दे10 ५५d ५६c ◯, म1 d ◯ –a) दे2 स चादितो, दे8-10 मुवँ मुए समोहितो, दे1 स चोदितो, द1 श्र1 म1 स चोदितो, श्र2 सचोदितो (→सञ्चोदितो), दे1 दैत्यं (→दैत्यो), का1 तत सञ्चोदिता तेन –b) का1 हिरण्याक्ष, दे2 हिरण्याक्षस् (→हिरण्याक्षस्), प1 दे4 द1 श्र2 तदानुज, श्र1 सहानुज (→तदानुज), व1 हिरण्याक्षानुजास्तथा –c) द1 प1 म1 धृत्वा (→ध्यात्वा), म1 ध्यात्वा पाशुपतं १ट –d) दे1 स दानव (→ननाद च)

५६ दे10 abc ◯ –a) दे4 तस्या (?) (→तस्य), दे1 8-9 मुवँ मुए मुव देवा (दे1 °वो) धि° (→देवादि°) –c) दे6 प्रगो (→प्रास्त्र) –d) मुवँ मुव तथा (→यथा)

५७ म1 a ◯ –a) दे4 द1 प1 2 °वर (→°हृत), दे3-10 शस्त्र, दे1 द1 श्र1 2 तत्र (→त्वस्त्र) –b) का1 दे4 10 दे1 द1 प्रह्लादो (→प्रह्लादो), प्र1 भाग्य° (→भाग्य°) –c) दे8 मेने (→मेने), दे1 सर्वात्मना (→सर्वात्मकं) –d) व1 वासुदेव, दे4 सर्वात्मानं (→वासुदेव)

संत्यज्य सर्वशस्त्राणि सत्त्वयुक्तेन चेतसा ।
ननाम शिरसा देवं योगिना हृदयेशयम् ॥५८

स्तुत्वा नारायणैः स्तोत्रैः ऋग्यजुःसामसंभवैः ।
निवार्य पितरं भ्रातॄन् हिरण्याक्षं तदाऽब्रवीत् ॥५९

अयं नारायणोऽनन्तः शाश्वतो भगवानजः ।
पुराणपुरुषो देवो महायोगी जगन्मयः ॥६०

अयं धाता विधाता च स्वयंज्योतिर्निरञ्जनः ।
प्रधानपुरुषस्तत्त्वं मूलप्रकृतिरव्ययः ॥६१

ईश्वरः सर्वभूतानामन्तर्यामी गुणातिगः ।
गच्छध्वमेनं शरणं विष्णुमव्यक्तमव्ययम् ॥६२

एवमुक्ते सुदुर्बुद्धिर्हिरण्यकशिपुः स्वयम् ।
प्रोवाच पुत्रमत्यर्थं मोहितो विष्णुमायया ॥६३

अयं सर्वात्मना वध्यो नृसिंहोऽल्पपराक्रमः ।
समागतोऽस्मद्भवनमिदानीं कालचोदितः ॥६४

विहस्य पितरं पुत्रो वचः प्राह महामतिः ।
मा निन्दस्वैनमीशानं भूतानामेकमव्ययम् ॥६५

कथं देवो महादेवः शाश्वतः कालवर्जितः ।
कालेन हन्यते विष्णुः कालात्मा कालरूपधृक् ॥६६

ततः सुवर्णकशिपुर्दुरात्मा विधिचोदितः ।
निवारितोऽपि पुत्रेण युयोध हरिमव्ययम् ॥६७

संरक्तनयनोऽनन्तो हिरण्यनयनाग्रजम् ।
नखैर्विदारयामास प्रह्लादस्यैव पश्यतः ॥६८ वं १ १६.७४

५८ –a) का1 °शस्त्राणि,+°शास्त्राणि (→°शस्त्राणि) –b) दे2 द1 °युक्तेन (→°युक्तेन), दे4 प्र1 2 वेजसा (→चेतसा) –c) का1 दे8 10 नमामि (→ननाम) –d) दे10 हृदयाख्य, द1 प्र1 म1 हृदयगमम् (→हृदयेशयम्).

५९. –a) दे5 कृत्वा (→स्तुत्वा), का1 व3 5 6 ते1 म1 मुर्व, मुए मुब नारायण, ग1 नारायणो, दे4 प्र2 नारायण (→नारायणं) –c) दे9-10 पितरो (→पितर) –d) दे2 हिरण्याख्य (→हिरण्याक्ष), दे4 प्र1 म1 तथा प्र2 यथो (→तदा)

६०. –b) दे9 शास्त्रतो (→शाश्वतो), दे1 10 °नुज (→°नज) –c) व3 दे3 4 6 8 9 मुर्व मुए मुब पुराए, प्र2 पुराण (→पुराण-) –d) प्र2 महर्षय (→जगन्मय)

६१ –a) व3 स्वय ज्ञाता दे2 एष धाता (→अय धाता) –b) दे4 स्वययोनिर् (→स्वयंज्योतिर्) –c) व1 3 दे3 6 ते1 म1 प्रधान पुरुषम्, प्र2 प्रधानप्रकृतिस्, दे8-10 प्र1 मुर्व मुए मुब प्रधानं पुरुष, प्र2 प्रधानपुरुष (→प्रधानपुरुषस्) –d) का1 दे2 °रव्यय, व2 3 दे8 10 प्र1 मुर्व मुए मुब °रव्यया (→°रव्यय)

६२ –a) का1 व1 3 दे1 3 5-6 ते1 °भावानाम् (→°भूतानाम्) –b) न1 गुणोनित, प्र2 गुणाग्रधि (→गुणातिग) –c) का1 व1-5 दे3 5 6 म1 गच्छ त्व, ते1 गच्छ वै (→गच्छध्व), प्र2 पुरुष (→शरण) –d) दे1 2 10 मुब मच्युत (→मव्ययम्), व3 शरण विष्णुमच्युतम्

६३ –a) का1 व2-3 एवमुक्त त, व1 एवमुक्तेषु, दे2 5 6 प्र2 मुर्व मुब एवमुक्त सु-, दे3 एवमुक्ते सु-, दे4 एवमुक्तिस्तु ते1 एवमुक्तेन, द1 म1 एवमुक्ते न, (→एवमुक्ते सु-)

६४ –a) दे1 सर्वात्मको देवो, दे11 सर्वात्मनो वध्या, प्र2 सर्वात्मको वध्यो (→सर्वात्मना वध्यो) –b) प्र2 नृसिंहे स्वल्पपुरुष (?) –c) दे9 10 भुवन (→भवन), व1 प्र1 म1 समागतोऽहमान् (व1 °स्म) भगवान् द1 समाहितो स्मान्भगवान् –d) दे10 इदानीं कलशादिन (?)

६५ –a) ग1 प्राह (→पुत्रो) –b) द1 वाच (→वच), म1 पुत्रो (→प्राह), म1 °धृति (→°मति) –c) दे10 मा (→मा), द1 मानिन्द देवमीशान, दे4 द1 प्र1 म1 मा निन्दस्व तमीशान, दे1 मुनिन्द्रन् वं नमीशान, प्र2 मारीदस्वेकमीशान –d) दे1 ईश्वरम् (→मव्ययम्)

६६ –a) दे10 देवा (→देवो) –c) प्र2 स हन्यते तथा विष्णु –d) प्र2 कालात्मा कालयालधृक्

६७ –a) दे1 2 प्र2 हिरण्य° (→सुवर्ण°) –b) दे3 9 प्रोवाच, दे10*** (→दुरात्मा), द1 प्र1 2 म1 मुर्व मुए मुब कालचोदित, दे8 10 विधिनोदित (→विधिचोदित) –c) दे1 निरावृतोऽरि (→निवारितोऽपि) –d) दे4 न1 द1 प्र1 2 म1 मुर्व मुए मुब युयुधे (प्र1 °धेत्) (→युयोध)

६८ –a) दे10 सरस्तु (?) (→संरक्त), दे6 ते1 °नयना° (→°नयनो°) –b) दे3 6 °नयनाग्रज, प्र1 °नयनो-ग्रजम (→°नयनाग्रजम्) –d) का1 दे5 प्रह्लादस्य च, व1-3 दे3 प्रह्लादस्य च, दे1 4 10 द1 प्रह्लादस्यैव, ते1 प्रह्लादस्याय (→प्रह्लादस्यैव)

पं.१.१६.७४ हते हिरण्यकशिपौ हिरण्याक्षो महाबलः ।
विसृज्य पुत्रं प्रह्लादं दुद्रुवे भयविह्वलः ॥६९
अनुह्लादादयः पुत्रा अन्ये च शतशोऽसुराः ।
नृसिंहदेहसंभूतैः सिंहैर्नीता यमालयम् ॥७०
ततः संहृत्य तद्रूपं हरिर्नारायणः प्रभुः ।
स्वमेव परमं रूपं ययौ नारायणाह्वयम् ॥७१
गते नारायणे दैत्यः प्रह्लादोऽसुरसत्तमः ।
अभिषेकेण युक्तेन हिरण्याक्षमयोजयत् ॥७२
स बाधयामास सुरान् रणे जित्वा मुनीनपि ।
लब्ध्वाऽन्धकं महापुत्रं तपसाराध्य शंकरम् ॥७३
देवाञ्जित्वा सदेवेन्द्रान् क्षुब्ध्वा च धरणीमिमाम् ।
नीत्वा रसातलं चक्रे बन्दीमिन्दीवरप्रभाम् ॥७४
ततः सब्रह्मका देवाः परिम्लानमुखश्रियः ।
गत्वा विज्ञापयामासुर्विष्णवे हरिमन्दिरम् ॥७५
स चिन्तयित्वा विश्वात्मा तद्वधोपायमव्ययः ।
सर्वदेवमयं शुभ्रं वाराहं वपुराददे ॥७६
गत्वा हिरण्यनयनं हत्वा तं पुरुषोत्तमः ।
दंष्ट्रयोद्धारयामास कल्पादौ धरणीमिमाम् ॥७७
त्यक्त्वा वराहसंस्थानं संस्थाप्य च सुरद्विजान् ।
स्वामेव प्रकृतिं दिव्यां ययौ विष्णुः परं पदम् ॥७८

---

६९ दे8-10 ⊙ -a) दे1 °कशिपे (→°कशिपौ) -b) दे2 हिरण्याख्यो, प्र2 हिरण्याक्ष- (→हिरण्याक्षो) -c) दे3 विपृज्य (→विसृज्य), दे4 5 तै1 द1 प्रह्लाद (→प्रह्लाद)

७० -a) दे4 5-10 न1 द1 प्रह्लादा° (→अनुह्लादा°) -b) का1 व1-3 दे2 3 5 6 न1 तै1 ह्यन्ये च, प्र2**श्च (→अन्ये च) -c) व1 दे10 °देव° (→°देह°); दे3 समूत (→°संभूतैः) -d) दे3 नता (?), द1 नीतैः (?), प्र2 भूता (→नीता), दे1-3 8 8-10 मुर्व मुए मुब यमक्षयम् (→यमालय)

७१ व1 दे3 4 6 न1 तै1 द1 प्र1 2 म1 cd ⊙ -a) दे8 प्रहृत्य (→संहृत्य) -b) न1 नर-, प्र2 ययौ (→हरिर्); ब1 नारायणो गतः (→नारायण प्रभुः) -c) व2 3 रूप परम (→परम रूप) -d) व2 3 ययौ शाश्वतमव्ययम्, दे1 ययौ नारायण स्वयम्

७२ -a) प्र2 सता (→गते), प्र2 म1 नारायणा (→नारायणे), व1-3 दे3 6 दैत्यं, दे1 2 देव, न1 दैत्ये (→दैत्य) -b) का1 दे1 4 5 10 तै1 मुव प्रह्लादा° (→प्रह्लादो), दे2 दैत्य°, द1 सुर°(?) (→[म]सुर°) -c) का1 म1 दे1-4 6 9 10 द1 प्र1 म1 ह्यभिषेकेन (→ह्यभिषेकेण) -d) दे2 °क्षमस्थम् (→°क्षमस्थम्), दे5 17 मयोजगत, न1 मयोजयत्, द1 मयूजयत्, प्र1 मयाजनत् (→मयोजयत्)

७३ -a) दे2 बोधयामास (→बाधयामास) -b) का1 मुनीरपि,+मुनीनपि (→मुनीनपि) -c) तै1 लब्ध्वा चैव (?), द1 म1 लब्धानन्तरं, प्र2 लब्ध्या** (→लब्ध्वाऽन्धकं)

७४ म1 cd ⊙ -a) दे2 देवान् जित्वासेन्द्रादीन् -b) व3**ध्वा, दे2 लब्ध्वाप, दे4 9 लब्ध्वा च, दे8 मुर्व मुए मुव क्षुब्ध्वा च, दे10 कुब्ध्वा च (→क्षुब्ध्वा च) -c) दे1 रसातले (→रसातल) -d) का1 दे3 4 5 देवीम् (दे5 °विम्), व3 दे1 6 बन्दिम्, न1 बलिम् (→बन्दीम्), दे3 °प्रभ (→°प्रभाम्), दे8-10 मुर्व, मुए मुव वेदान्वं निष्प्रभात्तथा

७५ -a) तै1 सब्रह्मका, प्र2 सब्रह्मका (→सब्रह्मका) -b) दे1 परिम्लान (→परिम्लान-), दे4 °मुख, (→दे8 °मुखा (→°मुख-) -c) दे4 6 10 विज्ञापयामास (→विज्ञापयामासुर्) -d) प्र2 वैष्ण******

७६ प्र2. b खण्डितम् -a) दे2 सर्वात्मा (→विश्वात्मा) -c) व1**, दे2 °देह° (→°देव°), प्र2 शुभ (→शुभ्रं) -d) न1 प1 वराह (→वाराहं), प1 2 दे1 3 8 8-10 मुर्व मुए मुव वाराहस्य (→वाराह व-), दे3 4 8 न1 तै1 द1 प्र1 2 म1 -[रा]ददे (→[रा]ददे)

७७ -a) दे1 °तनय (→°नयन) -b) द1 पुरुषोत्तम (→पुरुषोत्तम) -c) व1 दे4 द1 म1 दंष्ट्रयोद्धा°, दे दंष्ट्रयोद्धा° (→दंष्ट्रयोद्धा°), का1 दे3 प्र1 इव, दे5 इम (→इमा), न1 पश्चादपि च रसाधुः

७८ -a) व2 दे8 8-10 तै1 द1 प्र1 मुर्व मुए मुव वाराह° (→वराह°). -b) दे2 संस्थाप्य वा-, दे8 मुव. मुए मुव. संस्थाप्यैव, दे9 संस्थाप्यैव, दे10 संस्था पैव, प्र1 समाप्य च (→संस्थाप्य च), व1 न1 सुरद्विपान् (?), दे4 सुरान् द्विजा, दे5 सुराद्विजान् (?), दे8-10 मुर्व, मुए, मुव, सुरद्विज, तै1 सुरद्विजान्+सुरद्विजा, द1 द्विजान् सुरान्, प्र1 2 सुरा द्विजान् (प्र2 जा), म1 समुत्पन्नं (→सुरद्विजान्), -c) दे1 प्रकृति (→प्रकृतिं); दे4 दिव्य (→दिव्यां) -d) म1 ययौ च परम पदम्

तस्मिन् हतेऽमरारिपो प्रह्लादो विष्णुतत्परः ।
अपालयत् स्वकं राज्यं भावं त्यक्त्वा तदाऽऽसुरम् ॥७९
इयाज विधिवद् देवान् विष्णोराराधने रतः ।
निःसपत्नं तदा राज्यं तस्यासीद् विष्णुवैभवात् ॥८०
ततः कदाचिदसुरो ब्राह्मणं गृहमागतम् ।
तापसं नार्चयामास देवानां चैव मायया ॥८१
स तेन तापसोऽत्यर्थं मोहितेनावमानितः ।
शशापासुरराजानं क्रोधसंरक्तलोचनः ॥८२
यत्तद्बलं समाश्रित्य ब्राह्मणानवमन्यसे ।
सा भक्तिर्वैष्णवी दिव्या विनाशं ते गमिष्यति ॥८३
इत्युक्त्वा प्रययौ तूर्णं प्रह्लादस्य गृहाद् द्विजः ।
मुमोह राज्यसंसक्तः सोऽपि शापबलात् ततः ॥८४
बाधयामास विप्रेन्द्रान् न विवेद जनार्दनम् ।
पितुर्वधमनुस्मृत्य क्रोधं चक्रे हरिं प्रति ॥८५
तयोः समभवद् युद्धं सुघोरं रोमहर्षणम् ।
नारायणस्य देवस्य प्रह्लादस्यामरद्विपः ॥८६
कृत्वा तु सुमहद् युद्धं विष्णुना तेन निर्जितः ।
पूर्वसंस्कारमाहात्म्यात् परस्मिन् पुरुषे हरौ ।
संजातं तस्य विज्ञानं शरण्यं शरणं ययौ ॥८७
ततः प्रभृति दैत्येन्द्रो ह्यनन्यां भक्तिमुद्वहन् ।
नारायणे महायोगमवाप पुरुषोत्तमे ॥८८ वे १ १६ ६४

---

७९ –a) दे$_{5}$ मुररिपौ (→[म]मरारिपौ) –b) दे$_{1\,4\,10}$ तै$_{1}$ द$_{1}$ प्रह्लादो (→प्रह्लादो), दे$_{3\,6}$ प्रह्लादो विष्णु मध्यप (दे$_{6}$ °य) –c) द$_{1}$ प्र$_{1}$ स्वप (→स्वक) –d) दे$_{10}$ भव (→भाव), का$_{1}$ द$_{1}$ प्र$_{1}$ म$_{1}$ तथासुरम्, प$_{2\,3}$ दे$_{9\,6}$ महासुरम् (→तदाऽऽसुरम्)

८० –a) दे$_{1\,3\,8\text{-}10}$ मुवँ मुए यजते, न$_{1}$ द$_{1}$ प्र$_{1}$ म$_{1}$ ययाज (→इयाज), दे$_{9}$ न$_{1}$ विधिना, प्र$_{2}$ विविधं (→विधिवद्) –c) दे$_{8\,10}$ मुवँ मुए मुव सदा, द$_{1}$ प्र$_{1}$ म$_{1}$ तथा (→तदा) –d) व$_{1}$ तदा° (→तस्या°), दे$_{4}$ °वैभवान् (?) (→°वैभवात्)

८१ –a) दे$_{1}$ तदा (→ततः), दे$_{8}$ °विदसुरो (?), म$_{1}$ °चिदस्थानो (?) (→°चिदसुरो). –b) का$_{1}$ व$_{3}$ दे$_{2\,3\,10}$ वे$_{1}$ ब्रह्माण (→ब्राह्मण) –c) द$_{1}$ नर्चया°, दे$_{2}$ नार्पया°, प्र$_{3}$ दर्चया° (?) (→नार्चया°), दे$_{8\text{-}10}$ मुवँ मुए न च समामयामास

८२ –b) दे$_{5}$ मोहितो (→मोहिते-), म$_{1}$ दे$_{1}$ °मानव (→°मानित) –c) व$_{3}$ शशाप, दे$_{6\,8\,9}$ सशा (दे$_{8}$ °शा) पा- (→शशापा-), का$_{1}$ व$_{1\text{-}3}$ दे$_{1\,3\,5}$ न$_{1}$ तै$_{1}$ °राज त, द$_{1}$ प्र$_{1\,2}$ म$_{1}$ °भाव त (→°राजान)

८३ –a) न$_{1}$ मत्त, तै$_{1}$ यस्या (→यत्तद्), म$_{1}$ बन्ध (→बल), म$_{1}$ समाहृत्य (→समाश्रित्य) –b) व$_{1}$ ब्राह्मणा° (→ब्राह्मणा°), दे$_{1\,4}$ ब्रह्मणा (दे$_{1}$ °णा) नावमन्यसे –c) दे$_{8}$ मुवँ मुए मुव भक्तिर्, तै$_{1}$ भक्ति(स्तु) (→भक्तिर्) –d) स$_{1}$ व$_{1\,3}$ दे$_{3\,5\,6}$ न$_{1}$ विनाश च (→विनाश ते); न$_{1}$ गमिष्यतु (→गमिष्यति)

८४ –a) का$_{1}$ इत्तु (→तूर्णं) –b) का$_{1}$ दे$_{1\,4\,10}$ तै$_{1}$ प्रह्लादस्य (→प्रह्लादस्य), का$_{1}$ द$_{1}$ महाद्विज, प्र$_{3}$ द्विजोत्तम (→गृहाद्द्विज) –c) व$_{1}$ (म)मुमोह, दे$_{10}$ स्वमोह (?), द$_{1}$ मुमोद (→मुमोह), व$_{3}$ राज्य, दे$_{4}$ राज-, न$_{1}$ राजा (→राज्य-), दे$_{1\,3}$ °म$_{1}$त्यक्तम् प्र$_{2}$ °सतप्तम्(→°संसक्त) –d) दे$_{10}$ तम (?) (→तत)

८५ –a) प्र$_{2}$ साध° (→बाध°), प्र$_{1}$ विप्रन्द्र, प्र$_{2}$ विप्रेन्द्र (→विप्रेन्द्रान्) –b) न$_{1}$ शपि वेद, द$_{1}$ न विभेद, प्र$_{2}$ न वै वेद, म$_{1}$ शपि देव (→न विवेद) –d) दे$_{1}$ बाधम् (→क्रोध)

८६ –b) दे$_{3\,6}$ सुमहद् (→सुघोर), प$_{3}$ नाम, दे$_{2\,3\,6}$ लोम (→रोम) –d) दे$_{1\,4\,10}$ तै$_{1}$ द$_{1}$ प्रह्लादस्या° (→प्रह्लादस्या°), व$_{2}$ प्रह्लादस्य सुरद्विप, प्र$_{3}$ प्रह्लादामरद्विप

८७ –a) दे$_{8\,9}$ मुवँ मुए मुव स (→तु), दे$_{1}$ समहद, न$_{1}$ स चिर (→सुमहद्), दे$_{1}$ इतयो समभवद्युद्ध, दे$_{10}$ इत्वा ममभवद्युद्ध –b) न$_{1}$ सहसा (→विष्णुना); दे$_{10}$ द$_{1}$ वर्जित (→निर्जित) –d) दे$_{1\,4}$ न$_{1}$ द$_{1}$ प्र$_{1}$ पुरुषो, दे$_{5}$ पुरुषं (→पुरुषे), दे$_{4}$ परौ (?) (→हरौ) –f) दे$_{2}$ ययौ स शरण हरिम्

८८ –a) दे$_{1}$ ह्यमन्या, म$_{1}$ ह्यादरात् (→ह्यनन्या) –c) दे$_{4\,10}$ नारायण-, वे$_{1}$ नारायणो (→नारायणे); प्र$_{2}$ योगी (→योगम्)

वें. १.१६.६६ हिरण्यकशिपोः पुत्रे योगसंसक्तचेतसि ।
अवाप तन्महद् राज्यमन्धकोऽसुरपुंगवः ॥८९
हिरण्यनेत्रतनयः शंभोर्देहसमुद्भवः ।
मन्दरस्थामुमां देवीं चकमे पर्वतात्मजाम् ॥९०
पुरा दारुवने पुण्ये मुनयो गृहमेधिनः ।
ईश्वराराधनार्थाय तपश्चेरुः सहस्रशः ॥९१
ततः कदाचिन्महती कालयोगेन दुस्तरा ।
अनावृष्टिरतीवोग्रा ह्यासीद् भूतविनाशिनी ॥९२
समेत्य सर्वे मुनयो गौतमं तपसां निधिम् ।
अयाचन्त क्षुधाविष्टा आहारं प्राणधारणम् ॥९३
स तेभ्यः प्रददावन्नं मृष्टं बहुतरं बुधः ।
सर्वे बुभुजिरे विप्रा निर्विशङ्केन चेतसा ॥९४
गते तु द्वादशे वर्षे कल्पान्त इव शंकरी ।
बभूव वृष्टिर्महती यथापूर्वमभूज्जगत् ॥९५
ततः सर्वे मुनिवराः समामन्त्र्य परस्परम् ।
महर्षिं गौतमं प्रोचुर्गच्छाम इति वेगतः ॥९६
निवारयामास च तान् कंचित् कालं यथासुखम् ।
उषित्वा मद्गृहेऽवश्यं गच्छध्वमिति पण्डिताः ॥९७
ततो मायामयीं सृष्ट्वा कृशां गां सर्व एव ते ।
समीपं प्रापयामासुर्गौतमस्य महात्मनः ॥९८
सोऽनुवीक्ष्य कृपाविष्टस्तस्याः संरक्षणोत्सुकः ।
गोष्ठे तां बन्धयामास स्पृष्टमात्रा ममार सा ॥९९

---

८९ –a) दे₁ पुत्रो (→पुत्रे) –b) का₁ व₂ ₃ दे₂ ₅ °संयुक्त°, दे₄ °सक्त°, प्र₂ °सहत्तं° (?) (→°संसक्त°) –c) का₁ व₂ दे₃ ₅ ₁₀ प्र₁ म₁ महाराज्य, प्र₂ महाप्राज्ञा (→महद्राज्य)

दे₂ b c मध्ये अधिकम्—

इति कौर्ममहापुराणे ॥ सूत उवाच

९० –a) का₁ व₃ दे₈ ₉ न₁ °नयन (→°तनय), द₁ प्र₁ हिरण्यनयनश्शम्भोर, प्र₂ हिरण्यतनयः शभोर्, म₁ हिरण्याक्षसुतश्शम्भोर –b) ते₁ शम्भोर्देव°, द₁ प्र₁ ₂ म₁ देहद्वय° (→शम्भोर्देह°) –c) ते₁ महादेवी, प्र₁ मुमादेवी, (→उमां देवीं), न₁ मन्दर तामुमादेवी –d) दे₁ चकम्पे, ते₁ चक्रमे, + कचमे (→चकमे)

९१ –a) दे₂ रम्य (→पुण्ये) –d) दे₁₀ चक्रे, ते₁ चक्रु (→चेरु)

९२ –a) दे₁ ₂ प्र₂ महता (→महती) –b) दे₂ दुस्तरा (→दुस्तरा) –c) दे₄-₈ वनी घाग्रा, प्र₂ मतीव्योग्रा (→मतीवोग्रा) –d) व₁ विनाशनी (→विनाशिनी)

९३ –a) दे₁ ₄ ₆ ते₁ द₁ प्र₁ म₁ सर्व- (→सर्वे) –b) दे₅ निधि (→निधिं) –c) का₁ व₂ म₁ मयाचत, व₁ ध्याचन्त, दे₁ प्रयाचन्ते (→मयाचन्त) –d) का₁ व₁-₃ दे₂ ₅ न₁ ते₁ ह्याहार, वे₁ ह्यहार, दे₃ ₆ ह्याधार (→माहार), दे₁ °धारक्ष (→°धारणम्)

९४ –a) दे₂ स तु तेभ्य प्रदावन्न, –b) का₁ दे₁ दृष्ट, व₁ श्रेष्ठ, दे₆ मृष्ट (→मृष्ट), दे₈ °विध, न₁ °धर (→°तर), द₁ प्र₁ ₂ म₁ बुधा (→बुध), प्र₂ ∗∗∗∗∗∗ बुधा –c) दे₁ सर्वेषु भुज रे विप्र (?) –d) द₁ प्र₂ तेजसा (→चेतसा)

९५ –a) दे₁ ₈ ₁₀ पूर्वे पूर्ण पुर्व च (→तु) –b) व₂ ₃ इह (→इव), व₁ दे₈ ₉ द₁ प्र₁ मुर्वे शङ्करी, न₁ शकरि (→शकरी) –c) व₂ म₁ बभूव महती वृष्टिर् (म₁ °ष्टिम्), –d) दे₁ द₁ प्र₁-₂ म₁ तोयपूर्णं दे₉ यथा पूर्वं (→यथा पूर्वं), दे₁₀ मथ जगत् (→मभूज्जगत्)

९६ –a) म₁ द₁ प्र₁ ₂ म₁ तत्र (→ततः) –c) द₁ महर्षिर् (→महर्षिं), का₁ व₁ ₃ दे₅ न₁ द₁ प्र₁ ब्रूयुर्, प्र₂ ब्रह्मन्, दे₃ ₆ प्राहुर्, ते₁ ब्रूयु, + ब्रुवन्, म₁ गत्वा (→प्रोचुर्) –d) व₃ दे₁ गच्छत (→वेगतः)

९७ –a) दे₁ ₂ ₄ रा तान् (→च तान्), दे₅ निवारयामास च तान् –d) दे₄ गच्छध्वमिति पण्डिता, न₁ गच्छध्वमिति पण्डिता

९७ श्लोकात् पर प्र₂ अधिकम्—

॥ ∗ इत्युक्त्वा सर्वमुनयो गौतम ∗ महात्मना ।

९८ –a) दे₁ दृष्ट्वा, द₅ बध्वा (→सृष्ट्वा) –b) का₁ व₁ ₃ दे₁ ₅ ते₁ कृशा गो (दे₅ °गौ), दे₃ कृशागां, दे₆ कृषागां, दे₈-₁₀ पुर्वे पुण्ये पुत्र कृष्णां गां (→कृशां गां); व₁ हि (→ते) –c) दे₁₀ प्राप्नुया° (→प्रापया°)

९९ –a) द₁ सोनुवीक्ष्य, प्र₂ सोनुदेश्य (→सोऽनुवीक्ष्य), दे₁ °विष्ट, दे₄ °दृष्ट (→°विष्ट) –b) म₁ तस्मात् (→तस्याः) –c) दे₁ ₁₀ बाधया°, दे₂ निरुन्धया°, न₁ बधया° (→बन्धया°) –d) व₃ पृष्ट° (→स्पृष्ट°).

स शोकेनाभिसंतप्तः कार्याकार्यं महामुनिः ।
न पश्यति स्म सहसा तादृशं मुनयोऽब्रुवन् ॥१००
गोवध्येयं द्विजश्रेष्ठ यावत् तव शरीरगा ।
तावत् तेऽन्नं न भोक्तव्यं गच्छामो वयमेव हि ॥१०१
तेन ते मुदिताः सन्तो देवदारुवनं शुभम् ।
जग्मुः पापवशं नीतास्तपश्चर्तुं यथा पुरा ॥१०२
स तेषां मायया जाता गोवध्या गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीवकोपनः ॥१०३
भविष्यन्ति त्रयीबाह्या महापातकिभिः समाः ।
बभूवुस्ते तथा शापाज्जायमानाः पुनः पुनः ॥१०४
सर्वे संप्राप्य देवेशं शंकरं विष्णुमव्ययम् ।
अस्तुवन् लौकिकैः स्तोत्रैरुच्छिष्टा इव सर्वगौ ॥१०५
देवदेवौ महादेवौ भक्तानामार्तिनाशनौ ।
कामवृत्त्या महायोगौ पापान्नस्त्रातुमर्हथः ॥१०६
तदा पार्श्वस्थितं विष्णुं संप्रेक्ष्य वृषभध्वजः ।
किमेतेषां भवेत् कार्यं प्राह पुण्यैषिणामिति ॥१०७
ततः स भगवान् विष्णुः शरण्यो भक्तवत्सलः ।
गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणतान् हरिः ॥१०८
न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर ।
संगच्छते महादेव धर्मो वेदाद् विनिर्बभौ ॥१०९ वें १।१६।११९

---

१०० -a) दे1 शोकेनापि° (→शोकेनाभि°) -b) दे1 वार्यं, दे3 कार्यं (→कार्यं) -c) दे0 न1 पश्यति स्म (→पश्यति स्म) -d) दे1 तान् दृष्ट्वा, दे8-10 मुवें मुए, मुव तमूचि, द1 ता वीक्ष्य (→तादृश), दे3 तादृश मुनयो ब्रवीत् (?), प्र2 तादृश मुनिरब्रवीत्

१०१ -a) का1 गोवध्येय, *गोविधोय दे1 3 4 प्र2 म1 गोवधोय, द1 गोवधेय प्र1 गोवधाय (→गोवध्येय), न1 म1 °श्रेष्ठा (→°श्रेष्ठ) -b) का1 व1 दे10 शरीरगा, दे1 2 4 5 9 द1 शरीरग प्र1 2 शरीरत, म1 शरीरगा (→शरीरगा) -c) व1 तै1 द1 प्र1 2 म1 तावत्त तेन (→तावत्तेऽन्न) -d) दे4 गच्छामोऽथ वय यहि, द1 प्र1 2 गच्छामोय वय यहि, म1 गच्छामापि वय वहि

१०२ -a) व2 दे1 2 8-10 प्र2 तेन तेनुमता, दे4 तेन चाश्रितार, दे5 मुव तेन तेऽनुदिता, म1 तेन ते दूषिता, मुवें मुए तेनातोनुमता (→तेन ते मुदिता) -c) का1 दे3 5 शाप° (→पाप°), व2 3 °वशा (→°वश), दे8-10 मुवें मुए नीत्या (→नीतास्) -d) दे2 तपस्तेपुर् (→तपश्चर्तुं)

१०३ -a) का1 दे1 जातो, दे2 जात, दे6 जाना (→जाता) -b) दे1 गोवधो, दे3 गोवध (→गोवध्या) -c) दे10 स्वसा (?) (→ज्ञात्वा) -d) म1 शशापातीव- (→शशापातीव), व1 दे1 3 4 8-10 मुवें मुए मुव °कोपत (→°कोपन)

१०४ -a) का1 व1-3 दे3 5 6 न1 तै1 भविष्यन्ति, दे2 द1 प्र1 म1 भविष्यथ (→भविष्यन्ति), प्र2 विविष्य धात्रीयोबाह्या -b) म1 °पातकिभम् (→°पातकिभिस्) -c) दे9-10 मुवें मुए मुव बहुशस् (→बभूवुस्), दे1 तेन, दे2 तदा, प्र2 यथा (→तथा), न1 शसा (→शापाज्) -d) व1 न1 प्र2 म1 जायमान (→जायमाना).

१०५ -a) का1 सर्वेश (→सर्वे स-), दे10 देवेषु (→देवेश) -b) म1 एव च (→मव्यय) -d) प्र2 *इन्ट (?) (→उच्छिष्टा), दे4 सर्वेका, तै1 सर्वगौ, द1 प2 सेवका, प्र1 सायका, म1 मायका (→सर्वगौ)

१०६ -a) दे1 2 ऊचुर्देवो, दे3 देवे देवौ, दे4 10 देव-देवौ प्र2 देवदेव- (→देवदेवौ), दे4 महादेवो (→महादेवौ), दे1 °नाशको, द1 नाशन, म1 °शासनौ (→°नाशनौ) -c) का1 कामवृत्तिर्, व1 दे2 3 5 6 कालो वृत्तिर्, व2 कालमूर्ती, व3 कालो वृत्ती, दे1 कामा वृत्तिर्, दे4 यानो वृत्तिर्, न1 यानोर्वृत्तिर् (?), तै1 द1 प्र1 म1 कानो वृत्तिर्, प्र2 कीलवृत्तिर् (→कामवृत्त्या), का1 महायोगा दे4 महायोग (→महायोगौ) -d) का1 पपापो (?), दे2 विप्रान् नस् दे5 पापार्तो, द1 पापान्नाम् (→पापान्नस्), का1 दे5 म1 मर्हथ, दे1 मर्हसि, दे4 मर्हति, दे8-10 मुवें मुए मुव मर्हत (→मर्हथ)

१०७ म1 d ○ -a) म1 तथा, दे4 द1 प्र1 म1 तत (→तदा), दे6 °स्थिता(?), म1 °स्थिति(?) (→°स्थित) -b) दे0 °ध्वज (→°ध्वज) -c) दे1 द1 प्र2 यस्मिन् तेषां, (→किमतेषा) का1 भवत् (→भवेत्), प्र1 यमस्तेषां भवेत्केन -d) दे4 प्राप्य, प्र1 मम (→प्राह), का1 पुण्येषिनाम्, दे1 पुण्येष्विनाम् प्र1 2 म1 पुण्यपि (म1 °प)णाम् (→पुण्यैषिणाम्), दे2 प्र2 यदि, दे4 इते(?) (→इति)

१०८ म1 ⊙ -b) दे3 शरण्यो(?) (→शरण्यो), दे5 भक्ति° (→भक्त°) -c) प्र2 गोपति (→गोपतिं), प्र2 विप्रेश (→विप्रेन्द्रान्) -d) प्र2 दानालोक्य(?) (→नालोक्य), दे10 हरिम् (→हरि)

१०९ -a) न1 द1 प्र2 म1 °बाह्य- (→°बाह्ये), दे4 पुरुषा, न1 पुर्षे (→पुरुषे) -b) व1 पुण्यलेशश्च, दे4 पुण्य लेषोपि, प्र2 पुण्यलोकोपि (→पुण्यलेशोपि); का1 व3 दे10

वे।११६।११६ तथापि भक्तवात्सल्याद् रक्षितव्या महेश्वर ।
अस्माभिः सर्वं एवेमे गन्तारो नरकानपि ॥११०
तस्माद् वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यामो वृषध्वज ॥१११
एवं संबोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥११२
कापालं नाकुलं वामं भैरवं पूर्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥११३
सृष्ट्वा तानूचतुर्देवौ कुर्वाणाः शास्त्रचोदितम् ।
पतन्तो निरये घोरे बहून् कल्पान् पुनः पुनः ॥११४
जायन्तो मानुषे लोके क्षीणपापचयास्ततः ।
ईश्वराराधनबलाद् गच्छध्वं सुकृतां गतिम् ।
वर्तध्वं मत्प्रसादेन नान्यथा निष्कृतिर्हि वः ॥११५
एवमीश्वरविष्णुभ्यां चोदितास्ते महर्षयः ।
आदेशं प्रत्यपद्यन्त शिरसाऽसुरविद्विषो ॥११६

---

म1 2 शरर (→शंकर) –c) का1 व2 3 दे3 5 6 सगच्छति, दे10 सगच्छसे, म2 मगच्छन्ते (→सगच्छते), का2 म3 °देव (→°दैव) –d) व2 कुधो (→धर्मो), व3 वेदा वि-, दे4 वेदान्वि-, दे10 वेदाधि-, म1 2 वेदार्थ-, म1 वेदाद्धि (→वेदाद् वि-), म1 वेदाद् धर्मो हि निर्बभौ

११० –a) व3 दे1 4-8 भक्ति-, दे9 भक्ता (→भक्त) –b) दे1 रक्षितव्यो, दे10 ईप्सितव्यो (→रक्षितव्या), व1 दे5 6 द1 महेश्वर, दे4 महाश्वरान् (→महेश्वर) –c) म1 भावाहरा (→अस्माभि), का1 एव मे(?), दे1 3 8-10 म1 मुवं मुए मुव एवंहे (→एवेमे) –d) न1 विप्रा वै नात्र राशय

१११ दे10 ११०d–१११c ○ (र स) –a) दे8 10 मुवं मुए मुव तस्माद्धि (→तस्माद्वै), दे4 देव° (→वेद°) –b) व3 रक्षणाय च, दे3 रञ्जनार्थाय (→रक्षणार्थाय), व1 प्राणिनाम् (→पापिनाम्) –c) का1 दे5 न1 विमोहनानि, दे9 विमोहनायच(?), प्र1 विमाहन ना(?), म1 विमोहनानि(?) (→विमोहनाय) –d) व1 दे3 6 न1 ते1 द1 प्र1 म1 करिष्यावो (→करिष्यामो), दे1 3 6 म1 2 म1 मुवं मुए मुव °ध्वज, दे4 °ध्वजम् (→°ध्वज)

११२ दे10 abc ○ –a) का1 संबोधितो, + सभाषिता, दे2 सभाषितो (→संबोधितो) –b) का1 माधवेन मुरा°, + माधवेनासुरा°, दे1-3 5 6 ते1 माधवेना (दे5 ते1 °न, दे4 °न) मुरा° (→माधवेन मुरा°) –d) दे1 शिवे रति, द10 शिवे रत (→शिवेरित), दे4 केशिवोऽपि शिवोऽपि च, प्र2 केशवाणि निवेशित

११३ –a) व2 3 दे3 दे1 कपाल, दे3 6 गपाल, (→कापाल), का1 दे5 नाकुल, व1 नकुल, दे1 कामल, दे3 नाकुच, + नाकुल, दे6 10 न1 द1 प्र1 नाकुर, ते1 नाकल म1 नकुट (→नाकुलं), दे1 (मा)वाम, दे6 वाम-, ते1 धारि, प्र1 याम (→वामं) –b) द1 °पश्चिमे (→°पश्चिम), दे1 भैरव पाश्चवाश्चिमम –ab) दे4 कापालकथा ************ –c) दे4 प्र1 2 पाञ्चरात्र, दे5 पाञ्चपात्र, दे10 पञ्चरात्रि (→पञ्चरात्र), दे5 पाशुपूत दे10 पाशुपति (→पाशुपत) –d) दे1 चान्यानि च, दे5 तथान्यानि (→तथान्यानि).

११४ –a) का1 दे3 6 देवो (→देवौ), दे8 10 मुवं मुए मुव सृष्ट्वा ता (दे10 °ता ?)न्या (मुवं मुए मुव °ना) ह (दे9 °ह) निर्वेदा –b) दे4 म2 कुर्वाणो, न1 कारणा, प्र1 कुर्वाण (→कुर्वाणा), द1 प्र1 2 म1 °शोदितम् (प्र2 °तौ, म1 °त) (→°चोदितम्) –c) का1 दे2 5 पतन्ते, व1 तपन्ते, दे3 एवन्तो द1 प्र1 2 म1 पतन्ति (→पतन्तो), दे8 10 म1 मुवं मुए मुव नरके (→निरये) –d) दे2 बहुदान दे5 कल्याम न1 कालान् (→कल्पान्)

११५ दे10 ११५c–११६b ○, प्र2 ११५b 'नत' इत्यारभ्य ११७b 'रता' यावत् ○ –a) का1 व3 दे1 3 6 10 ते1 जायन्ते, दे4 जयन्ते, दे5 शृण्वते, द1 सञ्जातो, प्र1 गच्छाते, म1 सञ्जाता, प्र2 एवन्ते (→जायन्तो) –b) का1 व1 3 दे3-6 °पुण्य° (→°पाप°), न1 क्षीणपुण्यचयास्तत, द1 क्षीणपुण्यचयास्तु न, प्र1 क्षापो पुण्यचयोस्तु म, प्र2 क्षेयपुण्यचया **, म1 क्षीणपापचयास्थित –c) दे2 °पता (→°बलाद्) –d) दे3 6 सुहृदा (→सुकृतां) –e) का1 न1 प्रप्रदानेन, व2 3 प्र1 म1 मत्प्रसादेन, दे3 द1 मत्सादेन, दे5 मत्प्रसादेन (?) (→मत्प्रसादेन), दे4 तत्तद्धर्मप्रसादेन –f) दे1 नान्या निष्कृतिरेव, दे4 द1 प्र1 म1 ना यथानि गनिहि (दे4 हि) व

११६ प्र2 ○, दे10 ab ○ –b) दे1 द1 प्र1 म1 बोधिताम्, व3 चोदितम्, ते1 बोधिताम् (?) (→चोदिताम्). –c) का1 मादेश, दे1 प्रदेश (→मादेश), दे2 तात्पद्म न, दे3 गात्यपद्यन्त, दे8 प्रत्यपद्यन्त, दे10 प्रत्यपद्येन, न1 प्रतिपद्यन्त (→प्रत्यपद्यन्त) –d) दे1 शरसा, दे6 सुरसा, दे8-10 मुवं मुए मुव शिरस्या-, ते1 शिरसा (→शिरसा-), दे3 स्वर-, दे4

कुत्स्तेऽन्यानि शास्त्राणि तत्र तत्र रताः पुनः ।
शिष्यानध्यापयामासुर्दर्शयित्वा फलानि तु ॥११७
मोहयन्त इमं लोकमवतीर्य महीतले । -
चकार शंकरो भिक्षां हितार्थाय द्विजैः सह ॥११८
कपालमालाभरणः प्रेतभस्मावगुण्ठितः ।
विमोहयँल्लोकमिमं जटामण्डलमण्डितः ॥११९
निक्षिप्य पार्वतीं देवीं विष्णावमिततेजसि ।
नियोज्याङ्गभवं रुद्रं भैरवं दुष्टनिग्रहे ॥१२०
दत्त्वा नारायणे देवीं नन्दिनं कुलनन्दिनम् ।
संस्थाप्य तत्र गणपान् देवानिन्द्रपुरोगमान् ॥१२१

प्रस्थितेऽथ महादेवे विष्णुर्विश्वतनुः स्वयम् ।
स्त्रीरूपधारी नियतं सेवते स्म महेश्वरीम् ॥१२२
ब्रह्मा हुताशनः शक्रो यमोऽन्ये सुरपुंगवाः ।
सिषेविरे महादेवीं स्त्रीवेशं शोभनं गताः ॥१२३
नन्दीश्वरश्च भगवान् शंभोरत्यन्तवल्लभः ।
द्वारदेशे गणाध्यक्षो यथापूर्वमतिष्ठत ॥१२४
एतस्मिन्नन्तरे दैत्यो ह्यन्धको नाम दुर्मतिः ।
आहर्तुकामो गिरिजामाजगामाथ मन्दरम् ॥१२५
संप्राप्तमन्धकं दृष्ट्वा शंकरः कालभैरवः ।
न्यषेधयदमेयात्मा कालरूपधरो हरः ॥१२६ वा१ १६.१३३

---

वर- (→[अ]सुर-), दे1-विद्विषो दे3 5 विद्विषा, दे8-10 न1 मुवँ मुए मुव -विद्विष, ते1-विद्विष +-विद्विषा (→ विद्विषो)

११७ अ2 ab 'चक्रु ' 'रता' यावत् O -a) व3 शस्त्राणि (→शास्त्राणि) -b) दे4 च ता (→रता) -d) अ2 दे8-10 मुवँ मुए मुव, च, दे1 तु (→तु)

११८ -a) का1 व2 दे2 3 5 अ2 मोहयन्त, दे4 मोहयन्ते (→मोहयन्त), का1 द1 इमा (→इम), दे1 मोहयन् सप्तम लोक, दे8-10 मोहाय स इम लोकम्, मुवँ मुए मोहापवादन लोकम् -b) अ2 महतीर्य महीतलम् (?) -c) व1 चकारो (?) (→चकार) दे3 भिक्षा (→भिक्षां) -d) म1 हितार्थेष्ट (→हितार्थाय) ध1 द्विजा (?) (→द्विजैः), का1 सहा (→सह)

११९ -a) दे4 10 °भरणा (→°भरण) -b) का1 व2 3 दे5 °भस्माभि° (→°भस्माव°) दे4 °कुण्ठिना, न1 द1 अ1 म1 °कुण्ठिन, ते1 °कुण्ठला अ2 °कुण्ठन (→°गुण्ठित), दे1 शिव भस्मावकुण्ठित -c) दे4 इद (→इम) -d) दे1 जटामुकुट°, दे4 जलामण्डल° (→जटामण्डल°)

१२० -a) दे2 देवो (→देवी) -b) व1 3 विष्णो- रक्षित°, दे10 द1 विष्णावमित°, म1 विष्णवेमित° (→विष्णा- वमित°), अ2 विष्णो वा कल्यानसि -c) दे1 4 नियोज्य भगवान् रुद्र दे8 10 मुवँ मुए मुव नियोज्य भगवान् रुद्रो, द1 अ1 2 म1 नियोक्य (म1 °ज्य) भगवान् रुद्र -d) का1 व3 दे1 4-5 ते1 अ1 2 म1 °विग्रह (दे5 °हा), द1 °विग्रह (→°निग्रहे)

१२१ -a) दे1 3 कृत्वा, दे5 दृष्ट्वा, द1 अ1 म1 हित्वा (→दत्त्वा), का1 दे1 5 म1 द1 नारायणो, अ2 म1 नारायण (→नारायणे), का1 व3 दे3 8 ते1 देव्या, व1 मुवँ मुए मुव देव्या, दे3 दिव्या, दे5 देव्यं, दे8 दिव्य (→देवी), दे1 देवरक्ष- णार्थाय -b) दे9 नन्दित, मुवँ मुए मुव नन्दन (→ नन्दिन), का1 °नन्दित, दे5 °नन्दिना, मुवँ मुए मुव °नन्दन (→°नन्दिन) -c) दे8 10 मुवँ मुए मुव च गणान् (→गणपान्) -cd) व3 सस्थाप्य गणपान् देवानिन्द्ररविपुरोगमान्

१२२ -a) दे1 2 8 10 द1 अ1 2 म1 मुवँ मुए मुव च (→[अ]थ) -b) दे1 शिव (→स्वय), का1 विष्णुर्विश्व- स्वयतनु -c) दे1 ते2 थीरूप°, अ2 थीवेष° (→स्त्रीरूप°), का1 व1 3 दे2 3 5 6 न1 ते1 नियत, द1 अ1 2 म1 पुरुष (→नियत) -d) ते1 °श्वरम् (→°श्वरीम्), अ2 प्रपेदे स महेश्वरीम

१२३ -a) म1 हुताग्नि (→हुताशन), का1 दे1 शुक्रो (→शक्रो) अ2 ब्रह्मभूताशन शक्रो -b) दे7 यमो मे, दे10 यमो मी, अ2 यमोन्य- (→यमोऽन्ये), दे10 °पुङ्गव (→°पुङ्गवा), -c) व1 शिषेविरे, दे10 सिषेवरे ते1 निषेविरे (→सिषेविरे), मुवँ मदादेवी(?) (→महादेवी) -d) दे1 थीवेश, दे8 10 मुवँ मुए मुव स्त्रीरूप (→स्त्रीवेश), दे1 तथा, दे10 गता, ते1 गता, + कला द1 गता (→गता)

१२४ -a) दे2 °श्वर च, दे4 °श्वरोथ, द1 अ1 म1 °श्वरोपि (→°श्वरश्च) -b) दे1 °वर्णव (?), द1 अ1 म1 °वल्लन (→°वल्लभ) -c) अ2 °देशो, म1 °पूर्वे (→°देशे) -d) दे1 °ध्रुवम्(?), दे2 °नगम(?) (→°पूर्वम्), व3 प्रतिष्ठत, दे2 प्रवस्थित, दे5 प्रतिवृत(?), अ1 प्रधिष्ठित (→प्रतिष्ठत)

१२५ -b) दे1 अन्धको (→ह्यन्धको) -c) व3 समाजगामाथ, अ2 जगामाथ च (→माजगामाथ) -d) का1 व1-3 दे1 2 4 10 द1 अ2 म1 मन्दिरम् (→मन्दर) -cd) दे2 आहर्तुं गिरिजा देवीमपपा(?) हरिमन्दिरम्

१२६ -b) अ2 °भैरव (→°भैरव) -c) दे1 निषे° (→न्यषे°), दे4 ताडयामास वेगेन, -d) व1 °रूपो (→°रूप)

वें.१.१६.१३३ तयोः समभवद् युद्धं सुघोरं रोमहर्षणम् ।
शूलेनोरसि तं दैत्यमाजघान वृषध्वजः ॥१२७

ततः सहस्रशो दैत्यः ससर्जान्धिकसंज्ञितान् ।
नन्दिषेणादयो दैत्यैरन्धकैरभिनिर्जिताः ॥१२८

घण्टाकर्णो मेघनादश्चण्डेशश्चण्डतापनः ।
विनायको मेघवाहः सोमनन्दी च वैद्युतः ॥१२९

सर्वेऽन्धकं दैत्यवरं सम्प्राप्यातिबलान्विताः ।
युयुधुः शूलशक्त्यृष्टिगिरिकूटपरश्वधैः ॥१३०

भ्रामयित्वाऽथ हस्ताभ्यां गृहीतचरणद्वयाः ।
दैत्येन्द्रेणातिबलिना क्षिप्तास्ते शतयोजनम् ॥१३१

ततोऽन्धकनिसृष्टास्ते शतशोऽथ सहस्रशः ।
कालसूर्यप्रतीकाशा भैरवं त्वभिदुद्रुवुः ॥१३२

हा हेति शब्दः सुमहान् बभूवातिभयंकरः ।
युयोध भैरवो रुद्रः शूलमादाय भीषणम् ॥१३३

दृष्ट्वाऽन्धकानां सुबलं दुर्जयं तर्जितो हरः ।
जगाम शरणं देवं वासुदेवमजं विभुम् ॥१३४

सोऽसृजद् भगवान् विष्णुर्देवीनां शतमुत्तमम् ।
देवीपार्श्वस्थितो देवो विनाशायामरद्विषाम् ॥१३५

---

१२७ -b) म₁ दे₂,₃ ते₁ लोम° (→रोम°), दे₅ सुघोर लोमहर्षणम् -c) द₁ ग्र₁,₃ म₁ दैत्य त (→तं दैत्य) -d) दे₈ भाजघान (→माजघान), दे₈ °ध्वज (→°ध्वजः)

१२८ -a) व₁ दे₈-10 मुवें मुए दैत्या, दे₁,₅ द₁ ग्र₁,₂ म₁ दैत्यान् (→दैत्य) -b) व₂ °स्मिभितान् (→°संज्ञितान्), दे₈-10 मुवें मुए सहस्रान्धकसंज्ञिता -c) का₁ नन्दिकेशादयो, व₁ ते₁ नन्दिकेशादयो, व₂ दे₈-10 मुवें मुए मुव नन्दीश्वरादयो, व₃ दे₃,₆ द₁ ग्र₁,₂ म₁ नन्दि (दि₃,₆ °न्दी) सेनादयो, दे₂ नन्दीशाद्याश्च दैद्, दे₄ नन्दी सेनादयो (→नन्दिषेणादयो) -d) दे₁ अभिवर्जिता, दे₂ अभिनर्जिता दे₄ अपि निर्जिता, द₁ ग्र₁ म₁ अभिनिर्जिता., ग्र₂ अभि[illegible]ता (→अभिनिर्जिता)

१२९ ग्र₁ ⊙ -a) दे₁ द₁ घूर्णं, ग्र₂ घूर्णं (→घण्टा°), दे₁ °करणे (→°कर्णो) -b) का₁ चण्डीशश्, दे₅ चण्डिश, द₁ म₁ खण्डश (→चण्डेशश्), प₁ ते₁ चन्द्रता°, द₁ म₁ खण्डता° (→चण्डता°), द₁ चण्डतापनचण्डन, ग्र₂[illegible] खर्णवादन -c) का₁ दे₇ °वाहु, दे₂ ते₁ °नाद, न₁ °वहु (→°वाह) -d) दे₆ साम (→सोम), का₁ व₁-₃ दे₃,₆ ते₁ विशारदि, दे₁ च वद्युति, दे₂ च विद्युत, दे₄ भद्युति, दे₁₀ च वैद्यतः, म₁ च विद्यति, द₁ ग्र₂ म₂ च विद्युति (→च वैद्युतः)

१३०. ग्र₁ ab ⊙ -a) दे₃ सर्वेऽन्धकदेवेश्वर, दे₈ सर्वेऽध[illegible] -b) दे₂ सम्प्राप्याय, दे₃ सम्प्राप्यमभि- (→सम्प्राप्याति-), का₁ दे₅ °न्वित, ग्र₂ °न्विता (→°न्विताः) -c) दे₁ °शक्त्याष्टि-, दे₂ °शक्तिष्टि, दे₄ द₁ °शात्यष्टि-, दे₅ °शक्तृष्टि-, दे₁₀ °शक्त्यष्टो-, ग्र₂ °शक्रवष्टि (→°शक्त्यृष्टि-) -d) का₁ व₃ दे₁ -परस्व° (→-परश्व°), ग्र₂ गिरि[illegible]

१३१ -a) दे₁,₂,₆ न हस्ता (दे₂ °स्ता)भ्या, दे₆,₉ सुहस्ताभ्या, मुवें मुए मुव तु हस्ताभ्या (→[अ]थ हस्ताभ्यां) -b) दे₃,₉,₁₀ मुवें मुए मुव गृहीत्वा, दे₃ गृहीव (→गृहीत-), का₁ दे₂ ग्र₂ -द्वय, दे₁,₈ -द्वयौ, दे₄,₉,₁₀ मुए मुव द्वये, ग्र₁ -युग, मुवें द्वय (→-द्वयाः) -c) का₁ दे₃,₆ दैत्यैन्द्रै (दे₆ °द्रै) नाभि (का₁ °नि) (→दैत्येन्द्रेणाति°) -d) दे₆ क्षिप्तास्ते (→क्षिप्तास्ते), का₁ दे₃ शतशो (दे₃ °शो) जनं, व₃ दे₄,₆ शतशो(दि₄ °सो) जन (दे₈ °णा ?) (→शतयोजनम्)

१३२ -a) दे₅ °निशब्दात् (→°निसृष्टास्), दे₈-10 मुवें मुए मुव य (→ते) -c) दे₃ °रुद्र- (→°सूर्य), दे₂ -काश, दे₉ -काशो, दे₄ द₁ ग्र₂ म₁ -काशे, ग्र₁ -कारे (→-काशा) -d) दे₄ द₁ ग्र₁ म₁ भैरवैस् (→भैरव); दे₈,₁₀ मुवें मुए मुव चाभि°, दे₄ ग₁ यभि°, ग्र₁ त्वति° (→त्वभि°)

१३३ -a) दे₈-10 जहीति (→हा हेति), न₁ दाम (?)(→शब्द), व₁ स महान् (→सुमहान्) -b) दे₃ °कर (→°कर) -c) ग्र₂ अयोध(ध?), मुवें मुए मुव युयुधे (→युयोध), दे₁,₂,₈-10 मुवें मुए मुव देव (→रुद्र) -d) दे₈,₁₀ मुवें मुए मुव भैरवम् (→भीषणम्)

१३४ ग्र₂ d ⊙, -a) द₁ दृष्ट्वाऽन्धको मे (→दृष्ट्वाऽन्धकाना), का₁ दे₈-10 मबल, म₂,₃ दे₁ स्वबल (→सुबलं). -b) दे₁,₈-10 न₁ मुवें मुए मुव निर्जितो (न₁ °त), दे₄ तर्जित, द₁ तर्जिता, प₁ भीषण, ग्र₂ म₁ भैरवो (→तर्जितो), न₁ स्वय (→हर). -c) दे₁ जगाम देव शरणम्

१३५ -b) न₁ °मुत्तमा (→°मुत्तमम्). -d) न₁ °द्विप (→°द्विषा), दे₈-10 मुवें मुए. मुव विनाशाय सुरद्विषाम्, ग्र₂ नाशायामास विद्विषाम्

तदाऽन्धकसहस्रं तु देवीभिर्यमसादनम् ।
नीतं केशवमाहात्म्याल्लीलयैव रणाजिरे ॥१३६
दृष्ट्वा पराहतं सैन्यमन्धकोऽपि महासुरः ।
पराङ्मुखो रणात् तस्मात् पलायत महाजवः ॥१३७
ततः क्रीडां महादेवः कृत्वा द्वादशवार्षिकीम् ।
हिताय लोके भक्तानामाजगामाथ मन्दरम् ॥१३८
सम्प्राप्तमीश्वरं ज्ञात्वा सर्व एव गणेश्वराः ।
समागम्योपतस्थुस्तं भानुमन्तमिव द्विजाः ॥१३९
प्रविश्य भवनं पुण्यमयुक्तानां दुरासदम् ।
ददर्श नन्दिनं देवं भैरवं केशवं शिव. ॥१४०

प्रणामप्रवणं देवं सोऽनुगृह्याथ नन्दिनम् ।
आघ्राय मूर्द्धनीशानः केशवं परिषस्वजे ॥१४१
दृष्ट्वा देवी महादेवं प्रीतिविस्फारितेक्षणा ।
ननाम शिरसा तस्य पादयोरीश्वरस्य सा ॥१४२
निवेद्य विजयं तस्मै शंकरायाथ शंकरी ।
भैरवो विष्णुमाहात्म्यं प्रणत. पार्श्वगोऽवदत् ॥१४३
श्रुत्वा तद्विजयं शंभुर्विक्रमं केशवस्य च ।
समास्ते भगवानीशो देव्या सह वरासने ॥१४४
ततो देवगणाः सर्वे मरीचिप्रमुखा द्विजाः ।
आजग्मुर्मन्दरं द्रष्टुं देवदेवं त्रिलोचनम् ॥१४५ वे१ १६ १५२

---

१३६ –a) दे4 द1 प्र1 2 तथा (→तदा), व1 3 दे2 3 5 6 ते1 श1 तद् दे4 द1 त (→तु) –b) दे3 8 दर्शीनि (दे3 °नि)यम°, म1 देशभिर्यम° (→देवीभिर्यम°), दे10 देवीनियमसाधनम् –c) दे8 माहारम्य(?), त1 माहात्म्य (→माहात्म्यात्)

१३७ –a) दे1 दैत्य, दे8 सैन्य (→सैन्य) –b) द1 ह्यन्धको (→मन्धको) –c) म1 ज्योतिर्मुखो (→पराङ्मुखो) –d) दे1 पद्यत(?) (→पलायत) म1 दे6 महाभव दे3 महाजव, ते1 महाजव, + महाजव, द1 महामुरा (?) (→महाजव)

१३८ –a) व2 क्रीडा(→क्रीडां) द1 महादेवा (→महादेव) –b) श1 दे1 °वार्षिकी (→°वार्षिकीम्) –c) श1 व2 3 दे5 प्र2 लोकभक्तानां दे3 6 8 10 मुवें मुए मुब भक्तलोकानाम् (→लोके भक्तानां) –d) श1 व3 द3 6 जगाम स च श1 ते1 जगाम च स व1 स जगाम च दे4 म1 प्राजगाम च म1 प्राजगामानु- (→प्राजगामाथ) व2 3 दे1 10 न1 द1 प्र2 म1 मन्दिरम् (→मन्दरम्)

१३९ –b) द2 तदा सर्वे (→सर्व एव), प्र1 म1 गुणेश्वरा (प्र2 °र) (→गणेश्वराः) –c) व1 दे1 2 4 ते1 द1 प्र1 2 म1 समागम्यो° (→समागम्यो°), दे8 10 मुवें मुए मुब °पनिष्ठुन्त (→°पतस्थुस्त)

१४० दे3 d ○ –a) व1 प्रविशन, व3 प्रणम्य (→प्रविश्य), दे1 च यत्र, दे9 10 भुवन (→भवन) –b) दे1 2 प्रभक्तानां, दे4 पशुक्तानां (→मयुक्तानां), दे3 दुरासदा (→दुरासद) –c) दे10 स देवदेव, प्र2 म1 नन्दिनं देवा (→नन्दिन देव) –d) श1 व2 3 दे3 5 6 हर (दे3 6 °र) श1 दे1 4 ते1 शिवं, न1 द1 प्र1 म1 शिवो (द1 °वा) (→शिव), प्र2 भैरवं माहृमपुण (?)

१४१ प्र1 a ○ –a) दे1 म1 °प्रणव (→°प्रवण), व1 दे4 प्र1 म1 देव (→देव), दे1 प्रणम्य प्रणत देवं, दे2 प्रमाणप्रणत देव –b) श1 सोनुगृह्यार्थ-, दे2 सोनुगृह्याप्य- दे4 सोनुगृह्य, ते1 सोनुग्राह्याथ, प्र2 सोऽनुगृह्यस्तु (→सोनुगृह्याथ) –c) दे8-10 मुवें मुए मुब मीश्वरेण पूरमीशान, प्र2 माघ्राय मूर्ध्निमीशानो –d) द1 प्र1 2 माधव, म1 भैरव (→केशव), दे1 रिवजदत (?) (→परिषस्वजे)

१४२ –a) दे1 प्र2 देव, दे3-10 देवीम् मुवें मुए देवा (→देवी), दे8 10 मुवें मुए महादेवी (→महादेव), ते1 दृष्टवा दृष्ट्वापि देव्योमा –b) दे1 प्रीतिप्रफुल्लितेक्षण, दे2 प्रीतिप्रस्फारितेक्षणा दे8 9 द1 मुवें मुए मुब प्री (दे9 9 द1 प्र) निविस्फारितेक्षणाम् –c) दे8-10 मुवें मुए प्रणन (→ननाम), दे1 देव, दे8 मुवें मुए नस्या (→तस्य) –d) दे1 मूर्ध्निन तस्य, प्र2 प्रणतस्य (→ईश्वरस्य), दे1 त, दे8 10 मुवें मुए मुब च (→सा)

१४३ –a) श1 व1 3 दे3 5 6 निवेदयद् (दे8 इ) जय तस्मै दे8 10 मुवें मुए मुब न्यवेदयत् (मुवें °त्) जय तस्मै, न1 निवद्य स जय तस्मै –b) श1 व1-3 दे2 3 5 6 8-10 ते1 मुवें मुए मुब शंकर, द1 भरव (→शंकरी) –d) दे5 प्रह्मण, दे8 10 मुवें मुए मुब प्रणीत, दे10 प्रणीत, म1 प्रणतः (→प्रणत), श1 व2 3 दे1 6 8-10 ते1 मुवें मुए मुब पार्श्व-गोऽभवत् न1 पार्श्वगो भवान् (→पार्श्वगोऽवदत्)

१४४ –a) व3 तद्विक्रम, दे2 तु विजय, दे3-10 मुवें. मुए मुब त विजय (→तद्विजय) –b) दे1 2 न1 तु (→च) –d) दे10 ते1 म1 वरासन (?) (→वरासने)

१४५ –a) दे1 ततो गणाधिपाः सर्वे –b) दे5 द्विज, दे10 द्विज (→द्विजा) –c) प्र2 मन्दिर (→मन्दर)

वां१।१६।१५२ येन तद् विजितं पूर्वं देवीनां शतमुत्तमम् ।
समागतं दैत्यसैन्यमीशदर्शनवाञ्छया ॥१४६
दृष्ट्वा वरासनासीनं देव्या चन्द्रविभूषणम् ।
प्रणेमुरादराद् देव्यो गायन्ति स्मातिलालसाः ॥१४७
प्रणेमुर्गिरिजां देवीं वामपार्श्वे पिनाकिनः ।
देवासनगतं देवं नारायणमनामयम् ॥१४८
दृष्ट्वा सिंहासनासीनं देव्या नारायणेन च ।
प्रणम्य देवमीशानं पृष्टवत्यो वराङ्गनाः ॥१४९

कन्या ऊचुः ।ॐ

कस्त्वं विभ्राजसे कान्त्या केयं बालरविप्रभा ।
कोऽन्वयं भाति वपुषा पङ्कजायतलोचनः ॥१५०
निशम्य तासां वचनं वृषेन्द्रवरवाहनः ।
व्याजहार महायोगी भूताधिपतिरव्ययः ॥१५१
अहं नारायणो गौरी जगन्माता सनातनी ।
विभज्य संस्थितो देवः स्वात्मानं बहुधेश्वरः ॥१५२
न मे विदुः परं तत्त्वं देवाद्या न महर्षयः ।
एकोऽयं वेद विश्वात्मा भवानी विष्णुरेव च ॥१५३
अहं हि निष्क्रियः शान्तः केवलो निष्परिग्रहः ।
मामेव केशवं देवमाहुर्देवीमथाम्बिकाम् ॥१५४

---

१४६ -a) ब1 गुंजित (?) (→विजित), -b) दे1 देवाना (→देवीनां), दे3 शतस्तम (→शतमुत्तमम्) -c) दे1 देव° (→दैत्य°) -d) दे8-10 क1 मुवं मुए मुव °काङ्क्षया (→°वाञ्छया)

१४७ द1 प्र1 १४७c–१४९b ○ -b) का1 व2 3 दे3 5 8 द1 °विभूषितम् (दे5 °ताम्) (→°विभूषणम्), प्र1 देव्या नारायणेन च -c) ब1 दे1 देव्या, व2 तै1 देवा, दे10 देव्यौ (→देव्यो) -d) ब1 3 दे3 4 8 स्माभि (व3 दे4 °ति) लालसा, दे1 स्मरति लालसा, प्र3 स्म रागाकुला (→स्मातिलालसा)

१४८ द1 प्र1 ○, दे10 bc ○, नं1 १४८c–१५४ b ○ -a) दे4 प्र2 गिरिजां, बे9 8 दिविजा (दे6 °ज) (→गिरिजां) -c) दे8 9 मुवं मुए °गता देवी, दे3 8 °गत देवी (→°गतं देवं), दे4 5 दिव्यासन (दे4 °ना) गत देव -d) द1 °मनोमय, दे8-10 मुव मुए मुव °मनोमयीम् (→°मनामयम्)

१४९ नं1 ○, द1 प्र1 ab ○ -a) दे10 °स्था (→°सीनम्) -b) प्र2 दण्डया (→देव्या), दे2 वा (→च), दे8 10 मुव, मुए देव्यो नारायण तथा -c) द1 प्रणम्य भैरवं देवं -d) का1 दे10 पृष्टवन्त्यो, व1 3 दे5 8 दे1 प्र1 2 दृष्टवत्यो (दे8 °त्यो), प्र3 तुष्टुवुस्ता, प्र1 दृष्टस्येव (→पृष्टवत्यो), द1 गायन्ति स्म सुराङ्गना

ॐ नं1 द1 ○, दे1 श्रीदेव्युवाच, दे1 प्र1 2 मं1 च वा

१५० नं1 ○ -a) दे10 कश्चित्त विभ्राजते कोऽपि(?) -b) व3 दे8-10 व1 पं1 मुवं मुए मुव बालर (→बाल-), दे1 केय बालेन्दुरश्मिमा -c) का1 दे8 10 क1 स्विय भाति, दे2 कोय समाति, दे2 काञ्चन भाति, प्र2 को वय भाति (→कोऽन्वयं भाति) -d) का1 दे8 10 °लोचना, दे8 °लेचना, प्र1 °लोचना (→°लोचन)

१५१ नं1 ○, दे6 ab ○ -a) का1 निसम्य (→निशम्य), द1 प्र1 2 मं1 वचनं तासां (→तासां वचनं) -d) दे5 भूतादि° (→भूताधि°)

१५१ श्लोकात् परं मं1 अधिकम्–ईश्वर

१५२ नं1 ○ -a) दे1 8 10 दे1 प्र1 2 मं1 मुवं मुए मुव माय (→अहं), प्र2 मं1 देवी (→गौरी) -b) का1 सनातन, ·सनातनी, ब2 3 दे3 6 8 10 मुवं मुए मुव सनातन दे1 सनातना (→सनातनी) -c) दे5 विसृज्य, दे10 निसृज्य(?) (→विभज्य), दे8 मुवं मुए मुव संस्थितौ, द1 प्र1 2 मं1 संस्थिता (→संस्थितो), व॰ देह, द1 प्र1 2 मं1 देवी (→देवः) -d) तै1 च महेश्वर, द1 प्र1 मं1 बहुधेश्वर (→बहुधेश्वरः)

१५३ नं1 ○ -b) का1 व3 दे2 3 5 6 न देवा मे, व1 प्र1 मं1 देव्याद्या न, व3 नमो देवा, दे1 स देवाद्या, दे4 वेदवाद्याश् दे8 9 मुवं मुए मुव देव्याद्य न, दे10 देवाश्चैव (→देवाद्या न) -c) दे4 द1 प्र1 2 मं1 एकोऽहं (→एकोऽयं), प्र2 देव- (→वेद) -d) दे1 भवानिविष्णरेव च

१५४ नं1 ab ○ -a) दे4 म नित्य (?), दे8 नि क्रिय, दे8-10 मुवं मुए मुव निस्पृह (→निष्क्रिय), द1 प्र1 2 मं1 मह हि निष्क्रिया (प्र1 °यो) शान्त (प्र1 °त) -c) मं1 निरीक्ष्य (→मामेव), दे8-10 मुवं मुए मुव माहुः, प्र2 देवा (→देवं) -d) दे8 10 मुवं मुए मुव लक्ष्मी (→माहुर्), द1 प्र1 मं1 देव (→देवी), दे4 माहुर्देवी हुताशका

एष धाता विधाता च कारणं कार्यमेव च ।
कर्ता कारयिता विष्णुर्भुक्तिमुक्तिफलप्रदः ॥१५५
भोक्ता पुमानप्रमेयः संहर्ता कालरूपधृक् ।
स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतोमुखः ॥१५६
कूटस्थो ह्यक्षरो व्यापी योगी नारायणः स्वयम् ।
तारकः पुरुषो ह्यात्मा केवलं परमं पदम् ॥१५७
सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना ।
शान्ता सत्या सदानन्दा परं पदमिति श्रुतिः ॥१५८
अस्याः सर्वमिदं जातमत्रैव लयमेष्यति ।
एषैव सर्वभूतानां गतीनामुत्तमा गतिः ॥१५९
तयाऽहं संगतो देव्या केवलो निष्कलः परः ।
पश्याम्यशेषमेवेदं यस्तद् वेद स मुच्यते ॥१६०
तस्मादनादिमद्वैतं विष्णुमात्मानमीश्वरम् ।
एकमेव विजानीध्वं ततो यास्यथ निर्वृतिम् ॥१६१
मन्यन्ते विष्णुमव्यक्तमात्मानं श्रद्धयाऽन्विताः ।
ये भिन्नदृष्ट्यापीशानं पूजयन्तो न मे प्रियाः ॥१६२
द्विषन्ति ये जगत्सूतिं मोहिता रौरवादिषु ।
पच्यमाना न मुच्यन्ते कल्पकोटिशतैरपि ॥१६३
तस्मादशेषभूतानां रक्षको विष्णुरव्ययः ।
यथावदिह विज्ञाय ध्येयः सर्वापदि प्रभुः ॥१६४
श्रुत्वा भगवतो वाक्यं देव्यः सर्वगणेश्वराः ।
नेमुर्नारायणं देवं देवीं च हिमशैलजाम् ॥१६५ वे१.१६.१७२

---

१५५ –d) व$_3$ दे$_1$ भक्ति° (→मुक्ति°), दे$_4$ भुक्तिमुक्तिपरिग्रहा

१५६ –a) व$_1$ प्रणाम°(?) (→पुमान°), दे$_6$ भोक्त प्रमाण्प्रमेय, म, प्र$_2$ भोक्ता मोजयिता पुमान् –b) ते$_2$ संहर्तार्(?) (→संहर्ता) –c) व$_1$ सृष्टा, दे$_3$ स्रष्ट, दे$_5$ सृष्टा, दे$_{10}$ दृष्टा, म$_1$ स्रष्टा (→स्रष्टा), का$_1$ व$_{1-3}$ दे$_{2\,3\,5\,6}$ ते$_1$ धाता (→पाता), व$_3$ वाम° (→वासु°), दे$_1$ स्रष्टा पालयता देवो –d) दे$_8$ विश्वनो° (→विश्वतो°)

१५७ –a) दे$_3$ ह्यक्षरे, दे$_4$ मक्षरो, दे$_6$ मूक्षर(?) (→ह्यक्षरो), दे$_5$ वापी, व$_1$ वापि (→व्यापी) –b) दे$_{1\,4}$ द$_1$ म$_{1\,2}$ म$_1$ नारायणाह्वय, दे$_{8-10}$ मुबँ मुए मुव नारायणो (मुबँ मुए मुव. °णा) व्यय (→नारायण स्वय). –c) दे$_1$ तारक, दे$_3$ तावक (→तारक) –d) व$_3$ प्रबल (→परम)

१५८ –a) व$_2$ देवी, ते$_1$ नारी (→गौरी) –c) दे$_{10}$ सत्या, द$_1$ प$_{1\,2}$ म$_1$ सत्य (→सत्या), दे$_4$ सदानन्ता, प्र$_2$ शमानन्दा (→सदानन्दा) –d) द$_1$ गर्वपद, दे$_6$ परम्पर, प्र$_2$ परपर (→पर पद), दे$_2$ इति स्मृति + इति श्रुति (→इति श्रुति)

१५९ –a) दे$_{8-10}$ मुबँ मुए मुव सत्या (→अस्या), दे$_3$ प्रत्यासर्वमिदं जातम् (?) –b) व$_1$ जलग, दे$_1$ लापम, दे$_3$ लयम् (?) (→लयम्), दे$_8$ एष्यति (→एष्यति) –d) दे$_3$ गतीनाम, प्र$_2$ गिरीणाम् (→गतीना), का$_1$ गतीनां गतिरुत्तमा.

१६० –a) दे$_3$ अमाह(?), म$_1$ तयैव (→तयाऽहं), व$_3$ सर्वतो, दे$_1$ संगतो (→संगतो), म$_1$ देव्यो (→देव्या) –b) दे$_4$ केवलो, दे$_{10}$ केवलो (→केवलो); म$_1$ पर (→पर) –c) दे$_{8-10}$ मुबँ. मुए मुव एवाहं (→एवेदं) –d) व$_1$ ते$_1$ यस्त (→यस्तद्), दे$_{8-10}$ मुबँ. मुए. मुव. परमात्मानमव्ययम्

१६१ –a) दे$_1$ °नादिमद्वैत, दे$_3$ द$_1$ प्र$_{1\,2}$ म$_1$ °नादिमध्यान्त, ते$_1$ °नादिमध्य॰ (→°नादिमद्वैत) –b) ते$_1$•• (→विष्णुम्), दे$_4$ म प्रिया, म$_1$ मव्ययम् (→ईश्वरम्) –c) दे$_4$ एकमीक (?), दे$_6$ एकमेव, द$_1$ प्र$_{1\,2}$ म$_1$ एवमेक (प्र$_2$ °व, म$_1$ °व) (→एकमेव), दे$_{8-10}$ मुबँ मुए मुव विजानीय (→विजानीध्व) –d) दे$_{3\,4}$ प्र$_1$ यास्यति, प्र$_2$ यास्यन्ति (→यास्यथ), दे$_6$ प्र$_1$ निवृति (→निर्वृति)

१६२ –a) दे$_5$ मन्यन्त्य, न$_1$ म$_1$ मन्य ते, ते$_1$ मन्यन्तो (→मन्यन्त), का$_1$ मन्यन्ते विष्णुरव्यक्त –b) व$_1$ दे$_3$ °न्वित (→°न्विता) –c) द$_1$ °दृष्टा स्वीशान, व$_3$ दे$_3$ °दृष्ट्याभीशान, द$_1$ °दृष्टमीशानं, दे$_{8-10}$ मुबँ मुए मुव °दृष्ट्यापीशान, द$_1$ प्र$_1$ म$_1$ °दृष्टा ईशानी, प्र$_2$ °दृष्ट••• (→°दृष्ट्यापीशान) –d) न$_1$ ते$_1$ पूजयन्ति, प्र$_1$ पूजयन्ते (→पूजयन्तो), दे$_{11}$ -मेश्वरा, प्र$_2$ म प्रजा (→मे प्रिया)

१६३ –a) न$_1$ म$_1$ यो (→ये), दे$_2$ जगत्पतिम्, न$_1$ जगत्सूतिर्, प्र$_2$ म$_1$ जगत्सूतिम् (→जगत्सूतिम्) –b) न$_1$ मोहिनो (→मोहिता) –c) दे$_{3\,6}$ पच्यमाना, दे$_1$ मर्यमाना, प्र$_2$ पच्यमा (→पच्यमाना), दे$_3$ मुच्यन्ते (→मुच्यन्ते)

१६४ –a) का$_1$ तस्मादमेय-, + तस्मादशेष हि (?), दे$_1$ तस्मादप- (→तस्मादशेष-) –c) न$_1$ यथावदभि- (→यथावदिह), प्र$_2$ यथावं (→विज्ञाय) –d) दे$_1$ ध्येय साक्षी यदि प्रभु, प्र$_2$ सर्वापविना वह्नु (?)

१६५ –a) दे$_4$ वाक्, द$_1$ म$_1$ विष्णो, प्र$_2$ पीत्वा (→श्रुत्वा). –b) व$_1$ दे$_2$ देव्या, दे$_1$ देवा, दे$_4$ 8-10 द$_1$ प$_{1\,2}$ म$_1$ मुबँ. मुए मुव देवा (→देव्य), प$_{1,2}$ दे$_{1,8-10}$ द$_1$ म$_1$ मुबँ. मुए मुव गणँ, दे$_1$ सर्वा (→सर्व॰).

१.१६.१७२ प्रार्थयामासुरीशाने भक्तिं भक्तजनप्रिये ।
भवानीपादयुगले नारायणपदाम्बुजे ॥१६६
ततो नारायणं देवं गणेशा मातरोऽपि च ।
न पश्यन्ति जगत्सूतिं तदद्भुतमिवाभवत् ॥१६७
तदन्तरे महादैत्यो ह्यन्धको मन्मथार्दितः ।
मोहितो गिरिजां देवीमाहर्तुं गिरिमाययौ ॥१६८
अथानन्तवपुः श्रीमान् योगी नारायणोऽमलः ।
तत्रैवाविरभूद् दैत्यैर्युद्धाय पुरुषोत्तमः ॥१६९
कृत्वाऽथ पार्श्वे भगवन्तमीशो
युद्धाय विष्णुं गणदेवमुख्यैः ।
शिलादपुत्रेण च मातृकाभिः
स कालरुद्रोऽभिजगाम देवः ॥१७०

त्रिशूलमादाय कृशानुकल्पं
स देवदेवः प्रययौ पुरस्तात् ।
तमन्वयुस्ते गणराजवर्या
जगाम देवोऽपि सहस्रबाहुः ॥१७१
रराज मध्ये भगवान् सुराणां
विवाहनो वारिदवर्णवर्णः ।
तदा सुमेरोः शिखराधिरूढ-
स्त्रिलोकदृष्टिर्भगवानिवार्कः ॥१७२
जगत्यनादिर्भगवानमेयो
हरः सहस्राकृतिराविरासीत् ।
त्रिशूलपाणिर्गगने सुघोषः
पपात देवोपरि पुष्पवृष्टिः ॥१७३

---

१६६ –a) दे6 °मास° (→°मासु°), दे3 °रीशानि, दे4 °राशान, द1 °रीशानो (→°रीशाने) –b) दे1 5 भक्ति भक्ति, दे3 6 भक्तिमुक्ति-, म1 भक्त्या भक्त- (→भक्तिं भक्त-), द1 °प्रिया (→°प्रिये), दे3 भक्तिमुक्तिजना प्रियो –c) दे3 तदानीपाद° (→भवानीपाद°)

१६७ –a) द1 देवीं (→देव) –b) का1 दे9 गणेश, व1 गणेश-, दे1 गणाद्या, दे10 गणेशो (→गणेशा), प्र2 म1 गणेशा अमरा अपि –c) दे5 जगन्मूर्ति, दे6 जगद्युति, वे10 जगत्सूनीम (→जगत्सूतिं) –d) व3 मेरुद्भुत°(?), दे10 मन्तद्भुत°(?) (→तदद्भुत°)

१६८ –b) दे10 धुन्धको (→ह्यन्धको), का1 मन्मथान्धक +मन्मथान्धक, दे8 10 मुवँ मुए मुब मन्मथान्धक, न1 मन्मथान्वित (→मन्मथार्दितः), दे1 मन्मथान्धक-न्धकः, व2 ह्यन्धको मन्मदार्दित –c) व1 मोहिता (→मोहितो) –d) व3 माहर्तुर् (→माहर्तुम्), प्र2 महर्तुं गिरिमायया

१६९ –a) प्र2 प्रधानन्द° (→अथानन्त°) –b) दे5 नारायणस्तत, ते1 नारायणा वल (→नारायणोऽमल) –c) दे10 तर्थेवा° (→तत्रैवा°), दे3 भूर्त्यैर्, दे4 देवो, द1 दैत्य (→दैत्यैर्) –d) प्र3 युद्धार्थे (→युद्धाय)

१७०. दे4 cd O –a) का1 व3 दे5 कृत्वा तु (→कृत्वाऽथ), दे5 पार्श्वो (→पार्श्वे) –b) ते1 विष्णुर् (→विष्णुं), दे4 गणनाथमुख्यं, ते1 गणदेवमुख्य, द1 प्र1 2 म1 गणनाथमुख्यम् (→गणदेवमुख्यं) –c) प1 शिवा च पुत्रेण, दे1 शिलादपुत्रेण, दे10 शिलादिपुत्रेण, ते1 शिलादपुत्रेण, प्र2 शिलादपुत्रेण (→शिलादपुत्रेण), न1 मातृकोटिभि (→मातृकाभि) –d) प्र2 काल स रुद्रोभि, दे10 सहकालदेवोपि (→स कालरुद्रोऽभि-), दे5 8 9 मुवँ मुए मुव °रुद्रापि, ते1 °रुद्रोप (→°रुद्रोऽभि-), दे2 दैत्य (→देव)

१७१ –a) न1 शिलानुकूल (→कृशानुकल्प) –b) ते1 देवदेवम् (→देवदेव) –c) द1 गणनाथ°, प्र1 गजराज°, प्र2 गिरिवर्य° (→गणराज°), दे1 °वर्गा (→°वर्या) –d) दे1 °बाह (→°बाहु), न1 जगाम देव सह वज्रबाहु

१७२ –a) म1 जगाम (→रराज), दे3 पुराणो, दे8 पुराणा (→सुराणां) –b) दे2 गोवारिजो, दे4 विवाहिनो, दे10 विवादनो, प्र1 विहायनो (→विवाहनो), का1 दे1 10 न1 द1 प्र1 2 म1 वारिजवर्ण° दे1 वारिदवारि°, दे8-9 मुवँ मुए मुव वारिदपर्ण° (→वारिदवर्ण°) –c) दे9 तमाशु मेरा, दे8-9 तमाशु मेरा, द1 प्र1 2 म1 यथा सुमेरो (→तदा सुमेरो), दे1 शिखराभिरूढम्, दे6 शिखराधिरूढास्, द1 शिखरादिकूटम् (→शिखराधिरूढम्) –d) दे1 त्रैलोक्य° (→त्रिलोक°), दे10 °वृत्तिर् (→°दृष्टिर्), न1 प्रभाक (→इवार्क)

१७३ –a) व1 जगन्त्यनादिर्, दे1 जगभिनादिर्, दे8 10 प्र1 जयत्यनादिर्, न1 भय रवनादिर्, ते1 जदत्वनादिर् मुवँ मुए मुव जयमनादिर् (→जगत्यनादिर्) –b) दे8 10 हरि (→हर), प1 सहस्रदाशिरा°, दे3 8 सहस्राहनिना° (दे8 वा°) (→सहस्राकृतिरा°) –c) दे6 °पाणि, ते1 °पाणे (→°पाणिर्), व1 ते1 गगने, व3 दे2 3 4 8 गगणे (→गगने), व2 3 दे1 सुघोर, दे2 सुशोभा, द1 म1 सुघोषा, प्र2 सुघोषे (→सुघोष) –d) दे5 पुष्प° (?) (→पुष्प°)

समागतं वीक्ष्य गणेशराजं
समावृतं देवरिपुर्गणेशैः ।
युयोध शक्रेण समातृकाभि-
र्गणैरशेषैरमरप्रधानैः ॥१७४

विजित्य सर्वानपि बाहुवीर्यात्
स संयुगे शंभुमनन्तधाम ।
समाययौ यत्र स कालरुद्रो
विमानमारुह्य विहीनसत्त्वः ॥१७५

दृष्ट्वाऽन्धकं समायान्तं भगवान् गरुडध्वजः ।
व्याजहार महादेवं भैरवं भूतिभूषणम् ॥१७६

हन्तुमर्हसि दैत्येशमन्धकं लोककण्टकम् ।
त्वामृते भगवान् शक्तो हन्ता नान्योऽस्य विद्यते ॥१७७

त्वं हर्ता सर्वलोकानां कालात्मा ह्यैश्वरी तनुः ।
स्तूयसे विविधैर्मन्त्रैर्वेदविद्भिर्विचक्षणैः ॥१७८

स वासुदेवस्य वचो निशम्य भगवान् हरः ।
निरीक्ष्य विष्णुं हनने दैत्येन्द्रस्य मतिं दधौ ॥१७९

जगाम देवतानीकं गणानां हर्षमुत्तमम् ।
स्तुवन्ति भैरवं देवमन्तरिक्षचरा जनाः ॥१८०

जयानन्त महादेव कालमूर्ते सनातन ।
त्वमग्निः सर्वभूतानामन्तश्चरसि नित्यशः ॥१८१

त्वं यज्ञस्त्वं वषट्कारस्त्वं धाता हरिरव्ययः ।
त्वं ब्रह्मा त्वं महादेवस्त्वं धाम परमं पदम् ॥१८२  वें १६ १८८

---

१७४ –a) द₁ गणाधि° (→गणेश°), दे₁ °राज (→°राजं) –b) दे₄ ब₁ समाश्रित द₁ समागत (→समावृत), ब₁ देवरिपु, दे₁ देवरिपु दे₈-₁₀ मुवँ मुए मुव दैत्यरिपु, प्र₂ देवमिर्भर् (→देवरिपुर्), प्र₂ गणेश (→गणेशैः) –c) प्र₂ म₁ चक्रेण (→शक्रेण), क₁ दे₁ समातृ•भिर् न₁ समातृका-(दि)भिर् (→समातृकाभिर्)

१७५ तै₁ bO –a) प्र₁ ₂ म₁ विचिन्त्य (→विजित्य) –b) का₁ दे₅ ₆ रात, ब₁-₃ दे₄ ₈-₁₀ द₁ प₁ ₂ म₁ मुवँ मुए मुव शम्भुर्, न₁ नित्यम् (→शम्भुम्), का₁ व₂ ₃ दे₃ ₃ ₅ ₈ ₉ न₁ द₁ प₁ म₁ मुवँ मुए मुव °धामा ब₁ °वीर्य (→°धाम) –c) द₅ शम्भु (?), द₁₀-रुद्र(?), प्र₂ तत्र (→यत्र) –d) का₁ समास्थितत्व दे₂ विनाशबुद्धि, दे₁ ₃ विमा (दे₅ °मो) मगस्य (→विहीनसत्त्व), ब₁ दे₁₀° सत्त्व(?) दे₁ °सत्त्वा, प्र₂ °सत्त्वव (→°सत्त्व) –cd) म₁ म मायया-बल्यतगहृतार्थं सकालरुद्रो भगवानिमम्

१७६ –a) प्र₂ दृष्ट्वान्तक (→दृष्ट्वाऽन्धकम्) –d) प्र₂ भूत° (→भूति°), दे₄ भैरव भाषण तथा.

१७७ –a) प्र₂ म₁ दैत्येन्द्र (→दैत्येश) –b) प्र₂ म नक (→मन्धकं) –c) दे₁ ₃ ₄ ₉ न₁ म₁ भगवन् (→भगवान्), म₁ ब्रह्मन्, दे₄ शक्तो, दे₅ शक्तो, द₁ शक्ति (→शक्तो) –d) ब₁ द₁ हन्तुर् (→हन्ता), दे₂ नान्योऽस्ति, दे₆ नान्योऽस्ति, दे₁₀ नान्यो(स्य ?)स्य, तै₁ नान्यान्य (→नान्योऽस्य)

१७८ –a) दे₂ हन्ता (→हर्ता) –b) दे₁ एकात्मा (→कालात्मा), द₁ ऐश्वरी, प्र₂ ऐश्वरं (→ह्यैश्वरी) –c) ब₁ दे₁ ₃ ₅ ₈ न₁ द₁ प्र₁ ₂ म₁ स्तूयसे, दे₈-₁₀ स्तूयते (→स्तूयसे), दे₈-₁₀ विविधा(दे₉ °धो) (→विविधैर्), व₂ द₂ मन्त्रैर् (→मन्त्रैर्) –cd) दे₈ ₁₀ स्तूयते विविधो (द₁ °धो ?) भीमो दानवानां गणाग्रणी (दे₁₀ °ती)

१७९ दे₃ ₆ १७९ a–१८० d O –a) द₁ प्र₁ ₂ म₁ स वासुदेववचनं –c) दे₂ निरीक्ष्य हनने विष्णु –d) व₂ मतो (→मतिं) का₁ व₃ दे₄ ₅ न₁ द₁ प्र₁ दधे (→दधौ).

१८० दे₃ ₆ O –a) का₁ व₁ दे₅ जगाम देवतानां च –b) न₁ देवानां (→गणानां) का₁ व₂ ₃ दे₅ हर्षवर्धनम्, दे₁ मुवँ मुए मुव हर्षवर्धनम्, दे₂ ₈ ₁₀ न₁ हर्षमुत्तमं (→हर्षमुत्तमम्) –c) दे₁₀ भैरवा (→भैरव) –d) प्र₂ जन (?) (→जना)

१८१ –a) दे₆ जयान्त च प्र₂ जयानन्द (→जयानन्त), प्र₂ °देव (→°देव) –b) दे₁₀ कालमूर्ति प्र₂ कालमूर्ति (→कालमूर्ते) व₁ सनातन दे₂ सनातना, प्र₂ सनातन, तै₁ •••• (→सनातन) –c) व₁ तै₁ त्वमग्ने (→त्वमग्नि), दे₈ ₉ मुवँ मुए मुव °भावानां (→°भूतानां) –d) ब₁ चरति, दे₁ ₈-₁₀ मुवँ मुए मुव तिष्ठसि (→चरसि), दे₁ ₂ सर्वदा, दे₈-₁₀ मुवँ मुए मुव सर्वेग (→नित्यशः), प्र₂ मन्दरस्थापि निश्चयः

१८२ –a) दे₁ ₈-₁₀ मुवँ मुए मुव त्वमनन्तको लोकक (दे₁ °ह)र्ता, न₁ त्वं धाता सर्वलोकानां, तै₁ त्वं यज्ञस्त्वमहं धाता –b) दे₄ त्वं पतिर्, दे₅ त्वं धातुर्, न₁ त्वमेव, तै₁ विधाता, द₁ प्र₁ ₂ प₁ त्वं धाता (→त्वं धाता), दे₁₀ त्वं धाता धातस्त्वमेव –d) दे₈-₁₀ न₁ धाता, तै₁ नाम (→धाम).

र्यें सगरस्यापि प्रभा भानुमती तथा ।
ामाराधितः प्रादादौर्वाग्निर्वरमुत्तमम् ॥६
भानुमती पुत्रमगृह्लादसमञ्जसम् ।
षष्टिसहस्रं तु पुत्राणा जगृहे शुभा ॥७
नञ्जस्य तनयो ह्यंशुमान् नाम पार्थिवः ।
पुत्रो दिलीपस्तु दिलीपात् तु भगीरथः ॥८
भागीरथी गङ्गा तपः कृत्वाऽवतारिता ।
ादाद् देवदेवस्य महादेवस्य धीमतः ॥९
रथस्य तपसा देवः प्रीतमना हरः ।
र शिरसा गङ्गा सोमान्ते सोमभूषणः ॥१०

भगीरथसुतश्चापि श्रुतो नाम बभूव ह ।
नाभागस्तस्य दायादः सिन्धुद्वीपस्ततोऽभवत् ॥११
अयुतायुः सुतस्तस्य ऋतुपर्णस्तु तत्सुतः ।
ऋतुपर्णस्य पुत्रोऽभूत् सुदासो नाम धार्मिकः ।
सौदासस्तस्य तनयः ख्यातः कल्माषपादकः ॥१२
वसिष्ठस्तु महातेजाः क्षेत्रे कल्माषपादके ।
अश्मकं जनयामास तमिक्ष्वाकुकुलध्वजम् ॥१३
अश्मकस्योत्कलायां तु नकुलो नाम पार्थिवः ।
स हि रामभयाद् राजा वनं प्राप सुदुःखितः ॥१४ वें १.२१।१३

६ –a) न$_1$ ह्री (?) (→र्ह्रे), प्र$_2$ भार्या (→भार्ये), सगरस्यापत्य, ते$_1$ द$_1$ श्र$_{1\ 2}$ म$_1$ सगरस्यास्ता (→सगर-स्यापि) –b) प्र$_2$ शुभा (→तथा) –c) दे$_{8\ 10}$ मुवें मुए मुव ... (→प्रादाद्) –d) व$_1$ श्रौ**, व$_{2\ 3}$ दे$_{2\ 3\ 5}$ श्रौर्वोग्नि, पुरातिन, दे$_8$ 10 स ददौ, मुवें मुए मुव. प्रददौ (→श्रौर्वा॰ ...), दे$_4$ मौर्वं परमधर्मवित्, द$_1$ श्र$_{1\ 2}$ म$_1$ श्रौर्वं परम ...वान्

७ दे$_2$ ७a एक' इत्यारभ्य २६ c 'श्र।न' यावत् ...त्रितम् –a) दे$_3$ एका (→एक), द$_1$ पुत्राद् (→पुत्रम्) c) दे$_{10}$ वृष्टि॰ (→षष्टि॰), दे$_1$ न$_1$ ॰सहस्राणां (न$_1$ ॰णि) द$_1$ सहस्रस्तु (→॰सहस्रं तु) –d) दे$_4$ पुत्रास्ता, द$_1$ श्र$_1$ पुत्रास्तान् (→पुत्राणा) दे$_1$ शुभा, द$_1$ श्र$_1$ शुभान् श्र$_2$ शुभ म$_1$ शुभ + ...त (→शुभा)

८ दे$_2$ ○ (द्र ७ पा वि) –a) व$_3$ असमजसस, ...$_3$ असमज(सस्)स्तु, दे$_4$ असमज(स)स्य दे$_6$ असमजस्तु दे$_3$ मुवें मुए मुव. असमजस (→असमञ्जस्य), दे$_1$ 8-10 न$_1$ मुवें मुए मुव पुत्रोऽभूद् (→तनयो) –b) न$_2$ अंशुमानेन, दे$_1$ 8-10 न$_1$ प्र$_2$ मुवें मुए, मुव अंशुमाञ्चाम, दे$_4$ त्वंशुमाञ्चाम (→ह्यंशुमाञ्चाम), दे$_8$ वीर्यवान् दे$_9$ वीर्यवान् + पार्थिव म$_1$ नामत (→पार्थिव) –c) प्र$_1$ अस्य (→तस्य) –d) का$_1$ दे$_{4\ 5}$ न$_1$ च (→तु)

९ दे$_2$ ⊙ (द्र ७ पा वि) –a) न$_1$ एन (→येन) –c) दे$_5$ प्रसा*द् (→प्रसादात्)

१० दे$_2$ ○ (द्र ७ पा वि) –a) दे$_1$ भगीर्थस्य (→भगीरथस्य) –b) का$_1$ दे$_{10}$ द$_1$ देव- (→देव), का$_1$ प्रीति, दे$_5$ प्रीति- (→प्रीत-), का$_1$ दे$_5$ न$_1$ मनोहर, दे$_1$ मन हर (→मना हरः) –c) का$_1$ व$_{2\ 3}$ दे$_{3\ 5\ 6}$ द$_1$ श्र$_1$ म$_1$ दधार, द$_1$ ***, दे$_4$ चचार (→बभार), दे$_{5\ 6\ 9\ 10}$ न$_1$ ते$_1$ गङ्गा (→गङ्गा) –d) वे$_1$ सोमाश (→सोमान्ते), म$_1$ ॰शेखर (→॰भूषणः)

११ दे$_2$ ○ (द्र ७ पा वि) –a) दे$_{10}$ भागीरथ॰ (→भगीरथ॰), दे$_4$ भगीरथस्तु तश्चापि, द$_1$ श्र$_{1\ 2}$ म$_1$ भगीरथस्य तनय (श्र$_{1\ 2}$ ॰या) –b) दे$_1$ सुतो नाम, दे$_4$ शृण्वता मा, ते$_1$ ऋतुर्नाम म$_1$ सुतो नाम (→श्रुतो नाम) –c) का$_1$ नाभगस्तस्य, दे$_1$ नाभागवस्य (→नाभागस्तस्य), द$_1$ दायादा (→दायाद) –d) दे$_3$ सिन्धु (→सिन्धु-), दे$_{8\ 9}$ समो, दे$_{10}$ तथा (→ततो)

१२ दे$_2$ ○ (द्र ७ पा वि), द$_1$ १२c-१४b ○ (द्र स), दे$_{10}$ ab ○ –a) व$_3$ अस्मतायु, दे$_1$ अयु॰तायु (→अयुतायु) व$_{1\text{-}3}$ दे$_{3\ 5}$ ते$_1$ तस्या (→तस्य) –b) दे$_3$ प्र$_2$ म$_1$ ऋतुपर्णस्य, दे$_5$ धृतुपर्णस्तु (→ऋतुपर्णस्तु), दे$_{8\ 9}$ मुवें मुए, मुव ऋतुपर्णो महा (मुवें ॰बा(?))बल, ते$_1$ ऋतुपर्णोऽभवत् सुत –c) दे$_{8\text{-}10}$ तस्याभूत् (→पुत्रोऽभूत्) –d) द$_1$ सुदामा (→सुदासो) –e) प्र$_2$ सोषास (?) (→सौदासस्) –f) दे$_6$ ख्याता (→ख्यात)

१३ दे$_2$ ○ (द्र ७ पा वि), द$_1$ ○ (द्र १२ पा वि) –a) दे$_3$ न$_1$ वशिष्ठ (→वसिष्ठ) –b) प्र$_2$ कल्मष॰ (→कल्माष॰) –c) दे$_4$ अश्माक, न$_1$ प्र$_2$ अस्मक (→अश्मक) –d) का$_1$ मिक्ष्वाकुना कुलध्वजम्, दे$_{1\ 5}$ इक्ष्वाकुकुलवर्द्धन (दे$_5$ ॰ज), दे$_{10}$ सा मिक्ष्वा कुले ध्वज, प्र$_2$ ईक्ष्वाकुकुलसद्दण, म$_1$ इक्ष्वाकुकुलनन्दन

१४ दे$_2$ ○ (द्र ७ पा वि), द$_1$ ab ○ (द्र १२ पा वि) –a) का$_1$ व$_{1\text{-}3}$ दे$_{3\text{-}6}$ न$_1$ ते$_1$ प्र$_1$ म$_1$ [उ]त्कलाया (→[उ]त्कलायां), व$_1$ च (→तु), दे$_1$ अश्मकस्य कश्याया, प्र$_2$ आश्मकस्योत्कलायस्तु –b) दे$_4$ श्र$_{1\ 2}$ धार्मिक (→पार्थिव) –c) का$_1$ प्र$_2$ स हिरण्यो भवद् राजा –d) दे$_{1\ 4}$ प्राप्य (→प्राप)

वें १.२१.१४ विभ्रत् स नारीकवचं तस्माच्छतरथोऽभवत् ।
तस्माद् बिलिबिलिः श्रीमान् वृद्धशर्मा च तत्सुतः ॥१५
तस्माद् विश्वसहस्तस्मात् खट्वाङ्ग इति विश्रुतः ।
दीर्घबाहुः सुतस्तस्य रघुस्तस्मादजायत ॥१६
रघोरजः समुत्पन्नो राजा दशरथस्ततः ।
रामो दाशरथिर्वीरो धर्मज्ञो लोकविश्रुतः ॥१७
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ।
सर्वे शक्रसमा युद्धे विष्णुशक्तिसमन्विताः ।
जज्ञे रावणनाशार्थं विष्णुरंशेन विश्वकृत् ॥१८

रामस्य सुभगा भार्या जनकस्यात्मजा शुभा ।
सीता त्रिलोकविख्याता शीलौदार्यगुणान्विता ॥१९
तपसा तोषिता देवी जनकेन गिरीन्द्रजा ।
प्रायच्छज्जानकीं सीतां राममेवाश्रिता पतिम् ॥२०
प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः ।
प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः ॥२१
स राजा जनको विद्वान् दातुकामः सुतामिमाम् ।
अघोषयदमित्रघ्नो लोकेऽस्मिन् द्विजपुङ्गवाः ॥२२
इदं धनुः समादातुं यः शक्नोति जगत्त्रये ।
देवो वा दानवो वाऽपि स सीतां लब्धुमर्हति ॥२३

---

१५ दे₂ ⊙ (द्र ७ पा वि) –a) दे₁ मुत स, दे₆-₁₀ विपत् स, गं₁ सो सुज, प्र₁ मीतात् स, मुर्वे मुए मुव दधत् स (→विभ्रत् स), दे₁ प्र₂ °कवच(म) (→°कवच) –b) दे₁ शा॰, तै₁ न त°, द₁ प्र₁ ३ म₁ दश° (→शत°) –c) शा₁ व₃ दे₅ ₆ म₁ तै₁ इतिबिलि, व₁ इलिवलि, व₂ दे₅ इलविलि, दे₄ इति वलि, दे₉ ₁₀ चिलिबिलि, द₁ प्र₁ बलिश्च, प्र₂ अलि॰॰, म₃ दशरथात् (→बिलिबिलि) –d) न₁ वपचर्मा, तै₁ भूतर्मा॰ (→वृद्धशर्मा); प्र₃ शत्रुघ्न(श्च) महाबल

१६. दे₂ ⊙ (द्र. ७ पा वि), प्र₂ १६a–१६b ⊙ (द्र स) –a) प्र₁ ३ दे₃ ₆ °रह, व₂ तै₁ द₁ प्र₁ °वह, न₁ मह(नि) (→°सह). –b) व₃ दे₈ खट्वा (व₃ °ट्व) न, दे₅ खड्गाङ्ग (→खट्वाङ्ग) –c) दे₁ ₆ ₉ ₁₀ दीर्घबाहु (→दीर्घबाहु), प₃ ॰स्य, दे₈ ₁₀ मुर्वे मुए मुव तस्माद् (→तस्य), म₁ नाम्ना दिलीपो धर्मात्मा –d) दे₅ ₈ ऽप्यजायत (→ऽजायत)

१७ व₂ अपठनीय, दे₂ ○ (द्र ७ पा वि), प्र₂ ○ (द्र १६ पा वि) –a) दे₄ तस्मात् (→रघो), तै₁ समुत्पन्न(?) (→समुत्पन्नो) –b) तै₁ प्रजा (→राजा), दे₁ द॰ रथ (→दशरथ) तै₁ द₁ सुत (→ततः) –c) दे₅ शूरो (→वीरो)

१८ व₂ अपठनीय, दे₂ ○ (द्र ७ पा वि), प्र₂ ab ○ (द्र १६ पा वि) –a) दे₁₀ भरतो (→भरतो), दे₅ भरतो महाणवैव, म₁ लक्ष्मणो भरतश्चैव, ग₁ भरतो लक्ष्मण श्रीमान् –c) द₁ शत्° (→शक्र°) –d) शा₁ तै₁ प्र₂ म₁ भक्ति° (→शक्ति°); दे₁₀ म₁ °शक्तिर (→°शक्ति स्म), प₁ विष्णोरंशसमुद्भवा, –e) दे₁ ना॰र्थ, न₁ नाशाय, द₁ प्र₁ २ नाशार्थे (→नाशार्थं) –f) दे₅ विष्णो, दे₁₀ विश्व (→विष्णु), दे₈-₁₀ द₁ मुर्वे मुए मुव विश्वकृत् (द₁ °कृत्) (→विश्वकृत्), दे₁ विश्वसृग्विश्वभावन, दे₂ विष्णुर्बलविश्वकृत्, दे₆ विस्तर शैलविश्वकृत्.

१९ दे₂ ○ (द्र ७ पा वि) –a) व₁ रामसु (?) (→रामस्य), दे₁ भार्या शुभगा, वे₃॰ शुभगार्या दे₈ ₁₀ न₁ मुर्वे मुए मुव भार्या शुभगा, द₁ प्र₁ सुमहाभार्या (→सुभगा भार्या) –b) दे₈ ₉ सुता (→शुभा) –c) शा₁ प्र₁-₃ दे₃-₆ द₁ प्र₁ ₂ म₁ सीतेति लोक- (प₃ दे₃ ₄ लोके) (→सीता त्रिलोक-) –d) दे₆ ₉ शीलोदार°, दे₁₀ द₁ प्र₁ २ म₁ शीलाख्या (दे₁₀ °दा) द° (→शीलौदार्य°)

२० दे₂ ○ (द्र ७ पा वि) –a) न₁ तपसा (→तपसा), दे₁ तोषितो (→तोषिता) –c) शा₁ दे₁ ₈ ₁₀ तै₁ प्र₂ प्रायच्छत (→प्रायच्छत्), प्र₂ ३ शा त (→सीतां) –d) दे₄ एवाप ता (?), दे₃ द₁ प्र₁ मुर्वे मुए मुव एवाश्रिता (→एवाश्रिता)

२१ दे₂ ⊙ (द्र ७ पा वि) –a) दे₁ ₄ द₁ प्र₁ म₁ प्रीतस्तु, दे₈ प्रीतश्च, प्र₂ ईशस्तु (→प्रीतश्च)

२२ दे₂ ○ (द्र ७ पा वि) –a) दे₁ ₈ ₁₀ मुर्वे मुए मुव धीमान (→विद्वान) –b) दे₁ ॰॰(→दातु°), न₁ गुणाभिमाम् (→सुतामिमाम्) –c) दे₃ घोषयत् (→अघोषयद्), दे₅ अमित्रघ्नो (→अमित्रघ्नो) –d) प्र₂ °पुङ्गव (→°पुङ्गवा)

२३ दे₂ ○ –a) दे₄ समाधातुं, दे₈-₁₀ समादातुं, दे₉ समादातुं (→समादातुं) –c) दे₄ ॰ (→वा), शा दानवो (→दानवो) –d) दे₁₀ सर्वीता (→स सीतां)

विज्ञाय रामो बलवान् जनकस्य गृहं प्रभुः ।
भञ्जयामास चादाय गत्वाऽसौ लीलयैव हि ॥२४

उद्वाह च तां कन्यां पार्वतीमिव शंकरः ।
रामः परमधर्मात्मा सेनामिव च षण्मुखः ॥२५

ततो बहुतिथे काले राजा दशरथः स्वयम् ।
रामं ज्येष्ठं सुतं वीरं राजानं कर्तुमारभत् ॥२६

तस्याथ पत्नी सुभगा कैकेयी चारुभाषिणी ।
निवारयामास पतिं प्राह संभ्रान्तमानसा ॥२७

मत्सुतं भरतं वीरं राजानं कर्तुमर्हसि ।
पूर्वमेव वरो यस्माद् दत्तो मे भवता यतः ॥२८

स तस्या वचनं श्रुत्वा राजा दुःखितमानसः ।
बाढमित्यब्रवीद् वाक्यं तथा रामोऽपि धर्मवित् ॥२९

प्रणम्याथ पितुः पादौ लक्ष्मणेन सहाच्युतः ।
ययौ वनं सपत्नीकः कृत्वा समयमात्मवान् ॥३०

संवत्सराणां चत्वारि दश चैव महाबलः ।
उवास तत्र मतिमान् लक्ष्मणेन सह प्रभुः ॥३१

कदाचिद् वसतोऽरण्ये रावणो नाम राक्षसः ।
परिव्राजकवेषेण सीतां हृत्वा ययौ पुरीम् ॥३२

अदृष्ट्वा लक्ष्मणो रामः सीतामाकुलितेन्द्रियौ ।
दुःखशोकाभिसंतप्तौ बभूवतुररिंदमौ ॥३३ वे.१ २१ ३३

---

२४ दे2 O. (द्र ७ पा वि) -a) दे1 भगवान् (→बलवान्) -b) ते1 गृहे, द1 गह (?) (→गृह), दे1 द1 म1 2 म1 प्रति (→प्रभु) -c) दे1 भजयामास (→भञ्जयामास), द1 प्र1 म1 च धनुर् (→चादाय), प्र2 आरोपयामास च त. -d) का1 गत्वेमा (→गत्वासौ), दे5 न1 लीलया वहि (न1 धनु) (→लीलयैव हि)

२५ दे2 ⊙ (द्र ७ पा वि) -a) का1 दे5 6 उद्वाहयता, व2 दे1 उदुवाह वाह्य (वा1 °वत्) दे8-10 मुवें मुए मुब उद्ववाहाण, प्र2 उद्वाह्य च • (→उद्ववाह च), व2 देवीं, म1 सीता (→कन्या) -d) प्र2 सेनानीव (→सैनामिव), दे1 देव सेनामि • गिनज

२६ दे2 O (द्र ७ पा वि), दे0 २६d-२८a (द्र ए) O -b) दे10 प्र1 म1 दशरथ(?)(→दशरथ) -c) -d) प1 दे1 4 8-10 म1 मुवें मुए मुब ज्येष्ठ (→ज्येष्ठं) -d) प1 दे1 न1 धारगे(न1 °भेत्), दे1 महति (→आरभत्), दे10 राजानं कर्तुमारभत्

२७ दे2 O (द्र ७ पा वि), दे0 O (द्र २६ पा वि) -a) न1 तस्यापि (→तस्याथ), दे1 तस्याथ सुभगा देवी -b) व2 केकयी, ते1 कैकया (→कैकेयी) ते1 •• (→चारु-), दे1 4 8-10 न1 ते1 द1 प्र1 2 म1 मुवें मुए मुब °हासिनी (→°भाषिणी) -d) प1 प्रभा (→प्राह), प्र2 °मानस (→°मानसा), दे1 प्राह सोपसभानग

२८ दे2 O (द्र ७ पा वि), दे0 O (द्र २६ पा वि) -a) दे5 मत्सुतं, दे10 तत्सुत (→मत्सुतं), शा1 वीरराजानं, दे10 भारत वीर (→भरतं वीरं) -b) दे1 ब1 दे3 यहेसि (→र्हसि), पा1 कर्तुमर्हसि वै प्रभो. -c) दे1 रव्या पूर्वं-, दे10 पूर्वमेवं (→पूर्वमेव), प1 दे8 मुवें. मुब बली, दे5 वरो, न1 वयो (→वरो) -d) पा1 दत्तं हि, प1-3 दे8 न1 द1 मुवें मुए दत्तो मे, दे3 व्यमे •, दे8 गतो मे (→दत्तो मे), ब1 3 दे5 ते1 च यत, व2 दे1 [म]नय, दे8 यय, न1 प्रभो!, द1 प्र1 2 म1 चय (प्र2 •) (→यतः), दे4 त मे भगवता च यत्

२९ दे2 O (द्र ७ पा वि) -a) म1 न1 स तस्य, प्र2 •• स्य (→स तस्य) -b) न1 राजा न खिन्नमानस, द1 राजा च चिन्तमानस -d) दे4 ते1 द1 प्र1 म1 तदा (→तथा), का1 व2 3 दे3 5 6 रामो हि (→रामोऽपि)

३० दे2 O (द्र ७ पा वि) -a) प्र1 2 प्रणम्य च (प्र2 °ता) (→प्रणम्याथ) -b) दे10 लक्ष्मणेना (?) (→लक्ष्मणेन), म1 सह (→सहा) -c) द1 सपत्नीक (→सपत्नीक), -d) दे1 °वाप्तवान् (→°मात्मवान्)

३१ दे2 O (द्र ७ पा वि) -b) द1 दशवैव (→दश चैव) -c) दे1 न1 उवास, प्र2 निवास (→उवास), प्र2 तस्य (→तत्र), दे8 10 मुवें मुए मुब भगवान् (→मतिमान्)

३२ दे2 O (द्र ७ पा वि) -a) शा1 वसते, दे1 वसतो ? (→वसतो) -c) ते1 परिव्राट् छद्म° (→परिव्राजक°), शा1 ब1-3 दे1 3 5-6 °वेशेन, प्र2 °रूपाद् (→°वेषेण) -d) दे3 6 हृत्वा (→हृत्वा), प्र2 पुर(?)(→पुरी)

३३ दे2 O (द्र ७ पा वि) -a) दे10 पश्यन् (→अदृष्ट्वा) -b) का1 ब1 3 दे3 6 10 ते1 द1 प्र2 म1 °तेन्द्रिय (दे10 °यो), व2 °तेनण (→°तेन्द्रियौ), दे1 सीतामाकुलचेन्द्रियो -c) दे8 मनसो, दे8 9 गात्रासो (→°संतप्तौ), ब3 दुःखशोकाभिनन्दनौ, प्र1 दुःखशोकाभि•न्तौ -d) दे5 परिंदमौ (→परिंदमौ).

कू.१.२१.३३ ततः कदाचित् कपिना सुग्रीवेण द्विजोत्तमाः ।
वानराणामभूत् सख्यं रामस्याक्लिष्टकर्मणः ॥३४
सुग्रीवस्यानुगो वीरो हनुमान् नाम वानरः ।
वायुपुत्रो महातेजा रामस्यासीत् प्रियः सदा ॥३५
स कृत्वा परमं धैर्यं रामाय कृतनिश्चयः ।
आनयिष्यामि तां सीतामित्युक्त्वा विचचार ह ॥३६
महीं सागरपर्यन्तां सीतादर्शनतत्परः ।
जगाम रावणपुरीं लङ्कां सागरसंस्थिताम् ॥३७
तत्राथ निर्जने देशे वृक्षमूले शुचिस्मिताम् ।
अपश्यदमलां सीतां राक्षसीभिः समावृताम् ॥३८
अश्रुपूर्णेक्षणां हृद्यां संस्मरन्तीमनिन्दिताम् ।
राममिन्दीवरश्यामं लक्ष्मणं चात्मसंस्थितम् ॥३९
निवेदयित्वा चात्मानं सीतायै रहसि स्वयम् ।
असंशयाय प्रददावस्यै रामाङ्गुलीयकम् ॥४०
दृष्ट्वाऽङ्गुलीयकं सीता पत्युः परमशोभनम् ।
मेने समागतं रामं प्रीतिविस्फारितेक्षणा ॥४१
समाश्वास्य तदा सीतां दृष्ट्वा रामस्य चान्तिकम् ।
नयिष्ये त्वां महाबाहुरुक्त्वा रामं ययौ पुनः ॥४२
निवेदयित्वा रामाय सीतादर्शनमात्मवान् ।
तस्थौ रामेण पुरतो लक्ष्मणेन च पूजितः ॥४३

---

३४ दे२ ⊙ (द्र ७ पा वि) -a) दे४ न१ द१ श्र१ २ पतिना (न१ °नी) (→कपिना) -c) व१ संख्य (→सख्य)

३५ दे२ ○ (द्र ७ पा वि) -a) न१ [श्र]नुगो (→[म]नुगो) तै१ सुग्रीव, सचिवोवीरो -b) का१ दे३ ६ तै१ म१ हनूमान् (→हनुमान्). -c) तै१ महावेजा (?) (→महातेजा) -d) दे१ सख (→सदा), दे५ रामस्य सा प्रिय सह, + रामस्याक्लिष्टकर्मण

३६ दे२ ab ○ (द्र ७ पा वि), दे५ ab ⊙ -a) तै१ सौख्य, + सख्य (→धैर्य) -c) व२ आनायिष्ये, दे३ ** यिष्यामि (→आनयिष्यामि), दे१ ** (→सीता) -d) दे३ वि * चार (→विचचार)

३७ -a) दे५ मही (→महीं) -b) दे१ सीता (→सीता-), व१ लालस, श्र१ तत्परं (→तत्पर) -d) का१ दे३ ५ ६ °मवृता (दे६ °त) (→°संस्थिताम्), दे४ द१ म१ २ लङ्का रावणपुरा (प२ पु)स्थितं म, म१ लङ्का रावणपालिताम्

३८ न१ d ○ -a) व२ तथाथ, म२ तत्रासौ (→तत्राथ), दे१० रिजने(?) (→निर्जने) -b) द१ म३ २ म१ वृक्षमूलेषु स्थिताम् -d) द१ राक्षसी च (→राक्षसीभि), दे१ समागता, दे५ समावृता (→समावृताम्)

३९ -a) का१ म२ ३ दीनां, व१ दे३ ७ दृष्ट्वा (दे३ °ष्ट्य), दे३ दृष्ट्य, म१ तदा, द२ दृष्ट्वा, म१ राम (→हृद्यां) -b) दे१ म२ स स्मरन्ती, दे१० सस्मरन्तं तां (→संस्मरन्तीम्), दे५ संस्मरन्तीमनीप्सितां, म१ संस्मरन्ती दिवानिशं -d) का१ चात्म° म१ ३ चात्म-, म२ चानु-, दे३ ६ चार्य- (दे३ °र्य) (→चात्म-), प१ -संस्मितं, ब२ मुर्वे मुए -वस्थिताम्, दे४ द१ प१ -संस्मितं, तै१ °सम्मतम्, (→संस्थितम्), प्र२ प्रलपद् विह्वलेक्षणा, म१ प्रीतिविह्वलितेक्षणा

म१ पुस्तके a चरणानन्तरमधिकम् हृदा विदूषणेन

४० प्र२ ab ⊙, म१ ४०-४१ d ⊙ (द्र स.) -b) व१ र** (→रहसि), दे१ २ ८-१० मुर्वे मुए मुव प्रभु (→स्वयम्), न१ सीतायै हरिपुङ्गव. -c) दे३ प्रददा ? (→प्रददौ) -d) दे२ तस्यै, प्र२ यस्य (→अस्यै), ब२ म१ रामस्य चाङ्गुलीयकम्

४१ म१ ○ (द्र ४० पा वि) -a) व१-२ दे३ [श] ङ्गुलीयक (→[म]ङ्गुलीयक), म१ म१ सीता (→सीता) -d) व१ दे८ ८ ९ न१ मुर्वे मुए मुव विस्फुरिते°, दे१० विस्फुरिते°, द१ प्र१ म१ विह्वलिते° (→विस्फारिते°), दे१ ५ १० °क्षणां (दे१ °ण) (→°क्षणा), प्र२ महाबाहु महाकृति

४२ -a) दे४ तथा, द१ म१ च तां (→तदा), व१ समाश्वासगता सीतां -b) व२ दे५ वान्तिक (→चान्तिकं), दे१ दृष्ट्वा राम तदन्तिकम्, प्र२ पैवु परम शासनम् -c) दे१ आनयिष्य च (→नयिष्ये त्वां), व१ दे१ ५ तै१ मुव मुए मुव महाबाहु, द१ प्र१ महाबाहो, म२ महं भूते, म१ मह रामं (→महाबाहु); ब२ नयिष्यति त्वा क * ह, व३ नयिष्यति त्वां श्रीराम. -d) का१ श्यत्वा, प२ ३ प्रोक्त्वा, न१ मुक्त्वा (→उक्त्वा), प्र२ सद्गम परमधार्मिकम्, म१ लक्ष्मणश्चाम-सम्मितम्

४३ -a) प्र२ म१ चात्मानं (→रामाय). -b) दे१ दर्शनं (→दर्शनम्), प्र२ म१ सीतायै रहसि स्थितम् (प१ °स्वयम्) -d) दे१ तु (→च)

ततः स रामो बलवान् सार्द्धं हनुमता स्वयम् ।
लक्ष्मणेन च युद्धाय बुद्धिं चक्रे हि रक्षसाम् ॥४४
कृत्वाऽथ वानरशतैर्लङ्कामार्गं महोदधेः ।
सेतुं परमधर्मात्मा रावणं हतवान् प्रभुः ॥४५
सपत्नीकं च ससुतं सभ्रातृकमरिंदमः ।
आनयामास तां सीतां वायुपुत्रसहायवान् ॥४६
सेतुमध्ये महादेवमीशानं कृत्तिवाससम् ।
स्थापयामास लिङ्गस्थं पूजयामास राघवः ॥४७
तस्य देवो महादेवः पार्वत्या सह शंकरः ।
प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥४८
यत् त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीह द्विजातयः ।
महापातकसंयुक्तास्तेषां पापं विनश्यतु ॥४९
अन्यानि चैव पापानि स्नातस्यात्र महोदधौ ।
दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥५०
यावत् स्थास्यन्ति गिरयो यावदेषा च मेदिनी ।
यावत् सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥५१
स्नानं दानं जपः श्राद्धं भविष्यत्यक्षयं कृतम् ।
स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥५२ नं १.२१.५२

---

अतः परं प्र२ ग१ पुस्तकयोरधिकम् —
•प्रणम्याथ प्रददावस्यै रामाङ्गुलीयकम् ॥
दृष्ट्वाङ्गुलीयं सीता प्रभुः परमशोभन ।
मेने समागतं रामं प्रीतिविह्वलितेक्षणा ॥
समाश्वास्य तदा सीतां वायुपुत्रः पुनर्ययौ । [Y]
निवेदयित्वा रामाय सीतादर्शनमात्मवान्॥ ( = ४०c-४३b)
[ –i) प्र२ प्रददावस्य (→प्रददावस्यै) –२) प्र२ °शोभन (→°शोभन ) –३) प्र२ महाबाहु महामति (→प्रीतिविह्वलितेक्षणा). –४) प्र२ मा गीते तु मजाताति मृते राम ययौ पुन ]

४४. –a) दे१ तु (→स) –b) दे५ सार्धं ह च मना स्वयम्. –d) म१ मति (→बुद्धिं), दे१ चक्रेभि-, दे३,६ चक्रेण. दे८-१० चक्रेति (→चक्रे हि), बं१ राक्षस , प३ राक्षसा, दे१,४ वे, द१ प१ म१ रक्षसा, दे५ राक्षसी. दे८-१० राक्षस, प२ मुवें राक्षस (→रक्षसाम्).

४५ –a) दे१ वानर (→वानर-), दे५ ••(→-शतै), म१ रामभ्रशार भगवान्, दे१ कृत्वाथ वानरैःसेतु, द१ प१ म१ कृत्वा सेतु, वानरैर्वा , प२ कृत्वा सेतुवरैस्तीर –b) दे१ २ न१ मार्गं (→मार्गं). बं१ दे५ महां(दे५ •)दध्ये, दे१ २ महोदधि, दे१ म१ द१ प१ २ म१ महोदधौ, दे८-१० दे१ महोदधिम (दे१० °धि) (→महोदधेः) –c) दे१ तीर्थं, प१ सेतु (→सेतुं).

४६ दे३,६ ४६c-४८d ⊙ (८ म.) –a) दे३-१० मुवें, मुए मुब. हि ससुतं, दे१ सह सुत (→च ससुतं), न१ मातुल चैव ससुतं. –b) दे२,४ द१ प१,२ म१ सभ्रातरं (→सभ्रातृकं), द१ दे५,८,१० प२ मरिंदम, म१ द१ प१ मरिंदमन् (→मरिंदमः).

४७ दे३,६ ⊙ (८. ४६ पा. टि.). –b) दे१ ईशानं कृत्तिवाससम् –c) प२ लिङ्गं च (→लिङ्गस्थं). द१ प१,२ सुस्थापयामास लिङ्गं, ग१ संस्थाप्य च महालिङ्गं. –d) दे१ शंकरम् (→राघव )

४८ दे३,६ ⊙ (८. ४६ पा टि.) –d) दे१ ददौ च (→दत्तवान्)

४९ –a) बं१-३ दे३-१० न१ दे१ प१ म१ ये, (→यत्) –b) दे१,८-१० द१ मुवें मुए मुब. द्रक्ष्यन्तीह (→द्रक्ष्यन्तीह) –c) बं१ °तान• (→°पातक°), बं१ दे४-१० °संयुक्ता(?) (→°संयुक्ता ) –d) दे१ •प, दे५ पापं (→पापं), प१ न१ दे१ विनश्यन्ति, दे१ द१ प१ २ म१ प्रणश्यन्ति, दे३ विनश्यन्ति, दे३-१० मुवें मुए मुब विनश्यति (→विनश्यतु)

५० दे३,६ ५०a-५१d ⊙. –a) दे५ चैवं (→चैव). –b) बं१ स्नानस्य च, दे१ नाशस्यात्र, म१ स्नानस्यात्र (→स्नात• स्यात्र) –d) दे१ ४ ५ १० यानि (→यान्ति)

५१. दे३,६ ⊙ –b) बं१ एतस्य, दे१ ५ दे१ प२ म१ एव च (दे४ °च), द१ एव तु, प१ एव त्व (→एषा च) –c) दे१ सेतु (→सेतुश्च), दे१ ८-१० म१ यावत् (→तावत्). –d) दे१ [स]था-, दे५ [स]तु- (→[स]या), दे१ स्थास्यामीह तरोहित , द१ मत्स्या• स्थास्यतिरोहित

५२ –a) दे१ स्नान-(→स्नानं), जप ,•ार • बं१-३ दे१,२,६,८-१० मुवें. मुए. मुब तप बं१, द१ प१ २ जपं, म१ जप• (→जप ) –b) बं१ बं१-३ दे३,५,६ म१ •१ भवे, दे४ द१ प१ म१ भवे, प२ भव (→भाव), दे९-१० मुवें. मुए मुब सर्वं भवतु चाक्षयम् –c) दे३ ••स्य (→लिङ्गस्य) –d) दे१ दिने पापं, न१ दीनपापं (→दिनपापं); बं१ प२ ३ दे३-६ प्रणाश (प१ °श्य) तु (→प्रणश्यति).

वें. १.२१.५२ इत्युक्त्वा भगवाञ्छंभुः परिष्वज्य तु राघवम् ।
सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ॥५३
रामोऽपि पालयामास राज्यं धर्मपरायणः ।
अभिषिक्तो महातेजा भरतेन महाबलः ॥५४
विशेषाद् ब्राह्मणान् सर्वान् पूजयामास चेश्वरम् ।
यज्ञेन यज्ञहन्तारमश्वमेधेन शंकरम् ॥५५
रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ।
लवश्च सुमहाभागः सर्वतत्त्वार्थवित् सुधीः ॥५६
अतिथिस्तु कुशाज्जज्ञे निषधस्तत्सुतोऽभवत् ।
नलस्तु निषधस्याभून्नभस्तस्मादजायत ॥५७
नभसः पुण्डरीकाख्यः क्षेमधन्वा च तत्सुतः ।
तस्य पुत्रोऽभवद् वीरो देवानीकः प्रतापवान् ॥५८
अहीनगुस्तस्य सुतो सहस्वांस्तत्सुतोऽभवत् ।
तस्माच्चन्द्रावलोकस्तु तारापीडस्तु तत्सुतः ॥५९
तारापीडाच्चन्द्रगिरिर्भानुवित्तस्ततोऽभवत् ।
श्रुतायुरभवत् तस्मादेते इक्ष्वाकुवंशजाः ।
सर्वे प्राधान्यतः प्रोक्ताः समासेन द्विजोत्तमाः ॥६०

---

५३ ग्र2 ⊙, दे1 cd ⊙ -a) दे9 इत्युक्ता, ते1 इत्याह (→इत्युक्त्वा), का1 व1 दे2 3 6 म1 शाम्ब, दे4 देव, दे5 साक्षात्, द1 ग्र1 म1 वाच (→शम्भु), दे10 इत्युक्त्वा स**** -b) दे2 परिपूज्य, दे3 5 6 परित्यज्य (→परिष्वज्य), का1 व1-3 दे1 6 न1 ते1 द1 ग्र1 म1 च (→तु), दे3 6 राघवौ (→राघव), दे10 परितुष्यति राघवम् -c) का1 व1 3 दे3 5 6 ते1 स नन्दि, दे3 सहाय (→स नन्दी)

५४ ग्र2 ab ○ -a) दे10 रामादि (→रामोऽपि) -b) न1 परायणं (→°परायणः), दे3 *****रायण दे4 द1 ग्र1 म1 राज्य परमधार्मिक. -c) दे2 महाबाहु (→महातेजा) -d) दे3 ययोध्याया (→भरतेन)

५५ -a) द1 ग्र1 2 विदु(द1 ग्र2 °दो)षात् (→विशेषाद्), दे5 प्रयुता (→ब्राह्मणान्) -b) व2 3 चेश्वर (→चेश्वरम्) -c) द1 ग्र1.2 म1 यज्ञंदच (→यज्ञेन), द1 हुता च (→हन्तार) -d) ते1 चेश्वरम् (→शंकरम्)

५६ -b) व3 °श्रीयते (→°विश्रुत) -c) दे4 जवस्य (→लवश्च), दे3 महाभागा (→महाभाग) -d) द1 तत्सुधी (→°वित् सुधी)

अत पर दे9 पुस्तके अधिकम् —

*अतिथिस्तु **** कुशा इत्यभिविश्रुत ।

लवश्च सुमहाभाग सर्वतत्त्वार्थवित्सुधी । (= ५६)

५७ -b) का1 निषिध, दे10 निरोध, द1 निषद (→निषध) -c) व1 दे8-10 न1 मुर्वे मुए मुब नपव्व, दे5 नलस्य (→नलस्तु), का1 निषिध, द1 निषद (→निषध), दे1 2 3-10 म1 मुर्वे मुए मुब प्राभोत् (→अभूत्). -d) दे8 रज, प1 नभास्, मुर्वे मुए, मुब नभा (→नभ)

५८. दे10. ○. -a) दे5 नभसात् (→नभस), का1 व1 3 दे1-3 5 6 8 9 मुर्वे मुए मुब °काशः, न1 °कश्च, ते1 °कोऽभूत् (→°काख्य) -b) दे1 8 9 मुर्वे मुए मुब तु (→च) -d) दे5 धीरो (→वीरो), न1 वेपानीक, ते1 मेधाकोश (→देवानीक)

५९ दे1 ○, दे10 ५९c–६०b ⊙ -a) दे1 महीहगु, ते1 द1 म1 अहीनग (→अहीनगु), न1 सुतस्तस्य (→तस्य सुतो) -b) व1 सहस्रास्तव, दे3 सहस्वायु तव, दे1 सहस्वस्तत, द1 सहस्त्वा तत्, ग्र2 स विश्वान् तत्, मुर्वे मुए मुब महस्वास्तत् (→सहस्वान्तत्), का1 सहसस्य सुतोऽभवद्, व2 3 सहस्राशुस्ततोऽभवत्, दे5 सहस्तस्य सुतोऽभवद् -c) म1 यस्मात् (→तस्मात्), द1 ग्र1 2 म1 चन्द्रा° (→चन्द्रा°) -d) दे8 9 ग्र2 मुर्वे मुए मुब तारापीश (→तारापीड) दे4 8 9 म1 मुर्वे मुए मुब च (→तु)

अत पर ग्र2 पुस्तके अधिकम् —

*तस्य पुत्रोऽभवत् पुत्रो देवानीक प्रतापवान् । (= ५८ cd)

६० दे1 10 ab ○ -a) दे8 9 मुर्वे मुए मुब ताराधीशात्, ग्र2 **** (→तारापीडात्), द1 ग्र1 2 म1 चन्द्रशिरा (→चन्द्रगिरि.). -b) व1 दे4 ते1 म1 भानुवित्तस् (ते1 म1 °श्चस्), प2 3 भानुविन्दस् (व1 °पम्), द1 प1 भानुविन्नए (→भानुवित्तस्), का1 व1 3 दे 3-6 तथा (→ततो), दे3 8 भानुवित् तत्सुतोऽभवत् -c) दे2 शतायु (→श्रुतायु), दे3 8 श्रुतानुभवतस्तस्माद्, दे5 श्रुतायुर्भव * तस्माद् -d) का1 व1 दे4 6 न1 ते1 द1 प1 म1 हीक्ष्वाकु°, दे8-10 मुर्वे, मुए मुब चेक्ष्वाकु° (→इक्ष्वाकु°), दे1 एवे हीक्ष्वाकुजा सुता दे2 एते दीक्ष्वाकुवंशज, दे3 एते हीक्ष्वाकुवंशजा -e) का1 एते, द1 सर्वे (→सर्वे), दे1 10 प्रधान्यत (→प्राधान्यत), ग्र1 प्रोक्त (→प्रोक्ता) -f) दे1 समासे०, प1 समा (स) सेन (→समासेन), दे5 द्विजोत्तम (→द्विजोत्तमा)

य इमं शृणुयान्नित्यमिक्ष्वाकोर्वंशमुत्तमम् । सर्वपापविनिर्मुक्तो स्वर्गलोके महीयते ॥६१

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे विंशोऽध्यायः ॥२०॥

# २१

रोमहर्षण उवाच ।※

ऐलः पुरूरवाश्चाथ राजा राज्यमपालयत् ।
तस्य पुत्रा बभूवुर्हि षडिन्द्रसमतेजसः ॥१
आयुर्मायुरमायुर्विश्वायुश्चैव वीर्यवान् ।
शतायुश्च श्रुतायुश्च दिव्याश्चैवौर्वशीसुताः ॥२
आयुषस्तनया वीराः पञ्चैवासन् महौजसः ।
स्वर्भानुतनयायां वै प्रभायामिति नः श्रुतम् ॥३
नहुषः प्रथमस्तेषां धर्मज्ञो लोकविश्रुतः ।
नहुषस्य तु दायादाः षडिन्द्रोपमतेजसः ॥४
उत्पन्नाः पितृकन्यायां विरजायां महाबलाः ।
यतिर्ययातिः संयातिरायातिः पञ्चकोऽश्वकः ॥५
तेषां ययातिः पञ्चानां महाबलपराक्रमः । वॉ. १.२२.६

६१ –a) का1 व3 दे1 0 न1 द1 म2 म1 य इद, दे3 इय य, दे10 यमिम (→य इमं) –b) द1 प1 म1 °कीर्तन (→°मुत्तम), प2 इक्ष्वाकुकुलकीर्तनम् –d) दे8-10 न1 मुर्वं मुए मुव देवलोके, प्र3 ब्रह्मलोके (→स्वर्गलोके), ते1 थवणात पापनिमुक्त

पुष्पिका—

पुराणनाम—का1 दे1 2 4-6 8-10 द1 प्र1 3 मुर्वं मुए इति श्रीकूर्मपुराणे, व1 इति कौर्मे प2 3 दे3 म1 इति इति श्रीकूर्मपुराणे, व1 इति कौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, कूर्मपुराणे, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुव इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम— व2 दे4 न1 वे1 ⊙; का1 व1 3 दे5 द1 इक्ष्वाकुवंशानुकीर्तने, (व1 °न), दे1 2 8-10 मुए इक्ष्वाकुवंशे, दे3 0 वंशानु-कीर्तने, प्र1 म1 इक्ष्वाकुवंशकीर्तन नाम, प्र2 इक्ष्वाकुवंशकथने, मुर्वं इक्ष्वाकुवंशवर्णन नाम, मुव सूर्यवंशे इक्ष्वाकुवंशकथन नाम अध्यायसंख्या—व1 दे8 द1 ⊙, का1 व3 दे3-5 म1 ते1 एकोनविंशोऽध्याय; व2 ॥१६॥, दे1 मुर्वं मुए मुव एकविंशोऽध्याय ॥२१॥, दे2 प्र2 म1 एकविंशोऽध्याय, दे8 9 द्वाविंशोऽध्याय, दे10 एकविंशोऽध्याय ॥२१॥ श्रीरामचन्द्रार्पण-मस्तु ॥ शके १८१६ संवत १९५१ मार्गशीर्ष शुक्ल ११ मदवासरे प्रात प्रथमप्रहरे विश्वेश्वरुपनामक परभूमातीय कृष्णराय विटलयाचे मूलप्रतिकरून रामचंद्र पश्वत मराठेयाणी स्वार्थ परार्थलिखित ॥ श्रीरस्तु । शुभ भवतु ॥, ध1 विंशोऽध्याय

२१

※ व2 दे1 3 लोमहर्षण उवाच; दे3 4 6.8-10 मुर्वं, मुए, मुव, सूत उवाच; न1 प1 2 सूत; ते1 श्री शिव., +सूत; द1 म1 श्री सूत.

१ –a) दे1 10 एल (→ऐल), व1 न1 पुरूरवश्, दे4 पुरुरवा (→पुरूरवाश्), दे1 चास्य (→चाथ), –c) का1 दे1 2 बभूवुश्च (→बभूवुर्हि) –d) व3 षडिन्द्रोपमतेजस.

२ –a) व3 दे1 वायुर्, प्र2 दायुर् (?) (→मायुर्), दे1 ****, दे4 8-10 °रमायुश्च, द1 प्र1.2 म1 °रवा(म1 °पा) मायुर् (→°रमावायुर्) –b) व1 चापि (→चैव) –c) द1 प्र1 म1 श्रुतायुश् (→शतायुश्); व2 3 चायुतायुश्, व1 प्र1 2 म1 च शतायुश् (→च श्रुतायुश्) –d) का1 दिव्यायुश्चौ°, व1 दिव्यास्त्वैत्रो°, प्र1 दिव्या वै चो° (→दिव्याश्चैवो°)

३ –a) दे1 आयुषस्तु यथा वीरा –b) दे6 पञ्चैतासन्, ग1 पञ्च वासन् (→पञ्चैवासन्), ग1 महौजसा (→महौजस.). –c) न1 तनयाया व, प्र1 °तनयाया वै (→°तनयाया वै) –d) दे6 प्रभायाम्, ते1 भार्याया (→प्रभायाम्), का1 व2 3 दे2.5 विश्रुत (→न श्रुत)

४ –c) दे1 च (→तु) –d) दे8 दायाद (→दायादा). –d) दे4 पञ्चेन्द्रसम°, मुर्वं मुए मुव, पञ्चेन्द्रोपम°, द1 प्र1 2 म1 देवेन्द्रसम° (→षडिन्द्रोपम°)

५ –b) दे2 विष्णु° (→विर°); व1 महाबल, व2 महौजस (→महाबला) –c) दे8-10 मुर्वं, मुए, यातिर् (→यतिर्); व1 दे3 सजातिर्, व2 सर्यातिर्, दे1 मत्यातिर्, प्र2 *** (→संयातिर्); दे4 प1 ययाद्रियाति. सयात्रिर् –d) म1 पञ्चको स्वर, व3 दे1 4 8 9 न1 ते1 मुर्वं, मुए, मुव, पञ्चमोऽश्वक, दे2 पञ्चमोंश्वर, दे10 पञ्चमोश्च ग, द1 प्र1 2 म1 रोमपश्चजा (→पञ्चकोऽश्वक) See Cr. Notes.

६. व1. [⊙ (ε. स.). –c) का1 व2 दे8 देवयानीम् (→देवयानीम्); व1 द5 सुमनग° (→उशनग°). –d) व1 दे8

वें. १ २२.६ देवयानीमुशनसः सुतां भार्यामवाप सः।
शर्मिष्ठामासुरीं चैव तनया वृषपर्वणः ॥६
यदुं च तुर्वसुं चैव देवयानी व्यजायत।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा चाप्यजीजनत् ॥७
सोऽभ्यषिञ्चदतिक्रम्य ज्येष्ठं यदुमनिन्दितम्।
पूरुमेव कनीयांसं पितुर्वचनपालकम् ॥८
दिशि दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशत्।
दक्षिणापरयो राजा यदुं ज्येष्ठं न्ययोजयत्।
प्रतीच्यामुत्तरायां च द्रुह्युं चानुमकल्पयत् ॥९
तैरियं पृथिवी सर्वा धर्मतः परिपालिता।

राजाऽपि दारसहितो वनं प्राप महायशाः ॥१०
यदोरप्यभवन् पुत्राः पञ्च देवसुतोपमाः।
सहस्रजित् तथा ज्येष्ठः क्रोष्टुर्नीलोऽजितो रघुः ॥११
सहस्रजितसुतस्तद्वच्छतजिन्नाम पार्थिवः।
सुताः शतजितोऽप्यासंस्त्रयः परमधार्मिकाः ॥१२
हैहयश्च हयश्चैव राजा वेणुहयः परः।
हैहयस्याभवत् पुत्रो धर्म इत्यभिविश्रुतः ॥१३
तस्य पुत्रोऽभवद् विप्रा धर्मनेत्रः प्रतापवान्।
धर्मनेत्रस्य कीर्तिस्तु संजितस्तत्सुतोऽभवत् ॥१४

---

[illegible] ता (→सुता), न1 उपयेमे सुता च स –f) दे1 सुता तु (→तनया).

७ ब1 a ○ (द म) –a) दे4 यदुश्च (→यदु च), द1 ग्र1 म1 मुए तुर्वशुम, दे10 न1 तुवसम (→तुर्वसुम) –b) का1 दे6 देवजानी (→देवयानी), दे1 -मजायत (→व्यजायत) –c) का1 दे1-4 8 10 मु1 द1 ग्र1 2 द्रुह्युम (→द्रुह्युम), दे1 8 6 चाणु च, दे5 चातु च (→चानु च), दे10 पुरं च, ग्र1 पूरं च (→पूरुं च), ब2 द्रुह्यु चानु पुरु चैव –d) दे5 वा व्यजीजनत्, द1 ग्र1 2 म1 च व्यजायत (→चाप्यजीजनत्)

८ –a) का1 सोऽभ्यपिच्य, दे1 4 सोऽभिषिचद् (→सोऽभ्यपिञ्चद्), ग्र1 °दधिक्रम्य (→°दतिक्रम्य) –b) दे1 मरिंदमम्, दे10 ग्रनिन्दनम् (→मनिन्दितम्) –c) का1 ब1 3 दे1-6 10 न1 ते1 द1 ग्र1-3 मुव मुए मुब पुरुमेव, म1 पूवमेव (→पूरुमेव) –d) दे2 °कारण, न1 °पालक, द1 °कालक ग्र2 °पालन (→°पालकम्), दे4 पितुर्दयितमुत्तमम्

९ –a) दे4 °पूर्वस्य (→°पूर्वस्यां) –b) का1 द1 ग्र1 म1 मुए तुर्वशु, दे1 8 9 तुवम, दे10 न1 तुवश, ग्र° दुर्विश (→तुर्वसुं), दे9 प्राविशत्, +त्रादिशत् (→मादिशत्) –c) का1 ²3 दक्षिणा, दे4 दक्षिणो (→दक्षिणा), का1 परमो ब1 -पयो, दे3 -परमे (→-परयो), दे4 ग्र1 2 म1 राज्ञे (→राजा), द1 दक्षिणापरयोगेन –d) दे1 यदु-, दे3 5 6 यस्य (→यदुं), ब2 3 दे1 2 6 8 10 न1 मुवे मुए मुव ज्येष्ठ (→ज्येष्ठं), दे1 नियोजयत्, दे2 द1 ग्र1 2 म1 मयोजयत् (→न्ययोजयत्), दे4 परज्येष्ठनियोजयत् –e) व1 उत्तरस्या, दे9 10 उत्तरायां च (→उत्तरायां च) –f) का1 दे1-4 6 8-10 न1 द1 ग्र1 द्रुह्य (→द्रुह्युं), दे1 चाणु, दे2 चातु (→चानुं), दे1 प्रकल्पयत् (→मकल्पयत्), ग्र2 दिक्षा * नुमकल्पयत्

१० –a) न1 हत्य (→इयं) –b) दे7 प्रति° (→परि°) –c) दे4 दारा° (→दार°) –d) का1 दे1 2 ग्र2 म1 प्राप्य (→प्राप), दे1 महायश (→महायशाः)

११ –c) दे1 सहस्रजितश्च (→सहस्रजित्तथा), दे1 8-10 मुवें मुए मुवं श्रेष्ठ (→ज्येष्ठ) –d) दे1 क्रोष्ट-, दे4 10 क्रोष्टु-, न1 वलि- (→क्रोष्टुः), का1 नीलोजनो, द1 दे8 मुवें मुए मुव नीलोजितो, ब3 दे2 नीलो जितो, दे4 नीलो जितो, दे5 नीलो जिचो, दे9 10 नीलोजितो, द1 ग्र1 म1 नीलजितो ग्र2 नीलसुते (→नीलोऽजितो), दे3 लघु (→रघु), ब2 क्रोष्टुर्नीलोक्षिजे बभो, ते1 त्रोष्टुर्नीलोजितारिहा

१२ –b) °जिच्चैव (→°जिन्नाम) –c) दे4 5 सुतान्, न1 सुत (→सुताः), दे4 यश° (→शत°) द1 पुत्रा, ग्र1 म1 पुत्र (→-प्यासन्), ग्र2 सुताश्च जिन पुत्र * –d) दे4 स्तय (→त्रय), ब1 दे3 6 10 ग्र1 °धार्मिक (→°धार्मिकाः)

१३ –a) न1 प्र1 2 हैहयश (→हैहयश्च), दे4 हैहयश्चो- हयश्चैव, म1 हैहेयो हिरमश्चैव –b) ब3 वेणुहय पुन, दे1 8 10 मुवें मुए मुव वेणुहयश्च य (दे1 स), द1 ग्र2 म1 वेणुरय (ग्र3 °य) पर, म1 वेणुरथ पर (→वेणुहय पर) –c) दे9 10 हैहय (दे10 °या) भवा-, न1 म1 हैहयस्या-, द1 हैहयास्या-, ५० एवस्या * (→हैहयस्या-)

१४ –a) द1 ग्र1 2 म1 विद्वान् (→विप्रा) –b) दे2 4 धर्मनेत्रा, दे10 धर्मो तत्र (→धर्मनेत्र), व3 प्रजा परान् (→प्रतापवान्) –c) व1 2 दे1 9 धर्मनेत्रस्तु (→धर्मनेत्रस्य), न1 च, +तु (→तु) –d) का1 संहितस्, ब2 दे2-6 9 10 द1 ग्र2 म1 मुव संजितस्, दे2 धर्मजित् (→संजितस्)

महिष्मान् संजितस्याभूद् भद्रश्रेण्यस्तदन्वयः ।
भद्रश्रेण्यस्य दायादो दुर्दमो नाम पार्थिवः ॥१५

दुर्दमस्य सुतो धीमान् धनको नाम वीर्यवान् ।
धनकस्य तु दायादाश्चत्वारो लोकसम्मताः ॥१६

कृतवीर्यः कृताग्निश्च कृतवर्मा तथैव च ।
कृतौजाश्च चतुर्थोऽभूत् कार्तवीर्योऽर्जुनोऽभवत् ॥१७

सहस्रबाहुर्द्युतिमान् धनुर्वेदविदां वरः ।
तस्य रामोऽभवन्मृत्युर्जामदग्न्यो जनार्दनः ॥१८

तस्य पुत्रशतान्यासन् पञ्च तत्र महारथाः ।
कृतास्त्रा बलिनः शूरा धर्मात्मानो मनस्विनः ॥१९

शूरश्च शूरसेनश्च धृष्णः कृष्णस्तथैव च ।
जयध्वजश्च बलवान् नारायणपरो नृपः ॥२०

शूरसेनादयः सर्वे चत्वारः प्रथितौजसः ।
रुद्रभक्ता महात्मानः पूजयन्ति स्म शंकरम् ॥२१

जयध्वजस्तु मतिमान् देवं नारायणं हरिम् ।
जगाम शरणं विष्णुं दैवतं धर्मतत्परः ॥२२

तमूचुरितरे पुत्रा नायं धर्मस्तवानघ ।
ईश्वराराधनरतः पिताऽस्माकमभूदिति ॥२३

तानब्रवीन्महातेजा एष धर्मः परो मम ।
विष्णोरंशेन संभूता राजानो यन्महीतले ॥२४　वि.१.२२.२

---

१५ -a) दे3 4 महिष्वान् (दे4 °ष्वाम्), दे8 सहिस्वान्, दे9-10 मुबें मुए महिष्म, न1 महिष्ठा, द1 महिष्मान् (→महिष्मान्); का1 व1 2 दे2 3 5 6 8-10 द1 प्र1.2 म1 सजितस्या° (द1 °स्मो) (→संजितस्या°), ते1 माहिष्मत् पञ्चस्मत्स्मात्. -b) का1 भद्रसेनम्, दे1 भद्रश्रेणम्, दे8 भद्र-सेन्यम्, द1 भद्रः श्रेयम्, प्र2 भद्रशोणस् (→भद्रश्रेण्यस्), दे1 तदन्वये, न1 तदान्वयं (→तदन्वयः) -c) दे8 °रिन्यस्य, दे9 °श्रेणस्य, प्र1 °शोण्यस्य (→°श्रेण्यस्य), प्र2 भद्रस्य श्रेण्यदायादो -d) का1 व2 दे2 5 दुर्मदो, व1 दुर्गदो (→दुर्दमो)

१६ का1 व2 दे2 5 दुर्मदस्य, व1 3 दुर्गदस्य (→दुर्दमस्य) -b) व2 नयको, दे1 धनको, दे8-10 मुबें मुए मुव धधको, प्र2 तनदो (→धनको) -c) व2 मयकस्य, दे1 धनकस्य, दे8-10 मुबें मुए मुव मधकस्य, प्र2 तनदस्य (→धनकस्य), का1 धनकस्य तु नामत च -d) दे1 प्र2 °विश्रुता (→°सम्मता)

१७ -a) दे3 कृतानीत्ति (→कृताग्निश्च) -b) दे1 °वर्माश्च (→°वर्मा त°), दे1 °मुना (→°मुा), दे8-10 न1 मुबें, मुए कृतव (न1 °श)र्मा च तस्मुत -c) दे10 मुकृतोजास्, म1 कृतोजश्च, म1 कृतोर्ध्वस्य (→कृतौजाश्च) -d) द1 8-10 न1 मुबें मुए मुव कृतवीर्यस्याप्या(न1 °दा)र्जुन, ते1 कृतवीर्योऽप्य गोऽभवत्

दे1 १७ b, c मध्ये प्रक्षिप्तम्—

*'जयध्वजश्च बलवान्नारायणपरो नृपः' (= २० cd)

१८ -a) द1 प्र1 2 म1 धृतिमान् (→द्युतिमान्) -c) द1 म1 तस्य रामोऽभव(म1 °व)न्मृत्यु, प्र1 तस्य रामो धर्मे जेता.

१९ म1 cd ⊙ -a) दे10 °शतान्यासन्, न1 °दशा-न्यासन्, म1 °शत चासीत् (→°शतान्यासन्) -b) न1 °पुत्रा (→तत्र), द1 प्र1 2 म1 महानथा (द1 °ल) (→महारथा) -c) का1 दे1 धृतास्त्रा, दे4 द1 प्र1 धृतास्त्र- (→कृतास्त्रा). -d) का1 दे1 नपस्विन, दे8 जनार्दन (→मनस्विन).

२० -a) व1 दे8 सूरश्च सूरसेनश्च, प्र2 शूरसेनश्च वृष्णिश्च -b) का1 दे2 3 5 6 धृष्ट (दे3 °ष्ट), दे4 द1 म1 वृष्णि (दे4 °ष्णि), दे9 प्र1 दृष्ण, ते1 धृष, मुबें मुए मुव कृष्ण (→धृष्ण), दे8 कृष्ट, न1 मुबें मुए, मुव धृष्ण (→कृष्ण), प्र2 वृष्णश्चैव तथैव च -c) दे10 भगवान् (→बलवान्)

२१ -a) व1 दे8 10 सूर° (→शूर°), व1 दे2 6 8-10 मुबें मुए मुव पूर्व (→सर्वे) -b) दे5 °जसा (→°जस). -c) म1 रुद्रे (→रुद्र-) -d) दे2 केशव (→शंकरम्)

२२ -a) दे3 4 8 म1 म1 ष (→स्तु) -b) दे2 प्रभुं (→हरिं) -c) दे8 प्र2 विष्णो (→विष्णुं) -d) न1 देवं नं (→दैवतं), दे8 देव धर्मानुसारम्

२३ -a) म1 इव त, दे2 इति तै (→इतरे), ते1 तत्र (→पुत्रा) -b) दे4 तथा नाय (→नायमघ), दे8-11 नाय धर्मंऽ-रानघ -c) दे1 2 म1 °पर, दे1 गिर, प्र1 °रता (→°रत) -d) दे1 इति प्रभु, दे8-10 मुबें मुए मुव इति भूमि (→मभूदिति)

२४ -b) का1 व1-3 दे1-3 5 6 8-10 म1 मुबें मुए मुव धर्म, दे1 एत-(→एष), का1 व1-3 दे1 5 6 प्र2 धर्म-(→धर्मः), दे3 [प]नय (→मम) -d) दे2 8 9 मुबें मुए दे (→यद्).

१.२१.२६ राज्यं पालयताऽवश्यं भगवान् पुरुषोत्तमः ।
पूजनीयो यतो विष्णुः पालको जगतो हरिः ॥२५
सात्त्विकी राजसी चैव तामसी च स्वयंभुवः ।
तिस्रस्तु मूर्त्तयः प्रोक्ताः सृष्टिस्थित्यन्तहेतवः ॥२६
सत्त्वात्मा भगवान् विष्णुः संस्थापयति सर्वदा ।
सृजेद् ब्रह्मा रजोमूर्त्तिः संहरेत् तामसो हरः ॥२७
तस्मान्महीपतीनां तु राज्यं पालयतामयम् ।
आराध्यो भगवान् विष्णुः केशवः केशिमर्दनः ॥२८
निशम्य तस्य वचनं भ्रातरोऽन्ये मनस्विनः ।
प्रोचुः संहारकृद् रुद्रः पूजनीयो मुमुक्षिभिः ॥२९
अयं हि भगवान् रुद्रः सर्वं जगदिदं शिवः ।
तमोगुणं समाश्रित्य कल्पान्ते संहरेत् प्रभुः ॥३०
या सा घोरतरा मूर्त्तिरस्य तेजोमयी परा ।
संहरेद् विद्यया सर्वं संसारं शूलभृत् तया ॥३१
ततस्तानब्रवीद् राजा विचिन्त्यासौ जयध्वजः ।
सत्त्वेन मुच्यते जन्तुः सत्त्वात्मा भगवान् हरिः ॥३२
तमूचुर्भ्रातरो रुद्रः सेवितः सात्त्विकैर्जनैः ।
मोचयेत् सत्त्वसंयुक्तः पूजयेशं ततो हरम् ॥३३
अथाब्रवीद् राजपुत्रः प्रहसन् वै जयध्वजः ।
स्वधर्मो मुक्तये पन्था नान्यो मुनिभिरिष्यते ॥३४
तथा च वैष्णवी शक्तिर्नृपाणां देवता सदा ।
आराधनं परो धर्मो मुरारेरमितौजसः ॥३५

---

२५. –a) व$_{2}$ दे$_{8-10}$ न$_{1}$ मुवें मुए मुब पालयिता°, द$_{1}$ श्र$_{1}$ पालयते°, म$_{1}$ पालयतो° (→पालयता°) –c) दे$_{2\ 3}$ ह्यतो, दे$_{4}$ यतु, दे$_{9}$ मुवें मुए [य]जितो (→यतो) –d) व$_{1}$ दे$_{1\ 2\ 4\ 8\ 9}$ श्र$_{1\ 2}$ न$_{1}$ ते$_{1}$ मुवें मुए मुब जगता (→जगतो)

२६ –a) दे$_{2}$ तामसी (→राजसी) –b) दे$_{2}$ राजसी (→तामसी), दे$_{1\ 4\ 8-10}$ द$_{1}$ श्र$_{1\ 2}$ मुवें मुए स्वय मुभु, म$_{1}$ स्वय भवो (→स्वयंभुव) –c) दे$_{1}$ श्च (→स्तु) –d) दे$_{5}$ सृष्टि° (→सृष्टि°), दे$_{1}$ °भूतय (→°हेतव).

२७ –a) दे$_{1}$ सर्वात्मा (→सत्त्वात्मा) –c) दे$_{6}$ राजन् (→सृजेद्), दे$_{3}$ राज° (→रजो°) –d) ते$_{1}$ म$_{2}$ संहार- (→संहरेत्), का$_{1}$ म$_{1}$ तामसी, व$_{3}$ दे$_{6\ 8\ 10}$ न$_{1}$ ते$_{1}$ तामसी (न$_{1}$ °सीर्) (→तामसो)

२८ –b) दे$_{8\ 9}$ मुवें मुए मुब इद, द$_{1}$ श्र$_{1\ 2}$ म$_{1}$ श्रय (→मय), दे$_{8\ 10}$ स राज्य पाल(दे$_{8}$ लय)नामय –d) ते$_{1}$ क्लेश°, म$_{2}$ केश° (→केशि°), दे$_{10}$ केशव केशमर्दिन

२९ –a) दे$_{10}$ निविश्य (→निशम्य) –c) दे$_{9\ 10}$ म$_{1}$ द$_{1}$ श्र$_{1\ 2}$ म$_{1}$ मुवें मुए मुब °को (→°कृद्)

३० व$_{1}$ ३० b–३१a ○ (द रा) –a) म$_{2}$ ग्रह (→श्रय), दे$_{1}$ देव, दे$_{3}$ इन्द (→रुद्र) –b) म$_{2}$ शिव (→शिव) –d) दे$_{8\ 10}$ मुवें मुए मुब कालान्ते(→कल्पान्ते), दे$_{4}$ स हरेत (→संहरेत्)

३१. व$_{1}$ ○ (द ३० पा वि) –a) म$_{2}$ दे$_{8\ 9}$ न$_{1}$ द$_{1}$ श्र$_{1}$ म$_{1}$ मुवें मुए मुब °तमा (→°तरा) –b) ते$_{1}$ म ते, म$_{1}$ यस्य (→मस्य), दे$_{1\ 2}$ शुभा दे$_{10}$ पुरा (→परा) –c) दे$_{1}$ सर्व–, दे$_{8\ 10}$ मुवें मुए मुब पूर्व (→सर्वं), म$_{1}$ संहरेत तु तथा सर्वं –d) दे$_{1}$ संसारे, दे$_{10}$ संहरन् (→संसारं), दे$_{1\ 3\ 6}$ °भृत्तदा, दे$_{4}$ °वृत्तथा, दे$_{9}$ भृत्तय, दे$_{10}$ भृत्य था, द$_{1}$ श्र$_{1\ 2}$ म$_{1}$ °भृत्तया (→°भृत्तया)

३२ व$_{1}$ ○ (द ३० पा वि), म$_{2}$ म$_{1}$ ३२c–४b ○ (द म) –a) म$_{2}$ ततस् (→ततस), म$_{1}$ राजो (→राजा) –b) दे$_{4}$ द$_{1}$ विचिन्त्याय, न$_{1}$ विचिन्त्योसौ, श्र$_{1}$ म$_{1}$ विचिन्त्यन् (→विचिन्त्यासौ), म$_{2}$ ततो त्याय जयध्वजि –c) द$_{1}$ जायते (→मुच्यते) –d) दे$_{3\ 6}$ सर्वात्मा (→सत्त्वात्मा)

३३ व$_{1\ 2}$ ○ (द ३० पा वि), म$_{2}$ म$_{1}$ ○ (द ३२ पा वि) –b) का$_{1}$ सेविभै (→सेवित) –c) व$_{1}$ सत्य-, दे$_{10}$ स तु (→सत्त्व), दे$_{1}$ द$_{1}$ श्र$_{1}$ °संयुक्त (→°संयुक्तः) –d) दे$_{3}$ हरि (→हर), व$_{2}$ ते$_{1}$ द$_{1}$ श्र$_{1}$ मुब पूजयेच्च (द$_{1}$ °त्तु) ततो हर (द$_{1}$ °रि), दे$_{1\ 2}$ पूजया शङ्करो हर, दे$_{4}$ पूजयेच्च ततो शिव, दे$_{5}$ पूजाय स ततो हरि, दे$_{8-10}$ मुवें मुए पूजयेस्ततस्तु हरम्

३४ दे$_{1}$ ○, म$_{2}$ म$_{1}$ ab ○ (द ३२ पा वि) –b) दे$_{1}$ रा (→प्र) c–) म$_{1}$ दे$_{1}$ स्वधम, दे$_{5}$ सुधर्मो, दे$_{8\ 10}$ श्राधम (→स्वधर्मो), दे$_{8\ 10}$ मुवें मुए मुक्तो द$_{1}$ निव (→पन्था) –d) द$_{1}$ श्र$_{1}$ सर्वे, म$_{2}$ म$_{1}$ ततो (→नान्यो), का$_{1}$ व$_{2\ 3}$ दे$_{5}$ मुब उच्यते (→इष्यते)

३५ –a) व$_{1}$ दे$_{1\ 4\ 8\ 9\ 9}$ न$_{1}$ ते$_{1}$ द$_{1}$ श्र$_{1}$ मुवें मुए मुब तथा च वैष्णवी शक्ति, म$_{2}$ म$_{1}$ तथा वै शक्तिर्नृपाणां –b) दे$_{1\ 8\ 10}$ न$_{1}$ मुवें मुए दधता दे$_{4}$ दयिता ते$_{1}$ ददता, द$_{1}$ श्र$_{1\ 2}$ दे (म$_{2}$ दे) वता (→देवता), दे$_{10}$ सदा, +सदा, द$_{1}$ श्र$_{1}$ तथा, म$_{2}$ तदा (→सदा) –c) व$_{1}$ दे$_{8}$ आराधन-, दे$_{1}$ आराध्यतो, द$_{1}$ श्र$_{1\ 2}$ म$_{1}$ आराध्यतो (→आराधनं), म$_{2}$ पर (→परो) –d) दे$_{5\ 10}$ मुरारिर (→मुरारेर्)

तमब्रवीद् राजपुत्रः कृष्णो मतिमतां वरः ।
यदर्जुनोऽस्मज्जनकः स्वधर्मं कृतवानिति ॥३६
एवं विवादे वितते शूरसेनोऽब्रवीद् वचः ।
प्रमाणमृषयो ह्यत्र ब्रूयुस्ते यत् तथैव तत् ॥३७
ततस्ते राजशार्दूलाः पप्रच्छुर्ब्रह्मवादिनः ।
गत्वा सर्वे सुसंरब्धाः सप्तर्षीणां तदाश्रमम् ॥३८
तानब्रुवंस्ते मुनयो वसिष्ठाद्या यथार्थतः ।
या यस्याभिमता पुंसः सा हि तस्यैव देवता ॥३९
किन्तु कार्यविशेषेण पूजिताश्चेष्टदा नृणाम् ।
विशेषात् सर्वदा नायं नियमो ह्यन्यथा नृपाः ॥४०
नृपाणां दैवतं विष्णुस्तथैव च पुरन्दरः ।
विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृक् ॥४१
देवानां दैवतं विष्णुर्दानवानां त्रिशूलभृत् ।
गन्धर्वाणां तथा सोमो यक्षाणामपि कथ्यते ॥४२
विद्याधराणां वाग्देवी साध्यानां भगवान् रविः ।
रक्षसां शंकरो रुद्रः किंनराणां च पार्वती ॥४३
ऋषीणां दैवतं ब्रह्मा महादेवश्च शूलभृत् ।
मनूनां स्यादुमा देवी तथा विष्णुः सभास्करः ॥४४
गृहस्थानां च सर्वे स्युर्ब्रह्मा वै ब्रह्मचारिणाम् ।
वैखानसानामर्कः स्याद् यतीनां च महेश्वरः ॥४५
भूतानां भगवान् रुद्रः कूष्माण्डानां विनायकः ।
सर्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः ॥४६ वें १२२४७

---

३६ -a) ग्र2 ता (→त) -b) मा1 °वर (→°वर) -c) ग्र2 स दुर्जनो समस्जनकः -d) का1 व3 वे1 4 6 8-10 ना1 ते1 ग्र1 मा1 मुवें मुए मुब स (→स्व) दे1 4 धर्मं, दे5 धर्मं (→धर्मं), ना1 दाश (→इति), ब1 स्वधर्मजनकाविति

३७ दे1 cd ○ -b) का1 घ1 दे5 6-10 सूरसेनो, ग्र2 ग1 स सेनोक्ती (→शूरसेनो) -c) न1 प्रामाण्यम् (→प्रमाणम्), ग्र2 मुनयो (→ऋषयो), ब1 यत्र न1 सर्वे (→ह्यत्र) -d) का1 दे5 य, दे3 6 8-10 मुवें मुए त्वं द1 ग्र2 यस् (→यत्), का1 ग्र1 मा1 न, दे3 6 द1 ग्र2 तु (→तत्), म1 ब्रूयुस्तेन यथैव तु

३८ दे1 ab ○ -a) प2 °शार्दूल (→शार्दूला) -c) दे3 संसरंभा, दे4 समरब्धा (→सुसरब्धा), दे1 ** सर्वेपि सुरब्धा -d) ते1 तथा° (→तदा°)

३९ -a) दे8 ग्र2 तानाब्रुवन् (→तानब्रुवन्) -b) दे1 वशिष्ठाद्या (→वसिष्ठाद्या) -c) दे4 10 यो (→या) का1 दे1 3 4 °मत, ग1 म1 °हित (म1 °ता) (→°मता) ब1 पुंसर (→पुंस) -d) दे4 स (→सा) दे10 ग्र2 देवधा (→स्वमा), दे1 सा तस्यैव हि दैवता, ग्र2 पाहिता तस्यैव देवता

४० दे10, cd ○ -a) धर्म° (→कार्य°) -b) ग्र1 3 दे1 3 8 10 ग्र1 2 मुवें मुए मुब पूजिता (→पूजिताश्), प1 ज्वेष्टदा, ग्र2 श्रेयदा (→चेष्टदा), दे4 चिन्तितार्थचेष्टदायिन -c) दे1 विशेष (→विशेषात्), दे3 द1 ग्र1 2 सर्वथा, दे3 म1 सर्वथा (→सर्वदा), ब1 दे8 °वानाय, न1 °दा नोय (→°दा नाय) -d) दे1 3 6 नृप, दे2 भवेत (→नृपा)

४१ दे10 ४१b-४२a ○ (इ स) -a) का1 व2 3 दे2 5 8 देवता (→दैवत), -b) दे1 8 9 न1 मुवें मुए तथैशस्च, दे3 तथा शेष (→तथैव च) -c) ग्र2 प्राग्निर् (→ग्निर्)

४२ व1 ४२c-४४b ○ (इ स), दे10 a ○ (इ स) (इ ४१ पा वि), द1 ab ○ -a) दे1 3 5 देवता (→दैवत) -b) व2 दानवानां च (→दानवानां त्रि-), ग्र1 2 म1 पिनाक (→त्रिशूल-), ग्र3 दे8 10 न1 ग्र1 2 म1 मुवें मुए -धृक् (→भृत्)

४३ म1 ○ (इ स इ ४२ पा वि) ग्र2 b ○ -b) दे1 8 10 न1 मुवें मुए मुब सिद्धानां, दे3 सिद्धानां, *साध्यानां (→साध्यानां) दे1 8 10 म1 मुवें मुए मुब हरि (→रवि) -d) ग्र1 किनरीणां (→किंनराणां)

४४ व1 ab ○ (इ स इ ४२ पा वि) -a) दे8 10 मुवें मुए मुब भगवान् (→दैवत) -b) दे8 10 मुवें मुए मुब त्रिशूल द1 ग्र1 2 गशुब (→च शूल-), दे2 ग्र2 धृक, दे10 -भृत + धृक् (→भृत्) -c) दे3 मनूनां स्यात्, *मानूणां स्यात्, दे8-10 मुवें मुए मुब मानवानां स्त्रीणां, ग्र1 मन्वन्तरां स्यात्, ग्र2 मन्वनां स्यात् (→मनूनां स्याद्) -d) का1 सवामब व2 ग्र2 ग1 च भास्कर, दे0 प्रभाकर (→स भास्कर), दे3 4 8 10 न1 द1 ग्र1 मुब मुए मुब समर विष्णुरीशभास्करा

४५ का1 ○ -a) दे1 न गर्वेषां, स धर्मे स्युर् (→च सर्वे स्युर्) -b) व1 दे8 10 मुवें मुए मुब ब्रह्म (→ब्रह्मा), दे4 द2 ग्र1 2 म1 च (→वै) -c) व1 दे1 वैखानसानां (→वैखानसानां), ग्र1 कर्मं स्यात् (→अर्कः स्याद्)

४६ का1 ab ○ -a) ग1 भूतानामभवद्रुद्र -b) दे4 5 विनायका (→विनायक) -d) दे8-10 ब्रह्मा देव (→देवदेव)

कू.१.२२।४८ इत्येवं भगवान् ब्रह्मा स्वयं देवोऽभ्यभाषत ।
तस्माज्जयध्वजो नूनं विष्ण्वाराधनमर्हति ॥४७
तान् प्रणम्याथ ते जग्मुः पुरीं परमशोभनाम् ।
पालयाञ्चक्रिरे पृथ्वीं जित्वा सर्वरिपून् रणे ॥४८
ततः कदाचिद् विप्रेन्द्रा विदेहो नाम दानवः ।
भीषणः सर्वसत्त्वानां पुरीं तेषां समाययौ ॥४९
दंष्ट्राकरालो दीप्तात्मा युगान्तदहनोपमः ।
शूलमादाय सूर्याभं नादयन् वै दिशो दश ॥५०
तन्नादश्रवणान्मर्त्यास्तत्र ये निवसन्ति ते ।
तत्यजुर्जीवितं त्वन्ये दुद्रुवुर्भयविह्वलाः ॥५१
ततः सर्वे सुसंयत्ताः कार्त्तवीर्यात्मजास्तदा ।
युयुधुर्दानवं शक्तिगिरिकूटासिमुद्गरैः ॥५२
तान् सर्वान् दानवो विप्राः शूलेन प्रहसन्निव ।
वारयामास घोरात्मा कल्पान्ते भैरवो यथा ॥५३
शूरसेनादयः पञ्च राजानस्तु महाबलाः ।
युद्धाय कृतसंरम्भा विदेहं त्वभिदुद्रुवुः ॥५४
शूरोऽस्त्रं प्राहिणोद् रौद्रं शूरसेनस्तु वारुणम् ।
प्राजापत्यं तथा कृष्णो वायव्यं धृष्ण एव च ॥५५

---

४७ -b) व१ द१ श१ २ म१ देवदेवो (→स्वयं देवो), म१ दे१ 8-10 मुवँ मुए हाभावत, व२ [प] भ्यभावत, दे३ ह्यभावत, प२ ह्यभापत (→[अ]भ्यभाषत) -c) व२ ३ दे३ ६ नाथ, ते१ राजा (→नूनं) -d) व३ विष्वा°, दे१ ६ विष्णु°, दे१ १० विष्णो° (→विष्ण्वा°), दे५ मर्हति (→मर्हति)

४७ श्लोकानन्तरं श१ व१ ३ दे२ ३ ५ ६ ते१ मुवँ मुव पुस्तके प्रक्षिप्तम्—

18 * विष्णु रूपेण तादात्म्यं मुद्गरं पूर्ण्या हरिं ॥
अन्यथा नृपते शत्रून् न हरिं गहरेवम ॥

[-1) व१ तादात्म्ये, दे३ ६ मुव तादात्म्य- (→तादात्म्य) -2) श१ पालने, व१ दे३ ते१ नृपते (→नृपते), श१ शत्रु, व२ शत्रुन्, दे३ पत्र, ते१ शत्रु, मुव शत्रून् (→शत्रून्), व२ हरि (→हरिं), श१ पुन (→यत्न)]

४८ -a) दे१ १० मुवँ मुए स- (→तान्), दे१ स (→ते) -b) दे५ °शोभितां (→°शोभनां) -d) द१ २ ६ 8-10 म१ मुवँ मुए मुव सर्वान्, दे५ ** (→सर्व-), द१ श१ २ म१ जित्वा शत्रून् रणाजिरे

४९ -a) द१ विप्रा, व२ विप्रेन्द्र (→विप्रेन्द्रा) -b) दे१० विदेहा (→विदेहो), श१ पार्थिव (→दानवः) -c) म१ °सत्त्वानां, द१ °भूतानां (→°सत्त्वानां), दे६ ज्यामित्यनी नाम पुरी -d) व१ त१ द१ प१ २ म१ पुर, व३ पुरीन्, दे१ पुरं (→पुरीं),

५० -a) श१ दीप्तात्मा (→दीप्तात्मा) -d) दे४ नादयन् (→नादयन्), श१ विदिशा (→वै दिशो), दे१० म१ दश, दे३ दशा (→दश)

५१ -a) दे२ द१ म१ तन्नाद- (→तन्नाद-), द२ -श्रवणं (→श्रवणात्), -b) दे३ पुर्यां, द१ मर्त्या (→मर्त्या), श१ नरेश, दे२ तत्र ते (→तत्र य), श१ श१-३ दे३-६ ते१ द१ २ म१ वै, दे३ ते (→ते) -d) दे४ दद्रुवु (→दुद्रुवु)

द१ प१ २ मद्रुद् (→द्रुद्रुवुः); श१ दे२ ५ ६ °विक्लवा (→°विह्वला)

५२ श१ a 'ससत्ता' इत्यारभ्य c 'दानव' यावत् नास्ति, दे३ १० cd ⊙ -a) दे१० तु (→सु-), व२ स्वयं यत्ता, दे१ स्वयं यत्ता, दे३ सुसयत्ता, दे३ सुसंयत्ता, श१ ससत्ता, प२ ससंयत्ता (→सुसंयत्ता), द२ तत सर्वे सुसत्ता, दे६ तत सर्वे महासत्ता -b) श१ व२ ३ दे१ ३ ५ ६ द१ तथा (→तदा) -c) श१ दानवं (→दानवं) -d) व१ व२ प्रासपाशासि°, द३ ते१ गिरिकूटसं°, म१ गिरिकूटारि°, द१ प्रासपाशादि°, प१ म१ प्रासपाशासि°(व१ °स्त्र)(→गिरिकूटासि°)

दे8-10 मुवँ मुव पुस्तके c, d मध्ये प्रक्षिप्तम्—

* शूरसेनादय पञ्चराजानस्तु महाबला । (=५४ab)

[-1) दे8-10 शूर° (→शूर°)]

५३ दे8-10 मुए मुव ⊙, मुवँ cd ⊙, -a) श१ दानवान् विप्रा, मुवँ स हि विप्रेन्द्रा (→दानवो विप्रा) -c) द१ म१ मारयामास (→वारयामास), द१ प१ २ निवारयामास घोरात् (द१ पुरान्), म१ वारयामास स घोरान्

५४ दे8-10 मुवँ, मुए मुव ab ⊙ -a) व१ सर्वे (→पञ्च) -c) म१ युद्धा च (→युद्धाय), द१ ६ °संरब्धं, दे१ °संरंभा, म१ °संरम्भा, त१ °सरम्भा (→°संरम्भा). -d) व२ ३ प्र°, दे१ द१ प१ २ म१ सभि° (→त्वभि°).

५५ -a) दे१ प्राहिणोद् (→प्राहिणोद्), म१ द१ रौद्रं (→रौद्रं) -b) दे१ १० शूर° (→शूर°), दे१ शूरसेनं, दे१ शूरसेन (→नु वारुणं) -c) द१ द१ श१ २ तथा कृष्णे, म१ महाविष्णु (→तथा कृष्णो) -d) श१ पृष, द१ १ दे१ ३ ५ ६ धृष्ट, दे१ द१ प१ २ म१ धृष्ण, दे१० धृष्णु, म१ धृत, दे१ विष्णुर (→धृष्ण)

जयध्वजश्च कौबेरमैन्द्रमाग्नेयमेव च ।
भञ्जयामास शूलेन तान्यस्त्राणि स दानवः ॥५६
ततः कृष्णो महावीर्यो गदामादाय भीषणाम् ।
स्पृष्ट्वा मन्त्रेण तरसा चिक्षेप च ननाद च ॥५७
संप्राप्य सा गदाऽस्योरो विदेहस्य शिलोपमम् ।
न दानवं चालयितुं शशाकान्तकसंनिभम् ॥५८
दुद्रुवुस्ते भयग्रस्ता दृष्ट्वा तस्यातिपौरुषम् ।
जयध्वजस्तु मतिमान् सस्मार जगतः पतिम् ॥५९
विष्णुं ग्रसिष्णुं लोकादिमप्रमेयमनामयम् ।
त्रातारं पुरुषं पूर्वं श्रीपतिं पीतवाससम् ॥६०
ततः प्रादुरभूच्चक्रं सूर्यायुतसमप्रभम् ।
आदेशाद् वासुदेवस्य भक्तानुग्रहकारणात् ॥६१
जग्राह जगतां योनिं स्मृत्वा नारायणं नृपः ।
प्राहिणोद् वै विदेहाय दानवेभ्यो यथा हरिः ॥६२
संप्राप्य तस्य घोरस्य स्कन्धदेशं सुदर्शनम् ।
पृथिव्यां पातयामास शिरोऽद्रिशिखराकृति ॥६३
तस्मिन् हते देवरिपौ शूराद्या भ्रातरो नृपाः ।
समाययुः पुरीं रम्यां भ्रातरं चाप्यपूजयन् ॥६४
श्रुत्वाजगाम भगवान् जयध्वजपराक्रमम् ।
कार्तवीर्यसुतं द्रष्टुं विश्वामित्रो महामुनिः ॥६५
तमागतमथो दृष्ट्वा राजा संभ्रान्तमानसः ।
समावेश्यासने रम्ये पूजयामास भावतः ॥६६ वें.१ २२ ६६

---

५६ -a) का1 व1-3 दे2-6 न1 ते1 द1 म1 2 तु (→च), ग्र2 कौबेर (→कौबेर) -b) दे10 इन्द्रमग्नीम एव च -c) का1 दे1 5 वेगेन (→शूलेन) -d) दे10 सदाशिव (→स दानव)

५७ -a) द1 तत्र (→धन), दे2 महातेजा (→महावीर्यो) -b) दे4 6 न1 द1 म1 भीषण (→भीषणा) -c) व2 दे1 8-10 मुबें मुए मुब स्पृष्टमात्रेण, व3 पृष्ट्वा मत्रेण, न1 सृष्ट्वा मात्रेण (→स्पृष्ट्वा मन्त्रेण), म्र1 शिरसा (→तरसा)

५८ -a) दे1 न (→सा), का1 दे8 गदा घोरा, दे1 2 गदा यस्माद्, दे4 द1 ग्र1 2 म1 विदेहस्य, न1 ते1 गदाऽस्योरः (→गदाऽस्योरो) -b) दे1 शिलोपमा (→शिलोपमम्), दे4 द1 ग्र1 2 म1 गदा शैलोपम शिर -c) दे1 चालयतु (→चालयितुं), दे3 6 न दान चालयित्वा तु -d) व2 °काधत° व3 °काऽवन्त° (→°कान्तक°)

५९ -a) दे4 दद्रुवुर् (→दुद्रुवुः), व1-3 दे3 4 5 6 ग्र2 °भस्ता, ग्र1 °ग्रस्ताद् (→°ग्रस्ता) -b) का1 दे1 तस्यापि, दे5 तस्यासि, म1 तथापि (→तस्याति-) -c) म1 न (→तु) -d) द1 जगता (→जगत)

६० -a) दे8 10 मुबें मुए मुब जयिष्णु (→ग्रसिष्णु), द1 लोकादीन् (→लोकादिम्), ग्र2 विष्णु स्मरति लोकादि -c) व1 भ्रातर (→त्रातार), -d) दे5 °वससा (→°वासस)

६१ -d) दे1 °नाय तत्, दे8-10 म1 मुबें, मुए, °नासदा (→°कारणात्)

६२ -b) दे5 दृष्टवा (→स्मृत्वा), दे8 नूप, दे10 प्रभु, द1 मृप (→नृप) -c) दे1 प्राह° (→प्राहि°), दे1 द1 विदा° (→विदे°) -d) दे5 दानवेन्द्राय (→दानवेभ्यो)

६३ -a) व1 देशस्य (→घोरस्य) -b) व1 3 स्कन्द° (→स्कन्ध°), व2 दे2 °शन, ते1 °शंन, 4 °र्शन (→°र्शनं) -c) दे4 पृथिवी (→पृथिव्यां) -d) व1 दे1 9 न1 ग्र1 °कृति, व3 दे4 5 10 म1 °कृति, ते10 °कृते (→°कृति), ग्र2 शिरोद्रिशिखर प्रति

६३ इत्येतत् पर का1 व1 3 दे1-3 5 6 ते1 मुबें अधिकम्:—

19 ∗ तद्धि चक्रं पुरा विष्णुस्तपसाराध्य शंकरम् ।
तस्मादवाप तत्तस्मादसुराणां विनाशकम् ॥

[-1] ते समाराध्य (→तपसाराध्य), दे1 शकन (→शंकर) -2) का1 तस्माद् (→सम्माद्), विनाशकं रे (→विनाशकम्) ]

६४ मुबें ab ६३ श्लोकानन्तरमागतस्य अधिकश्लोकस्य पूर्वं पतेते -a) दे10 वेद° (→देव°), ग्र2 न अरिसर्गनिहिते (देव) रिपौ -b) न1 नृप (→नृपा) -c) न1 पुर (→पुरी) -d) व1 3 ते1 चाभ्य °, दे3 चाथ, न1 वाप्य (→चाप्य-)

६५ -a) का1 तरसा (→भगवान्) -b) दे6 9 हत्वा जय° (→जयध्वज°), दे5 °क्रमा (→°क्रम) -c) दे5 कीर्त° (→कार्त°), दे1 दृष्ट, दे9 0 मस्त, ग्र1 दृष्ट्वा (→द्रष्टुं)

६६ -a) दे5 न1 मतो (→अथो) -b) दे1 8-10 मुबें मुए मुब °लोचन (→°मानस), दे4 राजान प्रान्तमानस -c) दे2 तमा° (→समा°); दे1 समाविश्यासने पुरे रम्य, -d) दे6 भारत (→भावत).

वे.१.२२.६६ उवाच भगवन् घोरः प्रसादाद् भवतोऽसुरः ।
निपातितो मया संख्ये विदेहो दानवेश्वरः ॥६७
त्वद्वाक्याच्छिन्नसंदेहो विष्णुं सत्यपराक्रमम् ।
प्रपन्नः शरणं तेन प्रसादो मे कृतः शुभः ॥६८
यक्ष्यामि परमेशानं विष्णुं पद्मदलेक्षणम् ।
कथं केन विधानेन संपूज्यो हरिरीश्वरः ॥६९
कोऽयं नारायणो देवः किंप्रभावश्च सुव्रत ।
सर्वमेतन्ममाचक्ष्व परं कौतूहलं हि मे ॥७०

विश्वामित्र उवाच ।

यतः प्रवृत्तिर्भूतानां यस्मिन् सर्वमिदं जगत् ।
स विष्णुः सर्वभूतात्मा तमाश्रित्य विमुच्यते ॥७१
स्ववर्णाश्रमधर्मेण पूज्योऽयं पुरुषोत्तमः ।
अकामहतभावेन समाराध्यो न चान्यथा ॥७२
एतावदुक्त्वा भगवान् विश्वामित्रो महामुनिः ।
शूराद्यैः पूजितो विप्रा जगामाथ स्वमालयम् ॥७३

६७ –a) श१ भगवान्, + भगवन्, घ१ ३ दे१ ३ ४-६ ८-१० न१ प्र२ भगवान् (→भगवन्) –b) दे१ प्रभावात् (→प्रसादाद्) –c) व२ मया युद्धे, ध३ दे५ द१ प्र१ २ मया सार्धं, दे१ ममास्त्रेण, दे२ महास्त्रेण, दे८ १० मुर्वे मुए मुव मया सोऽप, न१ [प]मुना सार्धं, म१ मया विद्धन् (→मया संख्ये) –d) दे२ दानवोत्तम, दे४ दानवेश्वरं, द१ प्र१ म१ दानव वरं (→दानवेश्वर)

६८ –a) श१ तद्वाक्य°, दे१ त्वद् वाक्य°, दे३ मद् त्व°, दे१० त्वद् वाक्या° (→त्वद्वाक्या°), दे२ त्वद् वाक्योदितसंदेहो, दे६ त्वयि नष्टच्छिन्नसंदेहो –c) दे ८-१० प्रपन्न, द१ प्र१ २ म१ प्रपन्न– (→प्रपन्न) –d) दे१० शुभ कृत (→कृत शुभ)

६९ –c) दे१० सेन (→केन)

७० –b) दे१ ५ सुव्रता (दे५ °त) →सुव्रत) –c) घ१ महाचक्ष्व (→ममाचक्ष्व)

७० श्लोकात् पर मुर्वे पुर्ववे धधिकम्—
२० ∗जयध्वजस्य वचनं श्रुत्वा शान्तो मुनिस्तत ।
दृष्ट्वा हरो परां प्रीतिं विश्वामित्र उवाच ह ॥
ङ. दे८ ९ विश्वामित्र उ, न१ श१ द१ प्र१ २ म१ विश्वामित्र

७१ –b) श१ घ१ ३ दे१-६ ८ १० न१ श१ मुर्वे मुए मुव यतो (→यतः) –c) श१ यता° (→प्रवृ°) –d) द१ प्र१ २ म१ प्रमुच्यते (→विमुच्यते)

७१ श्लोकात् पर श१ घ१ ३ दे१ ३ ५ ८-१० म१ मुर्वे मुए मुव पुस्तकेषु धधिकम्—
२१ ∗ समस्तात् परात्परं परं ब्रह्माख्यमव्ययम् ।
यत्तत्परमं व्योम वै नारायण स्मृत ।
निर्लोपो निर्विकल्पो निराधारो निरञ्जनः ।
चतुर्भुजधरः विष्णुरच्युत प्राप्यते स्वयम् । [४]
परमात्मा परं धाम परं ब्रह्म परं परम् ।
विश्वरूपात् परः समाख्यातः ।
स वासुदेवो विश्वात्मा यो नारायणः पुरुषोत्तम ।
यस्यांशसंभवो ब्रह्मा रुद्रोऽपि परमेश्वर । [८]

[घ१ ३ ७-८ ○ –१) श१ दे५ योऽक्षरात्परतो नान्यस्त्रिषु लोकेषु विद्यते, दे१ यमक्षरात्परतो नान्यो त्रिषु लोकेषु विद्यते –२) न१ शुभ (→स्मृत), दे१ नारायणोऽच्युत (→नारायण स्मृत) –४) दे२ °भुजो (→°धरः), दे२ °स्याप (→°रच्युत), श१ दे२ ५ मुर्वे, घ२-३ पत (→स्वयम्) –५) श१ घ१ ३ दे१ २ ५ व्योम (→धाम), श१ घ१ ३ दे१ २ ५ धाम (→व्योम), घ१ ३ तप (→पद) –६) म१ द्विपादम (→निराधार), श१ दे५ यम (→क्रम), श१ घ१ ३ दे१ ५ वेद° (→ब्रह्म°), घ१ ३ °वेदिन [(→°वादिन) –८) श१ दे२ ५ यस्यांशाद् (दे२ °शाद्) भवद (→यस्यांशसंभवो), म१ यस्यांशात्सं भवोद्भो, दे१० ब्रह्मवादिन (→परमेश्वर)]

७२ दे१ ६ cd ○ –a) दे१ न१ स° (→स्व°), दे१ १० °धर्मा° (→°वर्णा°) –b) द१ पूजीयां, घ२ दे१० पूज्योऽयं, दे१ मुर्वे पूज्यो य, दे२ ९ पूज्यो यं, दे८ ९ द१ प्र१ म१ मुए मुव पूजाय, प्र२ पूजार्य (→पूज्योऽयं), दे१ ६ परमेश्वर (→पुरुषोत्तम) –c) दे१ २ ६ द१ मुर्वे मुए यकामाद्, दे१ १० यकामा-, यत्नमाद् (→अकाम-), दे३ -हुत°, दे१० -कृत°, मुर्वे मुए तन° (→हत°), घ१ ३ दे१ मुव दृढस्नेह (घ१ श१ मुव °स्नेहा)°पराभूतिद्, न१ यकामफल न भावेन, घ२ अनामाहत-भावेन –d) मुव तदा° (→समा°), घ१ ३ दे१ दिया (दे१ दिरस) तस्या (दे१ °यो)न चान्यथा

अत पर श१ दे१ पुस्तकयोरधिकम्—
∗तस्यार्थं (श१ °र्थ) पराभूतिस्तिरास्यो न चान्यथा.
(=७२cd इ पाठभेद)

७३. –a) दे१ उक्त्वा (→उक्त्वा) –b) दे१ २ ८-१० न१ मुर्वे मुए मुव महात्मा (→महामुनि) –c) दे१ पू° (→शू°), ध१ पूर्वैर्षो (→शूराद्यैः), दे८-१० मुर्वे मुए मुव

BHARATIYA ... BOMBAY ... LIBR



अथ शूराद्यो देवमयजन्त महेश्वरम् ।
यज्ञेन यज्ञगम्यं तं निष्कामा रुद्रमव्ययम् ॥७४
तान् वसिष्ठस्तु भगवान् याजयामास सर्ववित् ।
गौतमोऽत्रिरगस्त्यश्च सर्वे रुद्रपरायणाः ॥७५
विश्वामित्रस्तु भगवान् जयध्वजमरिंदमम् ।
याजयामास भूतादिमादिदेवं जनार्दनम् ॥७६
तस्य यज्ञे महायोगी साक्षाद् देवः स्वयं हरिः ।
आविरासीत् स भगवान् तदद्भुतमिवाभवत् ॥७७
य इमं शृणुयान्नित्यं जयध्वजपराक्रमम् ।
सर्वपापविमुक्तात्मा विष्णुलोकं स गच्छति ॥७८ वे1.२२.८७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे एकविंशोऽध्यायः ॥२१॥

---

विप्रो (→विप्रा) –d) दे1.2 4 8-10 द1 प्र1 2 म1 मुवँ मुए मुव श्रयमम (→मालय)

७४ –b) य3 द1 अयजन् त, प्र2 अयजन् तत्, म1 मवि-दन्त (→अयजन्त), दे3 अयजन् परमेश्वर –d) दे10 निष्कामात् (→निष्कामा).

७५ –a) दे1 वशिष्ठम् (→वसिष्ठस्) –b) व1 दे1 2 8-10 मुवँ मुए मुव धर्मवित् (→सर्ववित्) –c) दे4 न1 गौतमो (→गौतमो), दे1 गौतमोऽत्र वशिष्ठस्तु, दे9-10 मुवँ मुए मुव गौतमोऽगस्तिरत्रिश्च –d) का1 दे3 5 6 °परायणान्, दे8-10 मुवँ मुए मुव °परात्मना, न1 °पराक्रमान् (→°परायणाः)

७६ –c) द2 प्र1 2 भूतानां, म1 देवानां (→भूतादि)

प्रत पर व1 3 दे3 5 6 तो1 पुव. अधिकम्—

22 * जयध्वजोऽपि त विष्णुं रुद्रस्य परमां तनुम् ।
एवमेव सर्वदा बुद्ध्वा यत्नेनायजदच्युतम् ।

[–1) का1 ⊙, तो1 यज्ञेना° (→यत्नेना°) ]

का1 दे2 मुवँ अयं श्लोकः ७७ श्लोकानन्तरमधिकरूपेण वर्तते

७७ –a) म1 यज्ञ (→यज्ञे) –b) का1 विष्णुराविर्भवस्तदा –c) का1 तत्रैवासीत् (→आविरासीत्), दे2 4 न1 द1 म1 स भगवान्, दे5 6 तो1 प्र1 2 स्वभावार्थे (→स भगवान्)

७८ –a) व1-3 दे1 10 न1 प्र2 म1 इदं (→इमं), का1 व1-3 दे1-3 5 6 वे1 मर्त्यो (→नित्यं) –c) व2 3 न1 तो1 प्र2 विशुद्धात्मा, दे1 2 6 8-10 मुवँ मुए मुव °विनिर्मुक्तो (→°विमुक्तात्मा) –d) प्र1 °लोके (→°लोकं), दे2 प्रयात्युपात् (→स गच्छति)

पुष्पिका—

पुराणनाम—द1 ⊙, का1 दे1 2 4 8-10 प्र1 2 म1 मुवँ मुए इति श्रीकूर्मपुराणे, व1 इति कौर्मे, व2 3 द3 5 6 इति कूर्मपुराणे, न1 इति श्रीकौर्मे, तो1 इत्यादिमहापुराणे श्रीकौर्मे, मुव इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम— व2 दे4 तो1 द1 प्र1 2 म1 ⊙, का1 व1 3 दे3 5 विदेहवंशानुकीर्तने (न1 °न), द1 8-10 न1 मुए मुव सोमवंशानुकीर्तनं (दे6 9 °न), दे1 राजवंशानुकीर्तने, दे8 विदेहवंशानुकीर्तनं नाम, मुवँ सोमवंशानुकीर्तनं नाम अध्यायसंख्या— व1 दे6 द1 ⊙, का1 व3 दे3 4 5 न1 तो1 प्र1 विंशाऽध्यायः, व2 ॥२०॥, दे1 मुवँ मुव द्वाविंशोऽध्यायः ॥२२॥, दे2 प्र2 म1 मुए द्वाविंशोऽध्यायः, दे8 9 कथाविंशोऽध्यायः, दे10 द्वाविंशति-तमोऽध्यायः ॥२२॥ श्री सीतारामचन्द्रार्पणमस्तु.

वें १२६२ पूजयाञ्चक्रिरे कृष्णं देवदेवमथाच्युतम् ॥२
चतुर्बाहुमुदाराङ्गं कालमेघसमप्रभम् ।
किरीटिनं शार्ङ्गपाणिं श्रीवत्साङ्कितवक्षसम् ॥३
दीर्घबाहुं विशालाक्षं पीतवाससमच्युतम् ।
दधानमुरसा मालां वैजयन्तीमनुत्तमाम् ॥४
भ्राजमानं श्रिया दिव्यं युवानमतिकोमलम् ।
पद्माङ्घ्रिनयनं चारु सुस्मितं सुगतिप्रदम् ॥५
कदाचित् तत्र लीलार्थं देवकीनन्दवर्द्धनः ।
भ्राजमानः श्रिया कृष्णश्चचार गिरिकन्दरे ॥६
गन्धर्वाप्सरसां मुख्या नागकन्याश्च कृत्स्नशः ।
सिद्धा यक्षाश्च गन्धर्वास्तत्र तत्र जगन्मयम् ॥७
दृष्ट्वाश्चर्यं परं गत्वा हर्षादुत्फुल्ललोचनाः ।
मुमुचुः पुष्पवर्षाणि तस्य मूर्ध्नि महात्मनः ॥८
गन्धर्वकन्यका दिव्यास्तद्वदप्सरसां वराः ।
दृष्ट्वा चकमिरे कृष्णं स्रस्तवस्त्रविभूषणाः ॥९
काश्चिद् गायन्ति विविधा गीतिं गीतविशारदाः ।
संप्रेक्ष्य देवकीसूनुं सुन्दर्यः काममोहिताः ॥१०

---

प्र2 महात्मान (→महात्मान) –b) ते1 °बाशिनम् (→°वा-सिन) –c) प्र1 विष्णु (→कृष्ण) –d) का1 व1 दे1 3-6 8-10 न1 द1 मुवें मुए इवाच्युतम्, प्र1 महाच्युतम् (→प्रथाच्युतम्), व2 3 मुब. देव नारायण प्रभुम्, प्र3 देवदेवेशमच्युतम्

३ म1 ○ (द्र २ पा वि) –b) का1 दे5 नील° (→काल°) –c) दे8 किरीटिने (→किरीटिन)

४ –c) दे3 5 दधान (दे5 °र) मुरसा मालां, दे4 दधारमुरसा माला, दे8-10 दधानं मु (दे8 मु?) रसा माला –d) दे3 5 °त्तम (→°त्तमा)

अत परं म1 अधिकम्—

* किरीटिनं शार्ङ्गपाणिं श्रीवत्साङ्कितवक्षसं ।
चतुर्बाहुमुदाराङ्गं कालमेघसमप्रभम् ।
पूजयाञ्चक्रिरे कृष्णं देवदेवं जनार्दनम् । ( = २cd-३)

५ म1 ○ –a) दे6 भ्राजभाण (→भ्राजमान), व3 दे4 8 9 प्र2 मुन मुए मुव देव्या, दे10 दिव्या ते1 दीप्त (→दिव्य) –b) व2 3 दे3 6 प्रधान (→युवान), दे0 प्रधानमिति कोमल, दे8-10 युवानम (दे10 °मि) तिलोचनम् –c) व1-3 दे3 4 6 10 न1 द1 मुवें मुए मुब पद्माङ्घ्रि पद्मनयन चारु, दे1 8 9 पद्माङ्घ्रि पद्मनयन चारु दे5 पद्मो नयनं चारु, ते1 पद्मास्य पद्मनयन चारु, प्र2 पद्माभ पद्मनयन चारु –d) व1 2 दे1 5 8-10 म1 ते1 द1 मुवें मुए मुव सस्मित, दे1 सस्मृत (→सुस्मित), प1 स्वगतिप्रदम्, व2 सुमतिप्रदम्, दे1 8 10 न1 मुवें मुए मुब सद्गतिप्रदम्, दे5 सुगतिप्रदा, प्र1 सुरभिप्रदम्, द2 सुमदाहृति (→सुगतिप्रदम्)

६ –a) दे1 लीलार्थं (→लीलार्थं) –b) का1 म1-3 दे3-6 द1 प्र1 2 म1 देवकीहर्षवर्द्धन (प्र1 2 °न), ते1 देवकीनन्दिवर्धनम्. –c) प1 प1 भ्राजमान, दे6 ते1 द1 प्र1-2 भ्राजमानं (→भ्राजमान), दे2 तदा, +श्रिया (→श्रिया), प्र1 ते1 कृष्ण (→कृष्णश्च) –d) ते1 तुषार- (→चचार), दे8 10 मुवें मुए °कन्दरम् (→°कन्दरे)

७ –a) दे2 ते1 प्र2 म1 [अ]प्सरसो, द1 [अ]प्सरसा (→[अ]प्सरसा), न1 प्र1 मुख्या, दे1 मूता, द1 मुख्या (→मुख्या) –b) व1 °कन्या च (→°कन्याश्च), दे1 कृत्स्नाश, द1 प्र1 2 म1 मुख्यशः (→कृत्स्नशः), ते1 पन्नगासुरगुह्यकाः –c) दे8-10 मुवें मुए मुब गन्धर्वा (→गन्धर्वाः), दे2 सिद्धाश्च यक्षगन्धर्वाः दे1 सिद्धा विद्याधरा यक्षास् –d) दे8-10 मुवें. मुए मुब देवास्तु च (→तत्र तत्र)

८ –a) व3 दृष्ट्वाचर्यं, दे10 प्र2 म1 दृष्ट्वाश्चर्यं, न1 दृष्ट्वाश्चर्यं (→दृष्ट्वाश्चर्यं), द1 प्र1 म1 पद (→परं) –b) म3 दे4 °लोचनः (दे4 °ना) (→लोचनाः), दे10 हर्षादिप्युत्फुल्ललोचना

९ दे10 cd ⊙ –b) का1 दे4 5 द1 प्र1 2 म1 [अ]प्सरसां गणाः, मुवें मुए मुव [अ]प्सरसो वराः (→[अ]प्सरसां वराः) –c) दे1 दृष्ट्वा (→दृष्ट्वा), का1 व1 चकमिरे, व2 3 च रेमिरे, दे1 च मेनिरे, दे5 च• मिरे, दे8 चक्रमिरे, प्र2 चत्रमिरे (→चकमिरे), दे5 कृष्ण, द1 विष्णु (→कृष्णं) –d) दे1 सूक्ष्मवस्त्रविभूषणम्, दे3 द1 स्रस्तवस्त्र-विभूषण (द1 °णाः), दे8 9 मुवें मुए मु (दे8 9 स) स्त्रुत शुचि भूषणा, दे1 दिव्यश्रीवस्त्रभूषणम्

१० दे10 ab ○ –a) दे3 6 द1 काचित्, दे5 केचित् (→काश्चित्), का1 व1 दे1 3 6 न1 ते1 विविधा, दे3 विबुधा, दे4 विविधा, दे5 विविध-, दे8 9 द2 प्र1 2 म1 मुवें मुए मुव विविध (→विविधां) –b) का1 दे5 गीतंगीतिं-, प1 गीतिर्गीति-, दे2 3 6 गीतिगीति- (दे3 °त), दे4 गीत गीति°, दे8 9 मुवें मुए मुव गान गीत-, न1 द1 प्र1 2 गीतगीत-, ते1 गीतनृत्य-, म1 गीतगीति- (→गीतिं गीत-), दे5 -विशारद (→विशारदाः) –c) ते1 °पुत्र (→°सूनुं) –d) दे1 सौन्दर्य, दे8-10 मुवें मुए मुब सुन्दर, प्र3 सौन्दर्य (→सुन्दर्य)

काश्चिद्विलासबहुला नृत्यन्ति स्म तदग्रतः ।
संप्रेक्ष्य संस्थिताः काश्चित् पपुस्तद्वदनामृतम् ॥११

काश्चिद् भूषणवर्याणि स्वाङ्गादादाय सादरम् ।
भूषयाञ्चक्रिरे कृष्णं कामिन्यो लोकभूषणम् ॥१२

काश्चिद् भूषणवर्याणि समादाय तदङ्गतः ।
स्वात्मानं भूषयामासुः स्वात्मगैरपि माधवम् ॥१३

काश्चिदागत्य कृष्णस्य समीपं काममोहिताः ।
चुचुम्बुर्वदनाम्भोजं हरेर्मुग्धमृगेक्षणाः ॥१४

प्रगृह्य काश्चिद् गोविन्दं करेण भवनं स्वकम् ।
प्रापयामासुरुल्लोकादि मायया तस्य मोहिताः ॥१५

तासां स भगवान् कृष्णः कामान् कमललोचनः ।
बहूनि कृत्वा रूपाणि पूरयामास लीलया ॥१६

एवं वै सुचिरं कालं देवदेवपुरे हरिः ।
रेमे नारायणः श्रीमान् मायया मोहयञ्जगत् ॥१७

गते बहुतिथे काले द्वारवत्यां निवासिनः ।
बभूवुर्विह्वला भीता गोविन्दविरहे जनाः ॥१८ व १२६.१८

---

११ -a) द1 काचित् (→काश्चित्), ते1 °बहुधा (→°बहुला) -b) दे4 नृत्यंति स्म, ते1 नृत्यन्ते स्म (→नृत्यन्ति स्म), व2 मुदान्विता, दे1 तदाग्रत (→तदग्रत) -c) ब1 सम्प्राप्य (→संप्रेक्ष्य), दे1 8-10 न1 ते1 मुवें मुए मुव, सस्मित, दे4 सस्मित (→संस्थिता), दे3 6 द1 काचित्, दे4 10 काश्चित् (→काश्चित्), का1 प्रेक्ष्य सप्रस्थिता काश्चित् -d) दे1 पपुस् दे3 6 मधुम्, न1 वायुम्, द1 पुनस् (→पपुस्), दे1 °वक्ता° (→°वदना°)

१२ दे6 ⊙, दे1 १२ १३ ○ -a) म1 °वर्याणा (→°वर्याणि), ते1 काश्चिदभूषा विशेषाणि -b) वे1 समादाताय, द1 प्र1 स्वागदादाय (→स्वाङ्गादादाय), वे1 भूषण, दे8 9 सुंदर (→सादरम्) -c) का1 भूषित (→भूषया) -d) दे1 कामिन्यो लोकभूषणे दे2 कामिन्यो लोलभूषण, दे8 10 मुवें मुए कन्यालोकविभूषणम्

१३ दे4 ○ (द्र १२ पा वि), ब1 ab ○ -b) न1 तदागत प्र1 तदग्रत (→तदङ्गत) -c) का1 दे5 ते1 आत्मान (→स्वात्मान), व3 भूषयमास (→भूषयामासु) -d) का1 दे5 चात्मगैरपि, दे3 प्र2 स्वात्ममंगैरपि, दे3 8 स्वानु गैरपि, दे8 9 न1 म1 मुवें मुए मुव स्वात्मकैरपि, दे10 स्वात्मकैरपि (→स्वात्मगैरपि), द1 प्र1 2 म1 केशव (→माधवम्), वे1 स्वात्मनैवापिसाधनम्

१४ दे3 6 १४c-१५d ⊙ (द्र ध) -a) ब1 दे1 4 8 9 न1 ते1 मवें मुए मुव काचित् (→काश्चित्), द1 प्र1 मागम्य (→गागत्य), दे3 काश्चित् कृष्णस्य सजगमु, दे8 काश्चित्कृष्णस्य देवस्य -b) व2 समीक्ष्य (→समीप), प्र1 3 दे8 9 ग1 ते1 मुवें मुए मुव °मोहिता, दे4 8 10 °मोहित (→°मोहिता) -c) ब1-3 दे2 5 8-10 ते1 मुवें मुए मुव चुचुम्ब, न1 चुचुम्बे (→चुचुम्बुर्), दे4 द1 प्र1 2 ग1 चुचुम्बिरे मुखाम्भोज -d) दे1 मुख, दे5 मुग्धा (→मुग्ध-), का1 ब1 3 न1 ते1 मुवें मुए मुव °मृगेक्षणा, दे8 9 °मृतेक्षणा, दे10 °मृगेक्षणाद (→°मृगेक्षणा॰), द1 प्र1 3 ग1 हरेर्मुग्धविलोचना

१५ दे3 6 ○ (द्र १४ पा वि) -a) दे1 द1 प्र1 2 म1 करेण (→प्रगृह्य), का1 ब1-3 दे5 चापि, दे2 8 9 न1 द1 म1 मुवें मुए मुव काचित्, दे4 काश्चिद्, दे10 काचिद् (→काश्चिद्), ते1 मोहात्प्रियं गृह्य काचित् -b) दे4 द1 प्र1 2 म1 प्रगृह्य (→करेण), दे1 स्वयं, दे5 स्वकां (→स्वकम्) -c) का1 ब1-3 दे2 4 5 8 10 न1 ते1 म1 मुवें मुए मुव °मास, दे1 °मासु (→°मासुर्), का1 दे1 लोकादीन् दे8-10 न1 प्र1 लोकादि, द1 लोकादिर् (→लोकादि) -d) प्र2 ग1 लीलया (→मायया), ब1 3 दे2 5 8-10 न1 ते1 म1 मुवें मुए मुव मोहिता (→मोहिता)

अत्र परं ते1 अधिकम्—

निशम्य भगवान् कृष्ण कामान्दृष्टिविलोचना (= १६ ab)

१६ -a) का1 दे1 2 म1 च, प्र1 तु (→स) दे3 कृष्ण (→कृष्णः) -b) दे3 कामात्, दे8 कामा (→कामान्), द1 प्र1 स कमलासन, प्र2 सकलेक्षणम्, म1 सौभाग्यासन (→कमललोचन) -c) दे1 कृत्वा (→कृत्वा)

१७ दे5 bcd○ -a) का1 ब1 दे3 5 6 एवं तु, व2 3 एतत्तु दे2 एव हि दे4 शृण्वन्तु (→एवं वै) -b) का1 स्थित्वा देव, द1 देवदेव (→देवदेव), द1 प्र1 पुरो, प्र1 -पुरो (→ पुरे), ते1 देवदेवेश्वरो हरि -d) व2 3 दे3 4 6 द1 प्र1 2 म1 जगान् (→जगत्)

१८ दे5 abc ○ -b) ब1 2 दे2 8 10 प्र2 मुवें मुए मुव द्वारवत्य, न1 द्वारवत्य(?) (→द्वारवत्यां) -c) का1 दे3 6 8-10 मुवें मुए मुव विकला, ते1 विह्वली (→विह्वला), दे1 2 ते1 भूता, दे10 भीना (→भीता)

वें १.२६.१६ ततः सुपर्णो बलवान् पूर्वमेव विसर्जितः ।
कृष्णेन मार्गमाणस्तं हिमवन्तं ययौ गिरिम् ॥१९
अदृष्ट्वा तत्र गोविन्दं प्रणम्य शिरसा मुनिम् ।
आजगामोपमन्युं तं पुरीं द्वारवतीं पुनः ॥२०
तदन्तरे महादैत्या राक्षसाश्चातिभीषणाः ।
आजग्मुर्द्वारकां शुभ्रां भीषयन्तः सहस्रशः ॥२१
स तान् सुपर्णो बलवान् कृष्णतुल्यपराक्रमः ।
हत्वा युद्धेन महता रक्षति स्म पुरीं शुभाम् ॥२२
एतस्मिन्नेव काले तु नारदो भगवानृषिः ।
दृष्ट्वा कैलासशिखरे कृष्णं द्वारवतीं गतः ॥२३
तं दृष्ट्वा नारदऋषिं सर्वे तत्र निवासिनः ।
प्रोचुर्नारायणो नाथः कुत्रास्ते भगवान् हरिः ॥२४
स तानुवाच भगवान् कैलासशिखरे हरिः ।
रमतेऽद्य महायोगी तं दृष्ट्वाऽहमिहागतः ॥२५
तस्योपश्रुत्य वचनं सुपर्णः पततां वरः ।
जगामाकाशगो विप्राः कैलासं गिरिमुत्तमम् ॥२६
ददर्श देवकीसूनुं भवने रत्नमण्डिते ।
वरासनस्थं गोविन्दं देवदेवान्तिके हरिम् ॥२७
उपास्यमानममरैर्दिव्यस्त्रीभिः समन्ततः ।
महादेवगणैः सिद्धैर्योगिभिः परिवारितम् ॥२८
प्रणम्य दण्डवद् भूमौ सुपर्णः शंकरं शिवम् ।
निवेदयामास हरेः प्रवृत्तिं द्वारके पुरे ॥२९

---

१९ दे3 6 १९d २१c ○ –a) दे1 2 द1 प्र1 म1 भगवान् (→बलवान्) –b) दे1 विसजित, दे4 प्र1 म1 विवर्जित (→विसर्जित) –c) दे8 10 न1 मुवॅ मुए मुब स कृष्ण (→कृष्णेन), का1 दे6 °मानस्त, दे2 4 °मानरतु, दे8 9 द1 प्र1 2 म1 मुवॅ मुए मुब °माणरतु, दे10 °मार्गेन्तु (→°माणस्त) –d) वा1 द1 3 दे2 4 5 न1 ययौ नग, वे1 समाययौ, प्र2 गिरिं ययौ (→ययौ गिरिम्)

२० दे3 6 ○ (द्र १९ पा वि) –a) दे1 अदृष्टा, ते1 त दृष्ट्वा (→अदृष्ट्वा) –b) दे4 प्रणम्य (→प्रणम्य), ते1 नत (→मुनि) –c) दे1 °मापमन्य त, दे5 °मोपमन्यु तु ते1 °मोत्तमपुरी (→°मोपमन्यु त) –d) दे2 8 9 द्वारावती (→द्वारवती), ते1 पुनर्द्वारावती यत

२१ दे3 6 abc ○ (द्र १९ पा वि) –a) न1 तदत म (→तदन्तरे), द1 °दैत्या (→°दैत्या) –b) का1 दे5 राक्षसाश्चापि, व2 द1 प्र1 म1 राक्षसाश्च वि, दे4 राजसाश्चाभि-, ते1 राक्षसा भृश, प्र2 राक्षसा विश्व (→राक्षसाश्चाति) –c) त1 माजग्मुर् (→माजग्मुर्), दे1 शुभा, ते1 रूवा, प्र2 म1 पुण्या (→शुभ्रा) –d) दे1 भीषयन् वै (→भीषयन्त)

२२ –a) ते1 तत (→स तान्), का1 वा1 3 दे3 5 8 द1 प्र1 2 म1 भगवान् (→बलवान्) –c) का1 हत्वा, द1 हता (→हत्वा), प्र2 युद्धेन महता तस्य –d) द3 रक्षति स्म, दे10 रक्षति स्म- (→रक्षति स्म), दे2 पुरीमिमां (→पुरीं शुभाम्)

२३ –a) दे1 एतस्मिन्नेवान्तरे प्राप्तुर् –c) दे1 दृष्टा (→दृष्ट्वा) –d) म1 कृष्ण- (→कृष्णं), दे3 4 द्वारवती (→द्वारवतीं).

२४ –a) दे1 8 10 न1 मुवॅ मुए मुब ते (→तं), प्र2 सर्वे (→ऋषिं) –b) प्र2 तत्र (→सर्वे) –d) दे2 भगवानृषे (→भगवान् हरि)

२५ –a) दे4 सा तनु° (→स तानु°) –b) दे3 हरि, दे4 गिरि (→हरि), न1 कृष्णतुल्यपराक्रम –c) दे4 नमते, दे10 समते (→रमते) –d) दे3 8 त स्तुत्वामिहागत

२६ –a) दे2 4 तस्योपसृत्य, द1 तस्य श्रुत्वाथ (→तस्योपश्रुत्य) –b) दे4 पतत (→पतता) –c) दे5 जगामाकाशगो°, प्र2 आजगामाशुगो° (→जगामाकाशगो°), दे4 विप्रा (→विप्रा) –d) म1 दे4 10 ते1 प्र1 म1 कैलास- दे2 9 कैलाश (→कैलास)

२७ न1 ○ –a) दे8 10 ददर्श (→ददर्श), दे5 °सूनुर्, ते1 °पुत्र (→°सूनु). –b) प्र2 °मण्डित (→°मण्डिते), म1 भवनोत्तम मण्डिते –c) दे8 10 मुवॅ मुए वरा°, दे1 मही° (→वरा°) –d) व3 °देवान्तिक, दे10 प्र2 °देवान्तिको (→°देवान्तिके), दे10 हरि (→हरिम्)

२८ प्र2 d ○ –a) दे5° मानमपरी, द1 °मानैरमरै (→°मानममरैर्) –b) दे2 देव°, दे5 देव्य° (→दिव्य°) –d) दे1 4 °रित (→°रित)

२९. –b) दे4 सुपूर्ण (→सुपर्ण), ते1 स हरि (→शंकर), व1 हरि, दे5 द1 प्र1 2 म1 शिवं (→शिव) –c) का1 व1-3 दे3 5-6 8-10 न1 द1 प्र1 म1 मुवॅ मुए मुब हरि, दे2 तत्र, दे4 हरि, प्र2 पुरे (→हरे) –d) का1 व1 3 दे5 8 9 न1 द1 प्र1 2 म1 मुवॅ मुए मुब प्रवृत्त (→प्रवृत्ति), व1-3 दे2-6 8 8-10 न1 ते1 द1 प्र1 म1 मुवॅ मुए मुब, द्वारका (→द्वारके), दे4 पुरे, ते1 पुरं (→पुरे)

ततः प्रणम्य शिरसा शंकरं नीललोहितम् ।
आजगाम पुरीं कृष्णः सोऽनुज्ञातो हरेण तु ॥३०
आरुह्य कश्यपसुतं स्त्रीगणैरभिपूजितः ।
वचोभिरमृतास्वादैर्मानितो मधुसूदनः ॥३१
वीक्ष्य यान्तममित्रघ्नं गन्धर्वाप्सरसां वराः ।
अन्वगच्छन् महायोगं शङ्खचक्रगदाधरम् ॥३२
विसर्जयित्वा विश्वात्मा सर्वा एवाङ्गना हरिः ।
ययौ स तूर्णं गोविन्दो दिव्यां द्वारवतीं पुरीम् ॥३३
गते मुररिपौ नैव कामिन्यो मुनिपुंगवाः ।
निशेव चन्द्ररहिता विना तेन चकाशिरे ॥३४
श्रुत्वा पौरजनास्तूर्णं कृष्णागमनमुत्तमम् ।
मण्डयाञ्चक्रिरे दिव्यां पुरीं द्वारवतीं शुभाम् ॥३५
पताकाभिर्विशालाभिर्ध्वजै रत्नपरिष्कृतैः ।
लाजादिभिः पुरीं रम्यां भूषयाञ्चक्रिरे तदा ॥३६
अवादयन्त विविधान् वादित्रान् मधुरस्वनान् ।
शंखान् सहस्रशो दध्मुर्वीणावादान् वितेनिरे ॥३७
प्रविष्टमात्रे गोविन्दे पुरीं द्वारवतीं शुभाम् ।
अगायन् मधुरं गानं स्त्रियो यौवनशालिनः ॥३८
दृष्ट्वा ननृतुरीशानं स्थिताः प्रासादमूर्द्धसु ।
मुमुचुः पुष्पवर्षाणि वसुदेवसुतोपरि ॥३९ वं.१.२६.३९

---

३० –b) प्र2 नीलशंकर (→नीललोहितम्) –d) दे3 सोनुशास्ता, दे10 सोनुज्ञास्ते (→सोऽनुज्ञातो), प्र1 2 म1 स (→तु)

३१ –a) ब1 3 दे3 प्र1 2 म1 काश्यप° (→कश्यप°) –b) ते1 त्रिदशैर् (→स्त्रीगणैर्), दे4 द1 प्र1 2 म1 परिवारित (प्र1 °ता, म1 °त) (→अभिपूजित) –c) दे2 अमृत° (→अमृता°) –d) दे1 2 मानीतो, दे4 मानिनो (→मानितो)

३२ प्र1 ३२a–३३b ○ –a) का1 दे3 वीक्ष्याथान्त, ब1 वीक्षयन्त, दे1 वीक्षमत, दे4 वीक्षयन्त, दे5 वीक्ष्ययान्त, ते1 विपयान्त (→वीक्ष्य यान्त), दे10 वीक्षायातममित्रघ्न. –b) दे4 गन्धर्वाप्सरसो, न1 गन्धर्वाप्सरसा (→गन्धर्वाप्सरसां), का1 दे4 गण, ब1 3 दे3 5 6 द1 प्र2 म1 गणा (→वरा) –c) का1 दे3 5 6 मनु°, दे1 अन्व° (→अन्व°), प्र2 °योगी, म1 °योगी (→°योग) –d) दे5 °धरा (→°धर)

३३ म1 ab ⊙ (द्र ३२ पा टि) –a) प्र2 स पर्जयित्वा (→विसर्जयित्वा), दे2 प्र3 म1 सर्वदिशा (→विश्वात्मा) –b) दे9 10 सर्वं (→सर्वा), दे1 सर्वरावगणा हरि, ते1 सर्वानि पतगवाहन –c) का1 स तूर्णं, ब2 3 मुतूर्णं, दे3 स तूर्णी, न1 प्र2 सुरसूर्णं (प्र2 °र्णं) (→स तूर्णं), दे4 गोविन्दे, दे10 गोविंदं (→गोविन्दो) –d) का1 द्वारा° (→द्वार°), ब2 3 दे3 6 पुर, प्र2 • र्यां (→पुरीम्)

३४ प्र2 cd ○ –a) दे4 गते (→गते), का1 दे3 5 द1 गते मुररिपौ नैव, दे1 8 10 ते1 मुवें मुए मुब गते देवेऽमुररिपौ –b) दे1 2 8-10 मुवें मुए मुब न कामिन्यो (दे8 9 °न्यो) मुनीश्वरा, ते1 कामिन्योय मुनीश्वरा –c) दे3 6 10 निवेश (दे6 °श) (→निशेव) –d) का1 दे2 5 8 10 चकाशिरे (→चकाशिरे)

३५ –b) ब1 दे1 2 4 न1 द1 प्र1 2 म1 नूनं, दे8-10 ते1 [श्रा]नन्द (ते1 °द) (→तूर्णं) –c) द1 मदया° (→मण्डया°) –d) का1 द्वारा° (→द्वार°)

३६. दे3 6 ३६a–३८b ⊙ (द्र स) –a) दे5 विशालाभि पताकाभिर् –b) ब1 ध्वजैरपि परिष्कृते, दे1 ध्वजैरत्नपरिष्कृते, दे8-10 मुवें मुए मुब. ध्वजैरत्नवंहि कृते (दे8 10 °ता) –c) ब1 दे1 न1 मुवें. मुए मुब मालादिभि, द1 तोरणैश्च (→लाजादिभि), दे2 दिव्या, ते1 सर्वा (→रम्यां) –d) दे1 न1 पूजया° (→भूषया°), दे1 8 10 न1 ते1 मुवें मुए मुब जना, दे3 तत (→तदा)

३७ दे3 6 ○ (द्र ३६ पा टि). –a) का1 ब1 दे4 द1 प्र1 2 म1 अवादयन्तो (प्र1 °न्ते°) (→अवादयन्त) –b) दे5 द1 प्र1 2 म1 विचित्रान् (→वादित्रान्), का1 ब3 दे1 2 म1 प1 मधुरस्वरान्, प्र2 म1 विविधस्वनान् (→मधुरस्वनान्)

३८ दे3 6 ab ○ (द्र ३६ पा टि) –a) प्र2 गोविष्ट° (→प्रविष्ट°), ते1 देवेषु (→गोविन्दे) –b) ब2 पुनर् (→पुरीं), का1 द्वारा° (→द्वार°), का1 तदा, दे5 पुरीं (→शुभाम्) –c) ते1 प्रगायन् (→अगायन्) –d) का1 ब1-3 दे3 6 °शालिना, दे1 2 मुवें मुए मुब °शोभिता, दे4 ब2 °शाखिना, म1 °शालिना, ते1 °योषित, द1 प्र1 म1 °शा(प्र1 °षा)लिका (द1 °शा) (→°शालिन)

३९ दे3 cd ○ –a) दे3 6 न तुष्टुरी°, दे4 ननृतुरी°, दे10 ननृतुमी°, द1 प1 ननर्तुरी°, प्र2 म1 ननन्दुरी° (→ननृतुरी°), ते1 दृष्टा ननृतुरत्यर्थं –b) दे4 स्त्री रवा, दे5 प1 स्थित्वा, द1 म1 दृष्ट्वा (→स्थिता); दे2 °मूर्धनि, दे1 °मूर्द्धनि, द1 प्र1 2 °मूर्धत, म1 °मध्यत (→°मूर्द्धसु). –c) प1 प्रमुञ्चन् (→मुमुचुः) –d) प्र2 °सुतो हरि. (→°सुतोपरि)

वे १२६४० प्रविश्य भवनं कृष्ण आशीर्वादाभिवर्द्धितः ।
वरासने महायोगी भाति देवीभिरन्वितः ॥४०
सुरम्ये मण्डपे शुभ्रे शङ्खाद्यैः परिवारितः ।
आत्मजैरभितो मुख्यैः स्त्रीसहस्रैश्च संवृतः ॥४१
तत्रासनवरे रम्ये जाम्बवत्या सहाच्युतः ।
भ्राजते मालया देवो यथा देव्या समन्वितः ॥४२
आजग्मुर्देवगन्धर्वा द्रष्टुं लोकादिमव्ययम् ।
महर्षयः पूर्वजाता मार्कण्डेयादयो द्विजाः ॥४३
ततः स भगवान् कृष्णो मार्कण्डेयं समागतम् ।
ननामोत्थाय शिरसा स्वासनं च ददौ हरिः ॥४४
संपूज्य तानृषिगणान् प्रणामेन महाभुजः ।
विसर्जयामास हरिर्दत्त्वा तदभिवाञ्छितान् ॥४५
तदा मध्याह्नसमये देवदेवः स्वयं हरिः ।
स्नात्वा शुक्लाम्बरो भानुमुपतिष्ठत् कृताञ्जलिः ॥४६
जजाप जाप्यं विधिवत् प्रेक्षमाणो दिवाकरम् ।
तर्पयामास देवेशो देवान् मुनिगणान् पितॄन् ॥४७
प्रविश्य देवभवनं मार्कण्डेयेन चैव हि ।
पूजयामास लिङ्गस्थं भूतेशं भूतिभूषणम् ॥४८

---

४० प्र1 2 म1 ४० a ४२ b ○ दे2 ४०c-४१b ○, द1 ४० ab ○ –a) दे2 प्राविश्य (→प्रविश्य), दे8 10 न1 गुवँ मुए भगवान् (→भवनं), दे3 कृष्णो (→कृष्णस्) –b) का1 व1 3 दे3-8 9 10 न1 द1 मुए मुव त्वाशीर्वादाभि°, द1 त्वाशीर्वाद्वि°, प्र1 म1 स्वाशीर्वादवि°, प्र2 प्राशीर्वाधवि° (→आशीर्वादाभि°), दे2 °वारित, + °वर्द्धित (→°वर्द्धित)

४१ प्र1 2 म1 ○ (द्र ४० पा वि), दे2 ab ○ –a) का1 दे5 द1 शुद्धे, दे1 शुभे (→शुभ्रे) –b) व1 शिखाद्यै, दे4 शावाद्यैं (→शङ्खाद्यैः) –c) दे5 आत्माजै°, द1 गाशाद्यै° (→आत्मजै°), ते1 आश्विनायोगचिते मुख्यं –d) व2 सुसवृत, द1 च सवृत (→च संवृत), दे4 शस्त्रैरस्त्रैश्च सवृत

४२ प्र1 2 म1 ab ○ (द्र ४० पा वि) –b) वे3 महाच्युत (→सहाच्युत), न1 जाम्बवत्या महेश्वर, ते1 स्तुपविश्य महाद्युति –c) दे1 म1 भ्राजितो (→भ्राजते), दे8 10 गुवँ मुए मुव चोमया, म1 हनुमया (→मालया), दे10 देवी, म1 देव्ये, प्र2 देव (→देवो), दे2 वरासने महायोगी दे4 भ्राजमानो यथा देवो –d) दे2 भाति (→यथा), दे9 यथा शिव, दे5 समन्वत, ते1 सम शिव (→समन्वित)

४३ –b) प्र1 म1 विष्णुर्देवादि°, प्र2 सिद्धाश्च विष्णु° (→द्रष्टुं लोकादि°) –c) दे10 सत्र जाता, ते1 पूर्वभूता, प्र1 पूर्वजाता (या) (→पूर्वजाता), प्र2 ऋषय पूजयामासु, म1 महर्षि पूजयामास –d) व2 मार्कण्डेयो महामुनि, दे1 मार्कण्डेयाद्विजानय, दे8 9 मार्कण्डेयाद्या द्विजर्षभ, दे10 मार्कण्डेया द्विजर्षभ, म1 मार्कण्डेयो द्विजोत्तमा

४४ म1 a ○, दे1 ४४b ४५ d ○ –a) का1 व1 3 दे3-8 प्र1 2 म1 विष्णुर् (→कृष्णो) –b) दे5 ते1 मार्कण्डेय- (→मार्कण्डेयं), दे4 द1 प्र1 7 म1 सनातन, न1 महामुनि, + समागत (→समागतम्) –c) दे2 प्र2 सहसा (→शिरसा) –d) व2 दे1 मासन (→स्वासनं), का1 व1 3 दे1 4 8 द1 प्र1 2 म1 प्रददौ (→च ददौ), का2 व1 3 दे3-8 द1 प्र1 2 म1 पुन (→हरि)

४५ दे2 ○ (द्र ४४ पा वि) –a) का1 व1-3 दे1 4 8 द1 प्र2 म1 सम्पूज्यर्षिगणान् सर्वान् दे2 सम्पूज्य सर्वानृषिगणान् न1 ते1 प्र1 सपूज्य ऋषिगणान् सर्वान् –b) दे8 10 गुवँ मुए मुव सहानुग, प्र1 2 म1 महाविभु (→महाभुज) –c) म1 तदा (→हरिर्) –d) का1 तास्ता तदभि°, दे5 दत्त्वाशितदभि° (→दत्त्वा तदभि°), व2 न1 ते1 म1 °वाञ्छित (→°वाञ्छितान्)

४६ –a) दे2 ततो, द1 तथा (→तदा) –b) व1 न1 देवदेव दे8-10 देवदेव (→देवदेव), दे4 द1 प्र1 2 म1 देवदेवो हरि[ ]स्वयम् –c) दे8 9 न1 गुवँ मुए मुव स्नात (→स्नात्वा), दे3 6 शुक्लाम्बर सूर्यं, प्र2 शुक्लाम्बरधर (→शुक्लाम्बरो भानु), दे2 त1 शुक्लाम्बरधरो भानु –d) का1 दे3 म1 उपातिष्ठन्, दे1 उपतिष्ठत्, दे2 8 10 मुव मुए मुथ उपतिष्ठन्, दे4 5 द1 प्र1 2 उपातिष्ठत् (→उपातिष्ठत्), म1 कृताञ्जलि (→कृताञ्जलि)

४७ –a) का1 व2 दे3 न1 ते1 प्र1 2 म1 जप्य, द1 तप्य (→जाप्य) –b) का1 दे6 10 प्र1 2 म1 प्रेक्षमाणा, वे2 4 वीक्ष्य(दे2 °क्ष)माणो (→प्रेक्षमाणो) –c) प्र1 2 देवेश (→देवेशो) –d) दे1 देवान् भूतगणान् पितॄन्, दे8 देवान् मुनिगणांश्च तान्, दे8 10 गुवँ मुए मुव देवान् पितृगणान्मुनीन्, ते1 देवानृषिगणान् पितॄन्

४८ –a) प्र2 चैव (→देव) –b) द1 साक्षाद्देव महेश्वरम् –c) दे4 भूतेश, द1 लिंग त, प्र1 लिङ्गस्थ, प्र2 म1 तल्लिंग (→लिङ्गस्थं) –d) दे4 लिङ्गस्थ (→भूतेशं), दे2 भूतिलक्षणम्, प्र2 भक्तिभूषणम् (→भूतिभूषणम्), दे9 °भूषित,+ °भूषण (→°भूषण)

समाप्य नियमं सर्वं नियन्ताऽसौ नृणां स्वयम् ।
भोजयित्वा मुनिवरं ब्राह्मणानभिपूज्य च ॥४९
कृत्वात्मयोगं विप्रेन्द्रा मार्कण्डेयेन चाच्युतः ।
कथाः पौराणिकीः पुण्याश्चक्रे पुत्रादिभिर्वृतः ॥५०
अथैतत् सर्वमखिलं दृष्ट्वा कर्म महामुनिः ।
मार्कण्डेयो हसन् कृष्णं बभाषे मधुरं वचः ॥५१

मार्कण्डेय उवाच ॥

कः समाराध्यते देवो भवता कर्मभिः शुभैः ।
ब्रूहि त्वं कर्मभिः पूज्यो योगिना ध्येय एव च ॥५२
त्वं हि तत् परमं ब्रह्म निर्वाणममलं पदम् ।
भारावतरणार्थाय जातो वृष्णिकुले प्रभुः ॥५३
तमब्रवीन्महाबाहुः कृष्णो ब्रह्मविदां वरः ।
शृण्वतामेव पुत्राणां सर्वेषां प्रहसन्निव ॥५४

श्रीभगवानुवाच ॥

भवता कथितं सर्वं तथ्यमेव न संशयः ।
तथापि देवमीशानं पूजयामि सनातनम् ॥५५
न मे विप्रास्ति कर्तव्यं नानवाप्तं कथंचन ।
पूजयामि तथापीशं जानन्नेतत् परं शिवम् ॥५६
न वै पश्यन्ति तं देवं मायया मोहिता जनाः ।
ततोऽहं स्वात्मनो मूलं ज्ञापयन् पूजयामि तम् ॥५७
न च लिङ्गार्चनात् पुण्यं लोकेस्मिन् भीतिनाशनम् ।
तथा लिङ्गे हितायैषां लोकानां पूजयेच्छिवम् ॥५८ बं. १.२६.४८

४९ –a) दे₁ मम्बाप्य (→समाप्य); दे₄ नियत, न₁ नियमात् (→नियम) –b) दे₈-₁₀ मुवें. मुए मुब नियन्ता स स्वयं नृणाम्, दे₁ नियतैर्मितिकाध्ययम् –d) य₂ ब्रह्माणमभि°, दे₁ ब्राह्मणानभि°, प्र₂ ब्राह्मणानवि° (→ब्राह्मणानभि°)

५० –a) का₁ ब₁ दे₅ कृत्वानुयोग ब₃ कृत्वा योगन्तु, दे₃ ₆ कृत्वा तु योग, न₁ कृत्वा तु याग, ते₁ कृत्वात्मयोग्य (→कृत्वात्मयोग) –b) वीच्युत (→चाच्युत) –ab) प्र₂ कृत्वात्मयोग मार्कण्डे(यो)येन मार्गेण चाच्युत –c) दे₁ ₂ ₆ ₈-₁₀ न₁ ते₁ मुवें मुए मुब कथां पौराणिकीं पुण्यां (न₁ दिव्यां), द₁ तत पौराणिक पुण्या, प₁ म₁ कथा पौराणि-(प्र₁ °का)का (प₁ °की) पुण्या. –d) दे₂ ते₁ पौरा°, दे₅ पुत्वा° (→पुत्रा°)

५१ –a) म₃ दे₃ ₆ तथैतद्, प₁ म₁ स थैतद्, प्र₂ म थैतद्, मुब. अथ तद् (→अथैतत्). –b) न₁ कृत्वा (→दृष्ट्वा)

॥ दे₃ ₈ ₉ मार्कंडेय उ, न₁ ते₁ प₁ ₂ ग₁ मार्कण्डेय, द₁ श्रीमार्कण्डेय..

५२ –c) दे₄ जगत (→कर्मभि) –d) दे₄ योगिनो (→योगिना)

५३. –a) ते₁ न (→तत्), दे₁₀ परं, प₂ ब्रह्मा (→ब्रह्म). –b) म₁ मखिल (→ममलं), प₁ म₁ परं, प₂ शिवं (→पदम्). –c) का₁ दे₁ ₂ ₁₀ भारावतार°, प₁ भारावतारा° (→भारावतर°) –d) दे₈ वृष्णिकुले (→वृष्णिकुले), का₁ ब₁-₃ दे₃-₆ द₁ प₁ ₂ म₁ हरि (→प्रभु).

५४. –a) का₁ ब₁-₃ दे₂-₆ द₁ प्र₁ ₂ म₁ महातेजा. (द₁ प्र₂ °जा) (→महाबाहु) –b) न₁ म₁ वर (→वर)

॥ का₁ ब₁ दे₂ ₄ ₅ कृष्ण उवाच, दे₁ श्रीकृष्णउ, ब₂ ₃ दे₆ द₁ श्रीकृष्ण उवाच, न₁ ते₁ श्रीभगवान्, प₁ म₁ श्रीकृष्ण; प्र₂ कृष्ण

५५ –b) म₁ द₁ कथ्यमेव, दे₁ ₂ तथामेव, ते₁ कथा मेव (→तथ्यमेव)

५६ –a) दे₃ नर्यविप्रास्ति-, दे₆ नामविप्रास्ति- (→न मे विप्रास्ति), ते₁ तथैव विप्रश्रमर्यं –b) ते₁ नामवाप्तं (→नानवाप्तं), ब₃ दे₁₀ कथचन, दे₃ ₆ यदाचन (→कथंचन) –c) दे₆ ₁₀ तथापीश, द₁ तदेशानं, प्र₂ यथापीश –d) ब₁ ₃ दे₄ ₆ न₁ ज्ञानन्दं परम, दे₃ जानन्नेतत् परं, द₁ प्र₁ ₂ म₁ जानन्नपि पर (→जानन्नेतत् परं)

५७ –a) ते₁ न ते, द₁ नैव (→न वै), द₁ पश्यति (→पश्यन्ति), ब₃ तद्, मुवें मुए ते (→तं), म₁ देव (→देवं), –b) दे₈ मायया (→मायया), दे₄ द₁ प₁ म₁ मोहिता मायया जना, प्र₂ तन्मायया मोहितो जन –c) दे₃-₁₀ मुवें मुए मुब तत्स्वेषां°, ते₁ तेनाहं स्वा° (→ततोऽहं स्वा°). –d) न₁ ज्ञाया- (→ज्ञापयन्), द₁ पठ्यामि (→पूजयामि), दे₂ तद्, दे₄ ते (→तम)

५८ ब₁ cd ⊙ –a) दे₄ नतु (→न च), प्र₂ पुण्यां (→पुण्यं) –b) ब₁ दे₄ लोकेस्मिन् भीत°, दे₈-₁₀ मुवें. मुए मुब लोके दुर्गति° (→लोकेस्मिन् भीति°); ते₁ लोकेदस्मिन्निनिवारणम् –c) का₁ दे₃ लिङ्गलिङ्गे (दे₃ °र्गे), द₁ तथा लिग (→तथा लि]

वे.१.२६.५६ योऽहं तल्लिङ्गमित्याहुर्वेदवादविदो जनाः ।
ततोऽहमात्मनीशानं पूजयाम्यात्मनैव तु ॥५९

तस्यैव परमा मूर्तिस्तन्मयोऽहं न संशयः ।
नावयोर्विद्यते भेदो वेदेष्वेवं विनिश्चयः ॥६०

एष देवो महादेवः सदा संसारभीरुभिः ।
ध्येयः पूज्यश्च वन्द्यश्च ज्ञेयो लिङ्गे महेश्वरः ॥६१

मार्कण्डेय उवाच ।※

किं तल्लिङ्गं सुरश्रेष्ठ लिङ्गे संपूज्यते च कः ।
ब्रूहि कृष्ण विशालाक्ष गहनं ह्येतदुत्तमम् ॥६२

श्रीभगवानुवाच ।※

अव्यक्तं लिङ्गमित्याहुरानन्दं ज्योतिरक्षरम् ।
वेदा महेश्वरं देवमाहुर्लिङ्गिनमव्ययम् ॥६३

पुरा चैकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
प्रबोधार्थं ब्रह्मणो मे प्रादुर्भूतः स्वयं शिवः ॥६४

तस्मात् कालात् समारभ्य ब्रह्मा चाहं सदैव हि ।
पूजयावो महादेवं लोकानां हितकाम्यया ॥६५

मार्कण्डेय उवाच ।※

कथं लिङ्गमभूत् पूर्वमैश्वरं परमं पदम् ।
प्रबोधार्थं स्वयं कृष्ण वक्तुमर्हसि साम्प्रतम् ॥६६

---

लिङ्गे), दे10 हितावैषा, द1 कृत येषा, प्र1 हितार्थेषा (→हितार्थेषां). –d) दे3-6 प्रजयेत् (→पूजयेत्), ते1 पूजयामि सदाशिवम्

५९ –a) व1 यो हृन्तु, दे1 न1 योऽहं त, दे6 9 यो हि तत्, दे10 यो हिव्र, ते1 ये हि तत्, द1 योग त, प्र1 यो हृन्त, प्र2 म1 यो हृन्त (→योऽहं तल्), दे5 नत्रलिंगार्चनास्तुष्य –b) दे1 वेदवेद° (→वेदवाद°) –c) दे1 तांस्मसात्मानमीशानं, दे2 तत आत्मानमीशान, दे5 ततोऽहमात्मना एन, दे10 ततो हि मात्ममीशान (?), प्र1 ते1 ततोऽहमात्मनं (ते1 °मी)शान, प्र2 म1 ततोऽहं देवमीशान. –d) व2 हि, दे8 10 मुवे मुए तत् (→तु); दे1 2 ते1 पूजयाम्यात्मदैवतम् म1 पूजयस्यात्मनैव तु

६० दे4 द1 प्र1 2 म1 ab ◯ (द स) –a) दे4 व1 प्र1 2 म1 तस्याहं (→तस्यैव), दे2 च पर° (→परमा°) –b) दे4 तवयोह न, न1 तन्मयोह न, म1 तन्मयी भन- (→तन्मयोऽहं न) –c) दे3 भेदे, न1 भेदी (→भेदो) –d) व1 देवेष्वेद, दे8 9 मुवे मुए मुव वेदेष्वेत, दे10 देवेष्वेतं, न1 ते1 वेदेष्वेतद् (→वेदेष्वेव), दे1 विनिश्चम, दे2 विनिश्चि ताम्, दे8-10 मुवे मुए न संशय, न1 ते1 विनिश्चितम् (→विनिश्चय)

६१ –b) का1 तदा (→सदा) –c) दे8 9 मुवे मुए गज्ञ, दे10 योज्ञ (→ध्येय), ते1 ध्येयश्च पूज्य सेव्यश्च –d) दे1 द1 ज्ञेयो लिंगो, ते1 स्तुत्यो लिङ्गे (→ज्ञेयो लिङ्गे)

※ दे3 8 मार्कण्डेय उ, दे9 मार्कण्डे उ, न1 ते1 द1 प्र1 2 म1 मार्कण्डेय

६२ –a) न1 किं त, ते1 किं च (→किं तद्) –b) द1 प्र1 2 म1 ब (→ब्रू) –c) दे9 विशालाक्ष, प्र1 विरूपाक्ष (→विशालाक्ष) –d) दे1 गहने, ते1 वह(च)ने (गहनं), दे2 स्वेतदुत्तमम्, व1 प्र1 2 म1 ह्येतदद्भुतं (→ह्येतदुत्तमम्)

※ का1 व1 3 दे8 श्रीकृष्ण उवाच, व1 दे3-5 कृष्ण उवाच, न1 भगवान्, ते1 श्रीभगवान्, द1 प्र1 2 म1 श्रीकृष्ण

६३ –a) दे1 द1 प्र2 म1 अव्यक्त-, दे4 अव्यक्ता (→अव्यक्त) –b) दे1 अव्यक्त, दे4 द1 प्र1 2 म1 आनन्दो (→आनन्द); दे1 उत्तम, दे2 द1 प्र1 2 म1 अव्यय (दे3 °य) दे5 अक्षरा, दे8-10 मुवे मुए मक्षयम् (→अक्षर) –c) दे1 वेदे, दे10 वेदो (→वेदा), दे10 न1 माहेश्वर (→महेश्वर), प्र2 ••, म1 देव, + लिंग (→देवं) –d) दे6 माहुर्लिगाभ°, दे10 तमाहुर्लिग° (→माहुर्लिङ्गिन°).

६४ –a) दे9 पुरे (→पुरा) –c) दे1 ब्रह्मणे, दे3 ब्राह्मणो (→ब्रह्मणो), दे2 बोधार्थं ब्रह्मणो वै –d) दे1 3 5 6 °भूत (→°भूत), का1 भयवक, दे3 स्वय शिव, दे5 स्वय शिवा, दे8 10 महाशिव, प्र2 शिवस्वय, मुवे, मुए मुव महाशिव (→स्वयं शिव)

६५ –a) दे3 कामात्, दे6 कामान्, न1 काला (→कालात्), का1 समारभ्य, दे5 प्रमारभ्य (→समारभ्य) –b) का1 चाहं (→चाहं) –c) का1 दे1 2 द1 प्र2 पूजयामो, दे10 पूजया वै (→पूजयावो)

※ द1 प्र1 ◯, दे1 मार्कंडे उवाच, दे3 मार्कण्डेय उ, दे8 9 श्रीमार्कण्डेय उ, दे10 श्रीमार्कण्डेय उवाच, न1 ते1 प्र2 म1 मार्कण्डेय

६६ –a) प्र2 किन्वं (→कथं), प्र2 म1 लिंग मद्भुत (→लिङ्गमभूद्) –c) दे3 बोधनार्थं (→प्रबोधार्थं), प्र2 च स्व (→स्वयं), का1 दे6 कृष्ण (→कृष्ण)

श्रीभगवानुवाच ।❀

आसीदेकार्णवं घोरमविभागं तमोमयम् ।
मध्ये चैकार्णवे तस्मिन् शङ्खचक्रगदाधरः ॥६७

सहस्रशीर्षा भूत्वाऽहं सहस्राक्षः सहस्रपात् ।
सहस्रबाहुर्युक्तात्मा शयितोऽहं सनातनः ॥६८

एतस्मिन्नन्तरे दूरात् पश्यामि ह्यमितप्रभम् ।
कोटिसूर्यप्रतीकाशं भ्राजमानं श्रियावृतम् ॥६९

चतुर्वक्त्रं महायोगं पुरुषं काञ्चनप्रभम् ।
कृष्णाजिनधरं देवमृग्यजुःसामभिः स्तुतम् ॥७०

निमेषमात्रेण स मां प्राप्तो योगविदां वरः ।
व्याजहार स्वयं ब्रह्मा स्मयमानो महाद्युतिः ॥७१

कस्त्वं कुतो वा किं चेह तिष्ठसे वद मे प्रभो ।
अहं कर्त्ता हि लोकानां स्वयंभूः प्रपितामहः ॥७२

एवमुक्तस्तदा तेन ब्रह्मणाऽहमुवाच ह ।
अहं कर्त्ताऽस्मि लोकानां संहर्ता च पुनः पुनः ॥७३

एवं विवादे वितते मायया परमेष्ठिनः ।
प्रबोधार्थं परं लिङ्गं प्रादुर्भूतं शिवात्मकम् ॥७४

कालानलसमप्रख्यं ज्वालामालासमाकुलम् ।
क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् ॥७५ – वे १ २६ ७२

---

❀ का1 व2 दे4 6 श्रीकृष्ण उवाच, व1 दे3 5 कृष्ण उवाच, दे6 9 भगवानुवाच, न1 भगवान्, ते1 श्रीभगवान्, द1 प्र2 म1 श्रीकृष्ण, भ1 कृष्ण .

६७ –a) दे1 9 10 एकार्णवे (→एकार्णव), दे1 घोरे (→घोर) –b) व1 प्रविभाग, दे5 भुवि भाग (→प्रविभाग) –c) व1 चैवार्णवे (→चैकार्णवे), ते1 प्र2 तस्मात् (→तस्मिन्) –d) ते1 शङ्खभूव (→शङ्खचक्र-)

६८ –a) दे10 °शीर्षो (→°शीर्षा), व2 भूत्वा स, व3 दे3 4 6 भूत्वा च, दे1 भूत्वा तु, दे2 सभूता, ते1 पुरुष (→भूत्वाऽहं), द1 प्र1 2 म1 सहस्रशिरसो (द1 म1 °सा) भूत्वा –c) का1 व1-3 दे3 6 युक्तात्मा, दे8 10 न1 मुवे मुए मुव पुरुष, द1 प्र1 2 म1 विश्वात्मा (→युक्तात्मा), ते1 सहस्रबाहु-भुजः. –d) दे1 शयतोऽहं दे4 सपितोऽहं, दे10 शसितोऽहं, ते1 सहस्राक्ष, प्र1 मधीतोऽहं (→शयितोऽहं); प्र1 न1 सनातन (→सनातन)

६९ –a) दे4 घोरात् दे8-10 मुवे मुए मुव दूरे, द1 प्र1 2 म1 घारात् (→दूरात्) –b) व2 स्वमितप्रभ, दे4 ह्यामितप्रभम्, न1 ह्यमलप्रभा, द1 प्र1 म1 ह्यमितोभम, मुवे मुए मुव स्वामितप्रभ (→ह्यमितप्रभम्), दे1 पश्याम्यहममित-प्रभम्, दे2 पश्यन्मामामितप्रभ, दे8-10 पश्यामीत्यमितप्रभम्, ते1 पश्याम्यहमसितप्रभम, प्र2 पश्यरम्यहमितोजस –c) का1 व1-3 दे3-6 द1 प्र1 2 म1 सूर्यकोटि- (→कोटिसूर्य-), द1 -प्रतीकाशम् (→-प्रतीकाश) –d) व2 श्रियायुत, दे4 श्रियान्वितं (→श्रियावृतम्)

७० –a) ते1 चतुर्भुज (→चतुर्वक्त्र), दे1 2 द1 महाघोरं, प्र1 2 महाघोर, म1 महाघोष (→महायोग) –b) दे8-10 मुवे. मुए मुव कारण प्रभुम्, न1 कनकप्रभु, ते1 चानलप्रभम (→काञ्चनप्रभ) –c) दे3 6 °दर (→°धर) –d) व2 °सामभिर्युत, दे1 °सामभिष्टुत, दे3 °सोमभिस्तुत, ते1 °सामविश्रुत, प्र2 °सामसेवित (→°सामभि स्तुतम्)

७१ –a) व2 3 दे3 6 तु मा, म1 च मा (→स मा), का1 निमेषमात्रान्मा प्राप्तो, व1 निमेषमात्रेण तु मा, दे5 निमेषमात्रे मा प्राप्तो, दे10 निमेषमात्रे स प्राप्तो –b) का1 दे5 योगी, दे10 योगो (→प्राप्तो) –d) दे6 स्मयमाणो, प्र2 स्वागमानो (→स्मयमानो), द1 महामुनि (→महाद्युति)

७२ न1 ७२c-७३b ○ (द स), दे10 ७२d-७३c ○ (द स) –a) दे8 10 कस्य ते1 कस्मात् (→कस्त्व), व2 द1 प्र1-3 म1 किं वेह, दे10 किं त्वेह (→किञ्चेह), न1 कस्त्वं कुतो भवानत्र –b) व2 तिष्ठत्येकार्णवे प्रभो, दे1 स्वयमेव वद प्रभो, दे2 वत्सेह वद प्रभो, प्र2 किं तिष्ठसि वद प्रभो –c) व3 कर्त्तास्मि, दे1 कर्त्तास्मि, दे10 हि कर्त्ता (→कर्त्ता हि)

७३ –a) न1 ab ○ (द ७२ पा वि), दे10 abc ○ (द ७२ पा वि) –a) दे8 उक्तास् (→उक्तस्); द1 तथा प्र1 उक्तम् (→तदा) –b) का1 व1 3 दे1 6 ते1 द1 प्र1 3 म1 स (→ह), दे3 6 ब्रह्मणा चाहमवा च तम् दे4 ब्रह्मणा त्वमुवाच तम्, प्र2 ब्रह्मणा समुवाच त –c) व2 द1 प्र1 म1 कर्त्ता हि, दे1 कर्त्ता स्मि- (→कर्त्ताऽस्मि) –d) दे4 द1 प्र1 2 म1 स्थितिकृत्सुत (→च पुनः पुनः)

७४ –b) दे4 स्वमायाय (→मायया) –c) व2 प्रादुर्भूत (→प्रबोधार्थं) –d) व2 प्रबोधार्थं, दे6 प्रादुर्भूता (→प्रादुर्भूत)

७५ द1 cd ○ –a) का1 व1 3 दे2 6 ते1 प्र3 °मन° (→°सम°) –b) द1 °समावृत (→°समाकुल) –c) व1 °वृद्धि°, दे1 °मध्य° (→°वृद्धि°), व2 क्षयश्च प्रविनिर्मुक्त

वे.१.२६.७४ ततो मामाह भगवानधो गच्छ त्वमाशु वै ।
अन्तमस्य विजानीम ऊर्ध्वं गच्छेऽहमित्यजः ॥७६
तदाशु समयं कृत्वा गतावूर्ध्वमधश्च द्वौ ।
पितामहोऽप्यहं नान्तं ज्ञातवन्तौ समाः शतम् ॥७७
ततो विस्मयमापन्नौ भीतौ देवस्य शूलिनः ।
मायया मोहितौ तस्य ध्यायन्तौ विश्वमीश्वरम् ॥७८
प्रोच्चरन्तौ महानादमोङ्कारं परमं पदम् ।
प्रह्वाञ्जलिपुटोपेतौ शंभुं तुष्टुवतुः परम् ॥७९

ब्रह्मविष्णू ऊचतुः ।☸
अनादिमलसंसाररोगवैद्याय शंभवे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८०
प्रलयार्णवसंस्थाय प्रलयोद्भूतिहेतवे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८१
ज्वालामालावृताङ्गाय ज्वलनस्तम्भरूपिणे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८२
आदिमध्यान्तहीनाय स्वभावामलदीप्तये ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥८३

---

७६ –a) दे10 ममोह, ग्र1 ममाह् (→मामाह) –b) दे3 गच्छे (→गच्छ), व1 त्वमाशुभं, दे10 त्वमाशुर्वे, प2 ** शुवं (→त्वमाशु वै) –c) दे4 मन्तमध्य, दे8 ग्रायमस्य, म1 ग्रप मेस्या (→प्रन्तमस्य), मा1 व2 दे1 2 5 ते1 प्र2 विजानीया (दे1 यो), व1 विजानीहि, दे3 6 द1 प्र2 मुए मुव विजानीव, म1 विजानीथा, मुवे विजानीष्व (→विजानीम) –d) का1 प1 दे5 मुप गच्छेम इत्यज, व1 गच्छेत्वमित्यज, दे2 गच्छेद् मूत्यज, दे3 6 द1 गच्छेयमित्यज (दे6 °ज), दे8 गच्छेद्द नित्यज, म1 गच्छेत्यज प्रभ् (→गच्छेऽहमित्यज)

ग्रन पर दे4 पुस्तके प्रधिकम्- सूत उवाच

७७ –a) मा1 द1 प1 2 म1 तदा सुमयम, दे4 यथा सुगमय, दे10 तदाशु समम, ते1 तदा तु समय (→तदाशु समय) –b) दे1 गत्वा तुष्व°, दे4 गतानूर्ध्व°, दे10 गताकुर्द्ध°(?) (→गतावूर्ध्वं°), मा1 प1-3 दे1 6 8 10 न1 प1 मुवे मुए मुव तौ (→द्वौ), ते1 गदा ह्यूर्ध्वमधस्तु तौ, द1 गता ऊर्ध्वंगतस्ततौ, ग1 गतावूर्ध्वंदशौ च तौ –c) ते1 °महोऽ्हह (→°महोऽप्यहं), दे4 प्र2 वान (→नान्त), दे3 पितामहोप्यहन्ता त, दे8 पितामहोऽप्यमहन्तं –d) दे1 समस्य वै, दे8-10 समास्य तां, मुवे मुए मुव गतस्य तौ (→समा शत)

७८ –b) दे1 भीनो, प्र2 भोनौ (→भीतौ). –d) प2 ध्यायरो (→ध्यायन्तौ), प2 विश्वमीश्वरौ, दे4 विधिमीश्वरम्, ते1 देवमीश्वरम् (→विश्वमीश्वरम्)

७९ –b) मा1 प्रोत्तरन्तौ, व2 मुव प्रोचरन्तौ, दे2 प्रावपुरन्तौ, दे3 6 प्रोंचुरन्तौ, दे8 द1 प्रोच्चरन्ता, दे5 प्रोच्च-यन्तौ, म1 प्रोचुरन्त (→प्रोच्चरन्तौ), दे2 महानन्द, प2 महा-नादो (→महानाद) –b) प2 प्रभवं (→परमं) –c) मा1 व2 दे5 8 बद्धा(दे6 °द्धा)ञ्जलिपुटौ (मा1 दे5 °टो) देवौ, प1 2 दे3 4 द1 प्रह्वाञ्जलिपुटौ गेत्तौ, दे1 2 बद्धाञ्जलिपुटौ भूत्वा, दे8-10 मुवे मुए मुव त प्राञ्जलिपुटौ भूत्वा, न1 प्रह्वाञ्जलि पुटौ भूत्वा, ते1 कृताञ्जलिपुटौ भूत्वा –d) दे1 प्र1 शम्भुं तुष्टावतु, दे4 शम्भु तुष्टवतुः, दे5 शम्भु तुष्टुवतु, दे6 शम्भु-स्तुष्टुवतु, द1 शम्भु तुष्टुवत, प्र2 शम्भु स्तुष्टावतु (→शम्भु तुष्टुवतु), दे1 पुन, न1 पर (→परम)

☸ मा1 दे2 5 ⊙, मा1 ब्रह्मविष्णावूचतु, + ब्रह्मविष्णु ऊचुः, दे1 ब्रह्माविष्णु उचतु ; दे4 द1 ब्रह्माविष्णु, दे6 ब्रह्म-विष्णुवूचतु, दे10 ब्रह्मविष्णु उवाच, न1 ब्रह्मा ऊचु, ते1 प1 म1 ब्रह्मविष्णू, प्र2 ब्रह्माविष्णु

८०. –a) प2 3 ग्रनादिमध्य°, दे5 ग्रनादिमय°, दे8-10 ग्रनादमल°, न1 मुवे मुए मुव ग्रनादिमूल° (→ग्रनादिमल°)

८१. दे1 8-10 द1 प्र2 म1 ○ –a] प1 प्रलयाम्बुधि° (→प्रलयार्णव°) –b) मा1 प्रलयोद्भूति°, दे2 प्रलयोद्भूति°, दे4 प्रलयोद्भूत°, न1 प1 प्रलयोत्पत्ति°, ते1 प्रलयाम्बुधि° (→प्रलयोद्भूति°)

८१ ग्रनन्तरं व1 अधिकम्—
• महादेवाय महते ज्योतिषे लिङ्गमूर्तये । (=८४ab)

८२ दे8 10 द1 प्र2 म1 ○, दे3 6 cd○. –a) मुवे मुए ग्रीराय (→वृताङ्गाय) –b) दे4 ज्वलनप्रद°, प्र1 ज्वलितस्तम्भ° (→ज्वलनस्तम्भ°), म1 °मूर्तये (→°रूपिणे). –d) व1 लिङ्ग° (→लिङ्ग°), प1 ***** मूर्तये

८३ म1 दे3 6 8-10 द1 प्र2 प1 ○ –a) न1 °हृत्ताय (→°हीनाय) –b) दे3 स्वभावा° (→स्वभावा°), दे1 2 °मूर्तये (→°दीप्तये), ते1 तत्त्वाभावाय मलाय च, प1 स्वभावममूर्तये –c) प2 दे1 2 4 5 ते1 नम शिवाय शान्ताय –d) दे1 ब्रह्मणेऽनन्त° (→ब्रह्मणे लिङ्ग°).

महादेवाय महते ज्योतिषेऽनन्ततेजसे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ॥८४
प्रधानपुरुषेशाय व्योमरूपाय वेधसे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ॥८५
निर्विकाराय सत्याय नित्यायामलतेजसे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ॥८६
वेदान्तसाररूपाय कालरूपाय धीमते ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ॥८७
एवं संस्तूयमानस्तु व्यक्तो भूत्वा महेश्वरः ।
भाति देवो महायोगी सूर्यकोटिसमप्रभः ॥८८
वक्त्रकोटिसहस्रेण ग्रसमान इवाम्बरम् ।
सहस्रहस्तचरणः सूर्यसोमाग्निलोचनः ॥८९
पिनाकपाणिर्भगवान् कृत्तिवासास्त्रिशूलभृत् ।
व्यालयज्ञोपवीतश्च मेघदुन्दुभिनिःस्वनः ॥९०
अथोवाच महादेवः प्रीतोऽहं सुरसत्तमौ ।
पश्येतं मां महादेवं भयं सर्वं प्रमुच्यताम् ॥९१
युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ ।
अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः ।
वामपार्श्वे च मे विष्णुः पालको हृदये हरः ॥९२
प्रीतोऽहं युवयोः सम्यक् वरं दद्मि यथेप्सितम् ।
एवमुक्त्वाऽथ मां देवो महादेवः स्वयं शिवः ।
आलिङ्ग्य देवं ब्रह्माणं प्रसादाभिमुखोऽभवत् ॥९३ वे.१.३५.११

८४. ब१ दे१,३,७,८,१० द१ प२ म१ मुवे. मुए. ⊙; दे५ प१. cd ⊙. –d) दे२ ज्योतिषे लिंगमूर्तये.

८५. दे१,४,१० द१ म१. ⊙; दे३ ab ⊙; क१ d ⊙ –b) प१ तेजसे (→वेधसे) –c) क१ मम शिवाय••• धम पर्व दे५. ८२a–८४b मायुतम्.

८६. दे१ द१ ⊙; क१ मुवे. मुए cd ⊙ –a) प२ निष्करणाय (→निर्विकाराय); म१ दे२,४ सत्याय, व२ प१,२ प१ नित्याय (→सत्याय) –b) व२ मुद्रायामल°, दे४ व२ प१ सत्याय मल°, दे८-१० मुवे मुए मुव नित्यायानुल°, प१ सत्यायामित° (→नित्यायामल°)

८७ क१ cd ⊙ –a) ब१ °सारय, व३ °सादाय, दे२ दे३ °भूताय, दे३,६ °सारार, दे५ °साराय (→°रूपाय) –b) दे१ मे नम, मुवे वे नमः (→धीमते) –ab) क१ नमो वेदान्तसाराय कालरूपाय धीमते –d) दे१,८ ब्रह्मोऽनन्त° (→ब्रह्मणे लिङ्ग°).

८८ प१ ८८c–[९३]b ⊙ प्रथमतः एष्टि[?] तले ··· [illegible] –a) प२ वा रूप° (→सं. स्तूय°). दे२,८ °मानास्तु (→°मानस्तु) –b) दे२ व्यो, प२ [illegible] (→व्यक्तो), दे२ भूत्वा, दे८ हृत्वा (→भूत्वा) –c) प२ दे२ मे महि° (→भाति), दे२ महादेव (→महायोगी) –d) मे सौर्यकोटि° (→सूर्यकोटि°)

८९. क१ ⊙ (द्र ८८ पा टि) –a) क१ दे१,४ वक्त्र°, दे२,८ चक्र° (→वक्त्र°) –c) दे४-८ °हस्त मुख (→°हस्तचरण) –d) व२ दे२,४ दे२ प१,२ म१ सोमसूर्याग्नि° (→सूर्यसोमाग्नि°).

९०. म१ ⊙ (द्र. ८८ पा. टि). –b) क१ दे१,८ कृत्तिवासा, दे१,४,५ कृत्तिवास (→कृत्तिवासाः); क१ व१ दे३,५,८,९-१० मुवे. मुए. मुव त्रिशूलधृक्, व२ दे४ द१ प१,२ त्रिशाख्धृक्, म१ त्रिशोलभृत् (→त्रिशूलभृत्). –c) दे३ प२ °वीती च, म१ °वीतिश्च (→°वीतश्च)

९१ म१ ⊙ (द्र ८८ पा टि) –b) व२ प१ प्रीतो वां (→प्रीतोऽहं) –c) क१ पश्यत मां, व२ दे३,५ मुव पश्य मे मां, दे१,४ व२ पश्यतां मां (दे४ मां), दे२ पश्येन मां, दे४ पश्यतं मां, दे७ पश्येत मां, म१ पश्यवेतं, दे१ पश्येतां म, द१ पश्यत म(मां) (→पश्येतं मां); क१ प१,२ दे३-८ प१,२ म१ महायोगं, दे१ महादेवो (→महादेवं), द१ पश्यतं माधवं योग. –d) दे१ विमुच्यताम्, दे५ प्रमुच्य त, दे१ प्रमुच्यते, द१ प१,२ म१ विमुच्यताम् (→प्रमुच्यताम्).

९२ म१ ⊙ (द्र ८८ पा टि) –a) दे३,१० प्रसूतौ (→प्रसूतौ), दे५ न विस्तो दे४ गात्रजौ, दे७ गोत्रेभ्यो, द१ प१,२ मात्रजौ (→गात्रेभ्यो), म१ युवां प्रतिगात्र –b) दे४ सनातन, द१ सनातनं (→सनातनौ) –c) दे१ मयदक्षिणे, दे१ वा मे, प२ मम मए (→मम मे) –d) दे२ ब्रह्म, दे१ ब्रह्मन् (→ब्रह्मा), क१ व२,३ दे२-८ माधव मनु, म१ दे१ महपितामह, द१ व२ म१ लोकेश्वर पा, द१ न देवर. पर (→लोकपितामह) –e) प१ प२ वाम (→वाम°); क१ व२ दे१,३ पंर, प१ दे१,४ पंर, द१ प१,३ म१ च मे (→च मे). –f) दे१ प१ म१ हरि, व२ हर (→हरः).

९३ म१ ⊙ (द्र ८८ पा टि) –a) म१ प्रीतोऽस्मि (→प्रीतोऽहं); दे२ ब्रवतोः (→युवयोः) –b) क१ ददा, द१ ददाम् (→ददमि) –c) क१ दे१ द१ एवमुक्त्वा, दे१० एवमुक्तो

बं.१.२५.९३ ततः प्रहृष्टमनसौ प्रणिपत्य महेश्वरम् ।
ऊचतुः प्रेक्ष्य तद्वक्त्रं नारायणपितामहौ ॥९४
यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ।
भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वरे ॥९५
ततः स भगवानीशः प्रहसन् परमेश्वरः ।
उवाच मां महादेवः प्रीतः प्रीतेन चेतसा ॥९६

देव उवाच ।☸

प्रलयस्थितिसर्गाणां कर्ता त्वं धरणीपते ।
वत्स वत्स हरे विश्वं पालयैतच्चराचरम् ॥९७

त्रिधा भिन्नोऽस्म्यहं विष्णो ब्रह्मविष्णुहराख्यया ।
सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जनः ॥९८
संमोहं त्यज भो विष्णो पालयैनं पितामहम् ।
भविष्यत्येष भगवांस्तव पुत्रः सनातनः ॥९९
अहं च भवतो वक्त्रात् कल्पादौ घोररूपधृक् ।
शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रक ॥१००
एवमुक्त्वा महादेवो ब्रह्माणं मुनिसत्तम ।
अनुगृह्य च मां देवस्तत्रैवान्तरधीयत ॥१०१
ततः प्रभृति लोकेषु लिङ्गार्चा सुप्रतिष्ठिता ।
लिङ्गं तल्लयनाद् ब्रह्मन् ब्रह्मणः परमं वपुः ॥ १०२

(→एवमुक्त्वा), ब२ तु मां देवो, दे१ तै१ महादेवौ, दे४ द१ प्र१ २ [प्र]यवा देवौ, म१ महेशानौ (→[प्र]य मां देवो) –e) दे५ ब्रह्माणः (→ब्रह्माणं) –f) न१ प्रसादो°, प्र२ प्रासादा° (→प्रसादा°), दे८ °मुखो भवेत् (→°मुखोऽभवत्).

९४ म१ ○ (द्र ८८ पा वि), दे८ १० ६४ ६७ ○ –a) दे४ प्रति (→तत), व२ °वदनौ, प्र२ °तमसौ (→°मनसौ)

९५ म१ ○ (द्र ८८ पा वि), दे८-१० ○ (द्र ६४ पा वि) –a) दे५ प्रीत (→प्रीतिः) –b) दे३ ५ न१ देवो, म१ दव (→देया) दे० वरो हि नौ, दे३ ५ वरश्चनौ, दे८ वरश्चतौ, ब२ वरो मम, मुर्ष मुए वरो हि न (→वरश्च नौ) –c) मा१ दे१ ८ भवति (→भवतु), दे४ न१ तौ, दे० तौ (→नौ) –d) मा१ म३ दे३ ४ ६ तै२ द१ प्र१-५ मा१ महेश्वर, दे५ म१ महश्वर (→महेश्वरे)

९६ म१ ○ (द्र ८८ पा वि), दे८-१० ○ (द्र ६४ पा वि), प्र० ६९c ६६d ○, म१ cd ○ –a) व२ च (→स) –b) तै१ प्रहस्य (→प्रहसन्) –d) मा१ प्रीति(?), द१ मुर्ष मुए मुब प्रीत (→प्रीत)

☸ म१ दे८ १० ब२ म१ ○, प्र२ मुर्ष मुब देवदेव उवाच, ब१ महादेव उवाच, दे१ श्रीभगवानुवाच, द१ ईश्वर उवाच, म१ देवा ऊचुः, तै१ श्रीमहादेव, द१ प्र१ ईश्वर

९७ म१ ○ (द्र ८८ पा वि), दे८ १० ○ (द्र ६४ पा वि) प्र० ○ (द्र ६६ पा वि) –a) दे१ प्रमर्द° (→प्रलय°) –b) द१ कर्तृ त्वं, दे५ कर्ता च, म१ कर्ताह (→कर्ता त्वं), दे१ म१ °धर, द१ प्र१ °धर (→°पते) –c) मा१ दे२ ३ दे३-५ ८ वत्स हरसे (दे५ °से), दे८ द१ व१ प्र१ कल्पान्ते (→हरे विश्वं) –d) दे१ पालयेनत्, दे५ पालयेत, दे१ पालयेः (→पालयैतत्)

९८ व१ ○ (द्र ८८ पा वि), प्र२ ○ (द्र पा वि ९६) –a) तै१ भिन्न स्फुट, द१ प१ म१ भिन्नो ह्यह (→भिन्नोऽस्म्यहं), दे३ ८ भिन्नो (→विष्णो) –b) मा१ दे४ ५ द१ प्र१ म१ °शिवाख्यया, दे१ °हराख्यया (→°हराख्यया), दे१० विष्णो ब्रह्मभवाख्यया (दे८ °भा) –d) तै१ तद्गुणोऽपि (→निर्गुणोऽपि)

९९ व१ ○ (द्र ८८ पा वि), प२ ○ (द्र ९६ पा वि) –a) दे३ सुमोह, दे५ समोह (→संमोहं), दे८ त्यजतां, दे३-५ त्यजते, दे३ ५ त्यजतो, तै१ त्वं च वै (→त्यज भो) –b) व३ पालयंद, दे१ पालयेनां, तै१ पालयेत (→पालयैनं), तै१ पितामह (→पितामहम्) –c) म३ दे० ४ ५ ८ १० म१ तै१ म१ मुर्ष मुए मुब भविष्यत्येव, व२ भविष्यत्येव (→भविष्यत्येष)

१०० व१ ○ (द्र ८८ पा वि) –a) दे४ द१ प्र१ २ म१ भगवतो, दे८ १० प्रभ(दे१० °भा)वतो (→च भवतो) –b) मा१ व१-३ दे३-६ प्र१ कल्पादे(दे५ °दो), व१ प्र२ म१ कल्पान्ते (→कल्पादौ), दे४ क्र°, दे८ १० मुर्ष मुए मुर°, द१ क्रूर°, प२ म१ रुद्र° (→घोर°) –d) तै१ क्रोधजस्तु भवत्सुत

१०१ म१ ○ (द्र ८८ पा वि) –a) दे३ १० ब२ एवमुक्तो (→एवमुक्त्वा) –b) मा१ °सत्तम, दे२ °पुङ्गव, दे५ ८ सर्वं, म१ द१ प्र१ २ म१ °सत्तमा (म१ °मः) (→°सत्तम) –c) व२ तु (→च), द१ प१ म१ मां (→मां)

१०२ म१ ○ (द्र ८८ पा वि), दे० ab ○ –a) प्र३ म१ ततो ब्रह्मादि– (→ततः प्रभृति) –c) मा१ लिङ्गं तल्लयनं ब्रह्मन्, म१ दे१० लिङ्गं तल्लयनाद् ब्रह्मन् दे१ ३ लिङ्गं (दे३ °ङ्ग) तं तल्लयनाद् ब्रह्मन्, दे४ ८ लिङ्गं तु लयनाद् ब्रह्मन् (दे८ °ह्म), दे५ लिङ्गं तु लयनाद् ब्रह्मन्, म१ लिङ्गं तल्लयनं ब्रह्मन्, व२ लिङ्गं तल्लिङ्गनाद् ब्रह्मन्, म१ लिङ्गं तल्लिङ्गनं ब्रह्मन्

एतल्लिङ्गस्य माहात्म्यं भाषितं ते मयाऽनघ ।
एतद् बुध्यन्ति योगज्ञा न देवा न च दानवाः ॥१०३
एतद्धि परमं ज्ञानमव्यक्तं शिवसंज्ञितम् ।
येन सूक्ष्ममचिन्त्यं तत् पश्यन्ति ज्ञानचक्षुषः ॥१०४
तस्मै भगवते नित्यं नमस्कारं प्रकुर्महे ।
महादेवाय रुद्राय देवदेवाय लिङ्गिने ॥१०५
नमो वेदरहस्याय नीलकण्ठाय वै नमः ।
विभीषणाय शान्ताय स्थाणवे हेतवे नमः ॥१०६
ब्रह्मणे वामदेवाय त्रिनेत्राय महीयसे ।
शंकराय महेशाय गिरीशाय शिवाय च ॥१०७
नमः कुरुष्व सततं ध्यायस्व मनसा हरम् ।
संसारसागरादस्मादचिरादुत्तरिष्यसि ॥१०८
एवं स वासुदेवेन व्याहृतो मुनिपुंगवः ।
जगाम मनसा देवमीशानं विश्वतोमुखम् ॥१०९
प्रणम्य शिरसा कृष्णमनुज्ञातो महामुनिः ।
जगाम चेप्सितं देशं देवदेवस्य शूलिनः ॥११०
य इमं श्रावयेन्नित्यं लिङ्गाध्यायमनुत्तमम् ।
शृणुयाद् वा पठेद् वापि सर्वपापैः प्रमुच्यते ॥१११ वें१.२५.१०९

---

१०३ व1 ab ⊙ (द्र ९८ पा दि) –a) दे4 द1 श्र1 2 म1 एव, दे3 शिव- (→एतद्) –b) दे3 कथित, मुत्र भाषित (→भाषित) –c) न1 एत (→एतद्), दे5 ●ध्यति, दे10 बुध्यति (?), न1 बुध्यति (→बुध्यन्ति), दे4 योगत्वा, द1 श्र1 2 म1 योगस्था (→योगज्ञा) –d) दे4 न च देवा न, श्र2 न देवा नच (→न देवा न च), का1 व2 मानुषा, व3 दे3 5 6 मानवा, द1 श्र1 2 म1 वासव (→दानवा)

१०४ –a) दे8 परम- (→परम) –b) व2 3 शिवसंज्ञक, दे10 शिवसंज्ञिक, तै1 शिवभाषितम्, श्र1 शिवमव्ययम् म1 स्वसंज्ञितम् (→शिवसंज्ञितम्) –c) का1 एव सूक्ष्म, त1 एतत्सूक्ष्म (→येन सूक्ष्मं), व1 अनिन्द्य च, दे1 अचिन्त्येतत्, दे2 अचिन्त्य तु (→अचिन्त्य तत्) –d) दे4 पश्यन्तो (→पश्यन्ति), दे6 8-10 °चक्षुषा (→°चक्षुषः)

१०५ –a) श्र2 भगवतो (→भगवते) –b) दे10 प्रकुर्महे, + प्रकुर्मुहे, द1 देवादि (→प्रकुर्महे) –c) व2 महारुद्राय, द1 महादेवादि (→महादेवाय), का1 व2 दे8-10 मुवें मुए मुव देवाय (→रुद्राय) –d) दे1 महा° (→देव°) दे8-10 मुवें मुए मुव शूलिने (दे8 9 °ने) (→लिङ्गिने)

१०६ –a) का1 व1 3 दे3 5 6 तै1 देव° (→वेद°) दे10 °हृदयाय (→°रहस्याय) –b) दे3 नील° (→नील°), व2 मुवें तै (→वै) –d) का1 व1-3 दे4 5 मुव योगिने (→हेतवे), द1 योगिने (दे6 °न) स्थाणु (दे8 °न)व नम तै1 प्राणाधिपतये नम, द1 श्र1 2 म1 स्थाणवे शिवयोगिने

१०७ –a) का1 व1-3 दे3-6 देवदेवाय, द1 श्र1 2 म1 वेदवेद्याय (→वामदेवाय) –b) दे3 त्रिनेत्राय, तै1 द1 श्र1 2 म1 त्रिणेत्राय (→त्रिनेत्राय), दे7 महात्मने (→महीयसे) –c) दे2 गिरीशाय (→महेशाय) –d) का1 व2 दे1 6-10 गिरिशाय, दे4 गिरिशाय (→गिरीशाय), दे2 शिवाय गिरिशाय च, तै1 शिवाय च नमो नम

१०८ –a) दे5 नमस्तु रुद्र, तै1 नमस्कुर्वंश्च (→नमः कुरुष्व) –b) दे10 ध्यायस्व, तै1 ध्यायस्व (→ध्यायस्व), दे8 10 मुवें मुए मुव च महेश्वर, म1 मनसा शिव (→मनसा हर) –c) दे2 °रात्तस्माद् (→°रादस्माद्) –d) व1 तै1 अचिरादुत्तरिष्यसि, व2 दे1 मुव अचिरादुद्धरिष्यसि, दे8 9 मुवें मुए अचिरादुद्धरिष्यसि, दे5 अचिरा त्वं तरिष्यसि –cd) श्र2 संसारसागरादस्मात् चिरादुत्तारयिष्यसि

अत परं अधिकम्—

व1 श्रीसूत उवाच, श्र1 सूत, म1 श्रीसूत

१०९ –b) तै1 व्याहृते (→व्याहृतो), दे1 हि महामुनि, दे2 मुनिसत्तम, दे8 म1 मुनिपुङ्गव (म1 °वा) (→मुनिपुङ्गव) –c) दे1 ज्ञात्वा चाराध्य त देव –d) दे2 सर्वतो° दे5 विपतो° (→विश्वतो°)

११० –b) दे2 मनसा (→शिरसा) का1 व1-3 दे3-6 द1 श्र1 2 म1 विष्णु (→कृष्ण) –b) श्र2 अनुज्ञाप्य (→अनुज्ञातो) –c) दे8 9 जगामेवेप्सित, दे10 जगामेवेप्सित (→जगाम चेप्सित), दे2 ●न, दे8 10 मुवें मुए शम्भु, द1 श्र2 देव (→देश) –d) का1 व1 दे4 5 न1 देवदे● च शूलिनम् (दे5 °ना), दे2 3 6 8 10 द1 श्र1 2 म1 मुवें मुए देवदेव त्रिशूलिनम्

१११ –a) दे5 य इमा, तै1 इम य द1 श्र1 2 य इद (→य इम), व3 श्रावयद्वापि, द1 म1 शृणुयान्नित्य (→श्रावये-न्नित्य) –b) दे1 लिङ्गाध्यानमुत्तम, द1 श्र1 लिङ्गध्यानमनुत्तम, श्र2 म1 लिङ्गमध्यायमुत्तम –c) दे1 पठेद्वापि, म1 पठेद्वा वै (→पठेद्वापि)

वें१.२६.१०१ श्रुत्वा सकृदपि ह्येतत् तपश्चरणमुत्तमम् ।
वासुदेवस्य विप्रेन्द्राः पापं मुञ्चति मानवः ॥११२
जपेद् वाहरहर्नित्यं ब्रह्मलोके महीयते ।
एवमाह महायोगी कृष्णद्वैपायनः प्रभुः ॥११३

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायां पूर्वविभागे पञ्चविंशोऽध्यायः ॥२५॥

# २६

सूत उवाच ।※
ततो लब्धवरः कृष्णो जाम्बवत्यां महेश्वरात् ।
अजीजनन्महात्मानं साम्बमात्मजमुत्तमम् ॥१
प्रद्युम्नस्याप्यभूत् पुत्रो ह्यनिरुद्धो महाबलः ।
तावुभौ गुणसम्पन्नौ कृष्णस्यैवापरे तनू ॥२
हत्वा च कंसं नरकमन्यांश्च शतशोऽसुरान् ।
विजित्य लीलया शक्रं जित्वा बाणं महासुरम् ॥३
स्थापयित्वा जगत् कृत्स्नं लोके धर्मांश्च शाश्वतान् ।
चक्रे नारायणो गन्तुं स्वस्थानं बुद्धिमुत्तमाम् ॥४

---

११२ –a) दे1 अपीत्येतत् (→अपि ह्येतत्), ते1 श्रुत्वा कृष्णस्यापि भक्त्या –c) प्र2 विप्रेन्द्र (→विप्रेन्द्रा) –d) दे2 10 ते1 श्रा1 पाप मुञ्चन्ति, दे5 पाप मुच्यति, व2 म1 पापा-मुच्यन्ति (→पापं मुञ्चति), दे1 द1 व1 म1 मानवा, दे4 मानव (→मानवः)

११३ –a) का1 दे2 जपेच्च (→जपेद्वा), ते1 जपेद्वापि पठेन्नित्य, म1 जपेदहरहर्नित्य –c) दे2 ••योगी (→महायोगी) –d) दे9 10 °द्वैपायन (→°द्वैपायन)

पुष्पिका—

पुराणनाम—व1 इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायां, व1 इत्यादि महापुराणे कौर्मे, वे1 2 4 8-10 द1 प्र1 2 म1 मुबं मुए इति श्रीकूर्मपुराणे, व2 3 वे3 6 इति कूर्मपुराणे, दे5 इति कौर्मपुराणे षट्साहस्त्र्यां संहितायां, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुम इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम—दे1 न1 वे1 द1 म1 2 म1 ○, का1 व1 3 दे5 6 लिङ्गाविर्भावे, व2 लिङ्गाविर्भावविधि, दे1 8-10 मुए यदुवंशानुकीर्तने लिङ्गोत्पत्ती, दे2 लिङ्गप्रादुर्भावो नाम, दे3 लिङ्गाविर्भावे, मुबं यदुवंशानुकीर्तने लिङ्गोत्पत्तिर्नाम, मुब सोमवंशे यदुवंशानुकीर्तने कृष्णतपस्याया लिङ्गाविर्भावो नाम अध्यायसंख्या—दे6 ○, का1 व1 3 दे3-5 म1 व1 द1 प्र1 चतुर्विंशोऽध्यायः, व2 ॥२४॥, दे1 मुबं मुब पञ्चविंशोऽध्याय ॥२५॥, दे3 8 10 प्र2 म1 मुए षड्विंशोऽध्याय, दे10 षड्विंशोऽध्याय ॥२६॥ श्रीकृष्णार्पणमस्तु ॥

२६

[न1 पुस्तके २६-२८ अध्याया न सन्ति]

※ ते1 शिव, + सूत, द1 म1 श्री सूते, प्र1 2 सूत

१ –a) दे10 लब्ध्वा (→लब्ध-) –b) व1 दे8 प्र2 जाम्बवत्या, दे4 साम्बवत्या (→जाम्बवत्या), व1 महाबलात (→महेश्वरात) –c) व1 महाभाग (→महात्मान) –d) व1 2 दे2 3 8 10 मुए मुब शाम्बम् (→साम्बम्)

२ –a) व2 3 °स्याभवत्, दे2 8-10 मुबं मुए मुब °स्य ह्यभूत (→°स्याप्यभूत्), ते1 ज्येष्ठ (→पुत्रो) –c) द1 रूप°, प्र2 पुण्य° (→गुण°) –d) द1 °वापरो, प्र2 °वापरे (→°वापरे), दे1 4 8 द1 तनु, दे10 तनू (→तनू)

३ –a) दे3 हत्वा च नरकं कंस, दे4 हत्वा चक्र सनरक, ते1 हत्वा चैव सनरक –b) व2 तथान्यांश्च महासुरान् –c) व2 तरसा (→लीलया), का1 शत्रु, दे2 शत्रून्, दे4 चक्र, दे5 शत्रु, ते1 भूपान् (→शक्र) –d) द1 प्र1 बाण चैव, प्र2 बाणेनैव, म1 बाल चैव (→जित्वा बाण)

४ –a) दे10 म1 कृत्स्न, प्र2 सर्व (→कृत्स्न), दे1 जगत्यस्मिन् (→जगत्कृत्स्न) –b) व2 3 दे1 4 ते1 द1 प्र1 लोके- (→लोके), प्र2 समस्तं धर्मशास्त्रवान् –c) का1 दे10 प्र2

त्यन्तरे विप्रा भृग्वाद्याः कृष्णमीश्वरम् ।
मुद्द्वारकां द्रष्टुं कृतकार्यं सनातनम् ॥५

तानुवाच विश्वात्मा प्रणिपत्याभिपूज्य च ।
निपूर्विष्टान् वै सह रामेण धीमता ॥६

ष्ये तत् परं स्थानं स्वकीयं विष्णुसंज्ञितम् ।
कृतानि सर्वकार्याणि प्रसीदध्वं मुनीश्वराः ॥७

इदं कलियुगं घोरं संप्राप्तमधुनाऽशुभम् ।
भविष्यन्ति जनाः सर्वे ह्यस्मिन् पापानुवर्त्तिनः ॥८

प्रवर्त्तयध्वं मज्ज्ञानं ब्राह्मणानां हितावहम् ।
येनेमे कलिजैः पापैर्मुच्यन्ते हि द्विजोत्तमाः ॥९    वें.१.२७.४

---

र्णं, दे१ नारायणो (→नारायणो) –d) व०३ स्थानमनुत्तमम्, दे३,६ स्थानं बुद्धिमनुत्तमम्.

५. मा. d⊙. –a) दे१ पूर्वं (→विप्रा). –b) दे३ द्या (→भृग्वाद्या) –b) दे१ द्रष्टुं (→द्रष्टुं).

व१ पुस्तके ५ श्लोकानन्तरं अधिकम्—

• महायोगी सूर्यकोटिसमप्रभ ।
चक्रकोटिसहस्रेण प्रणमामि द्वाम्बरम् ।
सहस्रहस्तचरण सूर्यसोमाग्निलोचन ।
पिनाकपाणिर्भगवान् कृत्तिवासास्त्रिशूलधृक् । [4]
व्यालयज्ञोपवीतश्च मेघदुन्दुभिनिःस्वन ।
प्रणीवाच महादेव. प्रीतोऽहं सुरसत्तमौ ।
पश्यतं मां महायोग भयं त्यक्त्वा प्रभु[त्वा]ताम् ।
युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । [8]
अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकेश्वरः प्रभु ।
वामे पार्श्वे चैव विष्णु पालको हृदये हरः ।
प्रीतोऽहं युवयो सम्यक् वरं दद्मि यथेप्सितम् ।
एवमुक्त्वाथ मा देवो महादेव स्वयं शिव । [12]
आलिङ्ग्य देवं ब्रह्माणं प्रसादाभिमुखोऽभवत् ।
तत प्रहृष्टमनसौ प्रणिपत्य महेश्वरम् ।
ऊचतु प्रेक्ष्य तद्वक्त्रं नारायणपितामहौ ।
यदि प्रीति समुत्पन्ना यदि देयो वरश्च नौ । [16]
भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वर ।
तत स भगवानीश प्रहसन् परमेश्वर ।
उवाच मां महादेव प्रीति प्रीते (?) वेधसा ।

देव उवाच

प्रलयस्थितिसर्गाणां कर्ता त्वं धरणीपते । [20]
वत्स वत्स जगत् सर्वं पालयैनच्चराचरम् ।
द्विधा (?) स्त्वहं विष्णो ब्रह्मविष्णुहराख्यया ।
सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जन ।
संमोह त्यज मां विष्णो पालयेन पितामह । [24]
भविष्यत्येष भगवांस्तव पुत्र सनातन ।
अहं च भवतो वक्त्रात् कल्पान्ते घोररूपधृक् ।
शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रक ।
एवमुक्त्वा महादेवो ब्रह्माणं मुनिसत्तम । [28]
अनुगृह्य च मां देवस्तत्रैवान्तरधीयत ।
ततः प्रभृति लोकेषु लिङ्गार्चा सुप्रतिष्ठिता ।
एतल्लिङ्गस्य माहात्म्यं भाषितं तु मयानघ •
(= १.२५, ८८d-१०२ab, १०३ab)

६. –a) व० विश्वात्मा (→विश्वात्मा). –b) व० र्याभिवाद्य, दे६ °त्य नियुज्य (→°त्याभिपूज्य) –c) °पूर्वविष्टेषु, दे६ °षु प्रविष्टाश्च (→°पूर्वविष्टान् वै). –d) दे३ धीमता (→धीमता)

७ –a) दे१ २ ८-१० वे१ मुखँ मुए. मुव. गमिष्यामि, दे१ प्रशिष्ये तत, व० गमिष्ये च (→गमिष्ये तत्); द१ प्र१ म१ तर, व० तर (?) (→पर) –b) दे१० स्वकार्यं (→स्वकीयं); व० म१ °त्सञ्ज्ञितम् (→°संज्ञितम्) –c) व० °कार्याणि (→°कार्याणि), व० कृतानि कर्मकार्याणि, म१ कृतानि कर्मजातानि

८ –a) व० इम (→इद) –b) दे१ द१ प्र१ २ सह, दे१० [म]शुभं, म१ वसह (→[म]शुभम्). –c) वे१ तस्मिन् द्विजा नराःसर्वे –d) वा१ दे४ द१ प्र१ २ म१ यस्मिन् (→ह्यस्मिन्); दे१ ह्यस्मिन् न व्यावर्तिन, वे१ न स्वधर्मानुवर्तिन.

८ श्लोकानन्तरं म१ पुस्तके अधिकम्—

३१ • पूजयध्वं महादेवं शाम्बं संसारमोचकम् ।
पूजनीयो विशेषेण यतो मुक्तिमभीप्सुभिः ॥

९ –a) व०३ तज्ज्ञानं, दे३,६ स्वज्ञानं, दे३ ग ज्ञानं, दे९ प्र१ म१ मुखँ मुए मुव विज्ञानं, दे१० ध्यानं, द१ मे ज्ञानं (→मज्ज्ञानं). –b) दे८-१० मुखँ. मुए. मुव. ध्यानानां (दे१० °नं) च (→ब्राह्मणानां) –c) वा१ दे३ येनैते, व० ये लोक (?), व१ ये नाम, दे२ वे१ ये मानी, दे४ प्र२ येन मे, म१ येन वै (→येनेमे); दे५ घोरैर् (→पापैर्). –d) दे५ मुच्यन्ते (→मुच्यन्ते); वा१ व१-३ दे१ २ ४-६ वे१ वै, व० प्र१ म१ वा (→हि).

कू.१.२७.१० ये मां जनाः संस्मरन्ति कलौ सकृदपि प्रभुम् ।
तेषां नश्यतु तत् पापं भक्तानां पुरुषोत्तमे ॥१०
येऽर्चयिष्यन्ति मां भक्त्या नित्यं कलियुगे द्विजाः ।
विधिना वेददृष्टेन ते गमिष्यन्ति तत् पदम् ॥११
ये ब्राह्मणा वंशजाता युष्माकं वै सहस्रशः ।
तेषां नारायणे भक्तिर्भविष्यति कलौ युगे ॥१२
परात् परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥१३
ध्यानं होमं तपस्तप्तं ज्ञानं यज्ञादिको विधिः ।
तेषां विनश्यति क्षिप्रं ये निन्दन्ति पिनाकिनम् ॥१४
यो मां समाश्रयेन्नित्यमेकान्तं भावमाश्रितः ।
विनिन्द्य देवमीशानं स याति नरकायुतम् ॥१५

तस्मात् सा परिहर्तव्या निन्दा पशुपतौ द्विजाः ।
कर्मणा मनसा वाचा तद्भक्तेष्वपि यत्नतः ॥१६
ये तु दक्षाध्वरे शप्ता दधीचेन द्विजोत्तमाः ।
भविष्यन्ति कलौ भक्तैः परिहार्याः प्रयत्नतः ॥१७
द्विषन्तो देवमीशानं युष्माकं वंशसंभवाः ।
शप्ताश्च गौतमेनोर्व्यां न संभाष्या द्विजोत्तमैः ॥१८
इत्येवमुक्ताः कृष्णेन सर्व एव महर्षयः ।
ओमित्युक्त्वा ययुस्तूर्णं स्वानि स्थानानि सत्तमाः ॥१९
ततो नारायणः कृष्णो लीलयैव जगन्मयः ।
संहृत्य स्वकुलं सर्वं ययौ तत् परमं पदम् ॥२०
इत्येष वः समासेन राज्ञां वंशोऽनुकीर्तितः ।
न शक्यो विस्तराद् वक्तुं किं भूयः श्रोतुमिच्छथ ॥२१

---

१० -a) व2 स्मरिष्यन्ति (→संस्मरन्ति) • -b) ते1 कलौ शिवमपि प्रभु -c) दे1 न भवति, दे3 8-10 मुवें मुए मुव नश्य(दे10 °श्य)ति, दे8 नश्यत (→नश्यतु) -d) दे1 द1 पुरुषोत्तम (→पुरुषोत्तमे)

११ -a) दे2 येऽर्चयन्ति हि, ते1 येऽर्चयन्ति च, द1 श्र1 2 म1 येऽर्चयन्ति च (म1 तु) (→येऽर्चयिष्यन्ति) -b) म1 प्रजा (→द्विजा), दे1 नित्य कलयुगेऽद्विका -c) व1 दे4 श्र1 देव° (→वेद°), दे10 विधिनावेव दृष्टेन -d) व2 पुर, ते1 पर (→पद)

१२ -b) दे10 च (→वै)

१३ -b) व1 2 दे1 3 8-10 मुवें मुए मुव °परा जना, व3 °परा जना, + °परायणा (→°परायणा) -d) दे3 महेश्वरे (→महेश्वर)

१४ -a) व1 3 दे4 द1 श्र1 म1 होम, दे1 योगम्, दे3 8 10 ते1 मुवें मुए मुव योग (→होम), व1 2 दे2 ते1 जपस् (→तपस्), म1 सत्य (→तप्त) -b) व1 3 ते1 ज्ञान-, दे1 ज्ञा• (→ज्ञान), दे1 •• धिको, दे4 द1 यज्ञाधिको (→यज्ञादिको) -c) म1 3 विनिश्यति (→विनश्यति) -d) दे1 2 म1 द्विषन्ति, श्र2 द्विष्यन्ति (→निन्दन्ति), दे8-10 मुवें, मुए मुव म श्वर (→पिनाकिनम्)

१५ -a) द1 ये (→यो), दे8 10 मुवें मुए मुव ममर्चयेत् (→समाश्रयेत्) -c) व2 3 दे1 3 6 8-10 ते1 विनिन्दन् (→विनिन्द्य), व1 विनिन्दन्नेवमीशान, द1 श्र1 विनिन्द्यो महेशान, श्र2 म1 विनिन्दतो (श्र2 °न्दतो) महादेव. -d) दे1 ते1 श्र1 नरक ध्रुव (→नरकायुतम्).

१६ -a) दे1 तस्माद-, दे8-10 ते1 मुवें. मुए मुव तस्मात्स- (→तस्मात्सा), दे4 तस्मात्सत्वपि कर्तव्या. -b) दे1 2 6 8 ते1 द1 श्र1 2 म1 मुवें मुए मुव पशुपतेर् (→पशुपतौ) -d) दे1 8-10 मुवें मुए मुव मद्° (→तद्°), ते1 द1 व्रत (→यत्नत)

१७ द1 श्र1 2 म1 १७-१८ab ⊙ -a) दे8 10 मुवें मुए मुव च (→तु) -c) दे3 6 भक्ति-, दे4 भक्ता, दे8 भुक्ते, दे10 भक्ते (→भक्तै)

१८ द1 श्र1 2 म1 ○ (द्र १७ पा टि) -b) ते1 सूक्ष्म वंगत सदा स -c) का1 °नार्यां (→°नोर्व्यां), ते1 न प्राप्नुवन्ति मे भक्ति -d) का1 व1 दे3-6 ते1 द्विजोत्तमा (→द्विजोत्तमै)

१९ द1 श्र1 2 म1 ab ⊙ -a) व3 उक्त (→उक्ता), दे8 10 मुवें मुए मुव एवमुक्तास्तु (दे10 °श्च) कृष्णेन -b) दे8-10 मुवें मुए मुव सर्वे ते (→सर्व एव) -c) दे10 उक्ता स् (→उक्त्वा), द1 श्र1 2 म1 तूष्णीं (→तूर्णं) -d) दे4 निस्थानानि च सत्तमा, द1 श्र1 2 म1 स्थानानि मुनिसत्तमा

२० -a) दे3 तथा नारायणे कृष्णं -c) दे1 स्व (→स्व-)

२१ -a) व2 3 इत्येष च (→इत्येष व) -b) दे1 3 6 राजा, ते1 राज- (→राज्ञां), दे9 वंशस्तु, दे10 वंशोऽत्र, मुवें मुए मुव वंश° नु- (→वंशोऽनु-), का1 व1-3 दे3 5 6 ते1 द1 श्र1 2 -र्तित, दे4 -र्तित (→-कीर्तित) -c) दे10 शक्तो (→शक्यो) -d) श्र2 पुन (→भूय)

यः पठेच्छृणुयाद् वापि वंशानां कथनं शुभम् । सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥२२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे षड्विंशोऽध्यायः ॥२६॥

# २७

ऋषय ऊचुः ॥❀

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
एषां स्वभावं सूताद्य कथयस्व समासतः ॥१

सूत उवाच ॥❀

गते नारायणे कृष्णे स्वमेव परमं पदम् ।
पार्थः परमधर्मात्मा पाण्डवः शत्रुतापनः ॥२

कृत्वा चैवोत्तरविधिं शोकेन महतावृतः ।
अपश्यत् पथि गच्छन्तं कृष्णद्वैपायनं मुनिम् ॥३

शिष्यैः प्रशिष्यैरभितः संवृतं ब्रह्मवादिनम् ।
पपात दण्डवद् भूमौ त्यक्त्वा शोकं तदार्जुनः ॥४

उवाच परमप्रीतः कस्माद् देशान्महामुने ।
इदानीं गच्छसि क्षिप्रं कं वा देशं प्रति प्रभो ॥५ मे. १.२८.१

---

२२ -a) दे1 य एष (→य पठेद्) -b) दे1 2 तै1 वशानु- (→वशानां), दे1 वक्षिव (→कथन) -c) का1 व1 3 दे3-0 द1 प1 3 म1 °विशुद्धात्मा (→°विनिर्मुक्त), ब2 सर्वं विशुद्धात्मात्मान -d) का1 सर्व° (→स्वर्ग°), का1 व1 3 दे1 5 द1 प्र1 स मोदते (→महीयते)

पुष्पिका—

पुराणनाम—द1 ⊙, का1 दे1 4 5 8 10 प1 2 म1 मुवॅ मुए इति श्रीकूर्मपुराणे, व1-3 दे2 3 0 इति कूर्मपुराणे, तै1 दशवाहिनमहापुराणे श्रीकौर्मे, मुव इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम — व2 दे4 तै1 द1 प1 2 म1 ⊙, का1 व1 दे1 2 5 8 8-10 मुए राजवंशानुकीर्तने, म2 दे3 वंशानुकीर्त्तने, मुवॅ मुव राजवंशानुकीर्त्तनं नाम अध्यायसंख्या— दे0 ⊙, का1 प1 3 दे2 3 5 तै1 द1 पञ्चविंशोऽध्याय, व2 द1 ॥२६॥, दे1-10 मुवॅ षड्विंशोऽध्याय ॥२७॥, दे1 पञ्चविंशोऽध्याय ॥२१॥, दे8 9 प2 म1 मुए मुव षड्विंशोऽध्याय.

२७

[व1 पुस्तके षड्विंशोऽध्याय नास्ति]

❀ दे1 श्री शिव, + ऋषय; प1 2 म1 ऋषय

१ -a) प2 कृतस् (→कृतं), म1 मुप. द्वापरश्च (→द्वापर च). -b) दे1 चतुर्यकम (→चतुर्युगम) -c) दे2 तै1 तेषां, द1 येषां (→एषां), दे8-10 म1 मुवॅ मुए मुव प्रभाव, द1 स्वरूप (→स्वभाव), व2 सूताद्य (→सूताद्य) -d) दे1 कथयाशु समाहित

❀ प2 ⊙, दे8 9 सूत उ, तै1 प्र1 म1 सूत, द1 श्रीसूत

२ -a) व3 कृष्ण (→कृष्णे). -b) व2 स्वदेव, + स्वमेव (→स्वमेव), व3 म1 स्वयमेव परं पद

३ -a) दे3 °तरा विधि, + °त्तरविधि, द1 °त्तर-विधि, प2 °त्तर विधि (→°त्तरविधिं). -b) दे1 सोकेन (→शोकेन) -c) व1 ददर्शयद् पार्थ गच्छन्त, दे1 अपश्यत् पथि गायन्त, तै1 अपश्यदपिगच्छन्तं, द1 अपश्यदशनि गच्छन्त -d) द1 प1 2 म1 प्रभु (→मुनिं).

४ -a) द1 प1 2 म1 शिष्य- (→शिष्यै); दे5 -रभित, दे1 प्र1 सहित, द1 प1 -र्हित (→-रभित). -b) व3 सद्वृत (→संवृत), तै1 द1 °वादिनं (→°वादिनम्) -d) प1 कृत्वा (→त्यक्त्वा), व2 प2 तमर्जुन, दे1 तथार्जुन (→तदार्जुन).

५ -a) दे10 परम, प2 परम. (→परम-); दे8-10 मुवॅ मुए मुव प्रीत्या (→प्रीत). -b) प1 तस्माद्

वें. १.२८.६ संदर्शनाद् वै भवतः शोको मे विपुलो गतः ।
इदानीं मम यत् कार्यं ब्रूहि पद्मदलेक्षण ॥६
तमुवाच महायोगी कृष्णद्वैपायनः स्वयम् ।
उपविश्य नदीतीरे शिष्यैः परिवृतो मुनिः ॥७

व्यास उवाच ।❀

इदं कलियुगं घोरं संप्राप्तं पाण्डुनन्दन ।
ततो गच्छामि देवस्य वाराणसीं महापुरीम् ॥८
अस्मिन् कलियुगे घोरे लोकाः पापानुवर्तिनः ।
भविष्यन्ति महापापा वर्णाश्रमविवर्जिताः ॥९
नान्यत् पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम्।
सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे ॥१०
कृतं त्रेता द्वापरं च सर्वेष्वेतेषु वै नराः ।
भविष्यन्ति महात्मानो धार्मिकाः सत्यवादिनः ॥११
त्वं हि लोकेषु विख्यातो धृतिमाञ् जनवत्सलः ।
पालयाद्य परं धर्मं स्वकीयं मुच्यसे भयात् ॥१२
एवमुक्तो भगवता पार्थः परपुरंजयः ।
पृष्टवान् प्रणिपत्यासौ युगधर्मान् द्विजोत्तमाः ॥१३
तस्मै प्रोवाच सकलं मुनिः सत्यवतीसुतः ।
प्रणम्य देवमीशानं युगधर्मान् सनातनान् ॥१४

व्यास उवाच ।❀

वक्ष्यामि ते समासेन युगधर्मान् नरेश्वर ।
न शक्यते मया पार्थ विस्तरेणाभिभाषितुम् ॥१५

---

(→कस्माद्), दे8 10 मुबँ. मुए कस्मादेतन् (→कस्माद्देशात्) –d) का1 व1-3 दे2 3 5 6 मुबँ मुए मुब. क स्था, दे1 किं वा, दे4 क सु, दे8-10 गच्छा- हैं1 द1 श्र1 म1 कं च, श्र2 कस्य (→कं वा-)

६ –a) दे10 सन्दर्शनार्थं (→संदर्शनाद्), दे4 भवता (→भवत:) –b) का1 विपुलं (→विपुलो), श्र2 म1 हृा (→गत), दे2 शोको य विगतो मम –c) म1 मपि (→मम) –d) दे2.3 °दलेक्षणा (→°दलेक्षण)

७ –b) प1 म1 द्वैपायन- (→द्वैपायन); का1 व1 दे5 प्रभु (→स्वयम्)

७ श्लोकानन्तर दे3.8-10 ते1 मुबँ मुए पुस्तकेषु अध्याय-समाप्तिर्वर्तते —दे8 9 इति श्रीकूर्मपुराणे अष्टाविंशोध्याय (दे1 ॥२८॥), दे10 इति श्रीकूर्मपुराणे अष्टाविंशोध्याय ॥२८॥ श्रीसीतारामचन्द्रार्पणमस्तु ॥, ते1 इत्यादिमहापुराणे श्रीकौर्मे व्यासदर्शनं नाम षड्विंशोध्याय, मुबँ मुए इति श्री कूर्मपुराणे पार्थाय व्यासदर्शनं नामाष्टाविंशोध्याय ॥२८॥.

❀ दे8 व्यास उ.,ते1 श्रीशिव, + सूत ; द1 श्र1 2म1 व्यास.

८ –a) व1 वयं, दे3 इ(नि)दं, म1 इदानीं (→इदं) –b) दे5 6 °नन्दन (दे8 °न) (→°नन्दन) –c) ते1 गच्छामि (→गच्छामि). –d) का1 शुभां वाराणसीमहं; दे1 पुरी द्वारवती शुभां, दे2 ते1 मुबँ मुए मुब. पुरीं वाराणसीं शुभां, दे6 वाराणस्यां महापुरीं, द1 प्र1 2 म1 दिव्यां वाराणसीं पुरीं.

९. द1 ९c-११d ⊙ (९ म.). –a) दे4 पापान् (→पापिनः) –b) श्र2 °वृद्धिन (→°वर्तिन). –c) दे1 2 8-10 मुबँ. मुए. मुब. महाबाहु, ते1 महाभागा (→महापापा) –d) दे10 विनिर्जिता (→विवर्जिता)

१०. द1 ⊙ (द. ९ पा वि.). –a) प्र2 पापात्मा, + नागात्मा (→जन्तूनां). –b) श्र2 त्यक्त्वा, दे0 10 मुक्ता (→मुक्त्वा). –c) दे1 2 4 8-10 ते1 मुबँ. मुए. मुब. -पापौघ° (→-पाप प्र°) –d) दे3 पायश्चित्तौ (→प्रायश्चित्त)

११. द1. ⊙ (द ९ पा. वि.) –a) दे5.10 प्र2 कृत– (→कृतं), दे10 प्र2 त्रेतं (प्र2 °त) (→त्रेता),व2 मुब. द्वापरश्च (→द्वापरं च) –b) व1 °ष्वेतेन (→°ष्वेतेषु), प2 ते1 ये, दे8 9 मुए. ते (→वै), दे5 पुरा, प्र1 नरा, श्र2 म1 ततः (→नराः) –d) ते1 न्याय° (→सत्य°)

१२ श्र2 cd ⊙. –a) ते1 परिज्ञातो (→विख्यातो) –b) दे1 भक्त°, ते1 धर्मं° (→जन°). –c) दे3 6 प्रापयाद्य, दे5 प्रापयस्व (→पालयाद्य), का1 परम (→परं). –d) का1 व1 दे3.5.6 स्वकीयान् (→स्वकीयं), प्र1 व1 3 दे4 6 10 म1 मुच्यते (→मुच्यसे), दे10 भवान्, प्र2 म1 भवात (→भयात्).

धन पर ते1 मधिकम्–प्रजया पुण्यसे यदान्

१३. –b) दे10 पार्थं,+पार्थ. (→पार्थः) –c) दे2 °त्यासं (→°त्यासौ). –d) ते1 पुरा धर्मं, प्र2 योग धर्म- (→युगधर्मान्).

१४. –b) व2 पुन. (→मुनि). –d) का1 व1-3 दे3 5 6 °धर्मं (→°धर्मान्).

❀ दे6 द1 प2 म1. ⊙; दे8 9 व्यास उ.; ते1 प1 व्यास.

१५. –a) दे10 तत् (→ते). –b) श्र2 महेश्वर, दे5 नरेश्वर (→नरेश्वर) –c) का1 व2 3 दे3 5 6 न शक्यते, दे2 न शक्यं हि (→न शक्यते), दे1 8-10 मुबँ. मुए मुब मया राजन्, दे2 ते1 महाराजा (→मया पार्थ), म1 निशम्यते तु यत्

आद्यं कृतयुगं प्रोक्तं ततस्त्रेतायुगं बुधैः ।
तृतीयं द्वापरं पार्थ चतुर्थं कलिरुच्यते ॥१६
ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥१७
ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः ।
द्वापरे दैवतं विष्णुः कलौ रुद्रो महेश्वरः ॥१८
ब्रह्मा विष्णुस्तथा सूर्यः सर्व एव कलिष्वपि ।
पूज्यते भगवान् रुद्रश्चतुर्ष्वपि पिनाकधृक् ॥१९
आद्ये कृतयुगे धर्मश्चतुष्पादः सनातनः ।
त्रेतायुगे त्रिपादः स्याद् द्विपादो द्वापरे स्थितः ।
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठति ॥२०
कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षाद् रसोल्लसा ।
प्रजास्तृप्ताः सदा सर्वाः सदानन्दाश्च भोगिनः ॥२१
अधमोत्तमत्वं नास्त्यासां निर्विशेषाः पुरंजय ।
तुल्यमायुः सुखं रूपं तासां तस्मिन् कृते युगे ॥२२
विशोकाः सत्त्वबहुला एकान्तबहुलास्तथा ।
ध्याननिष्ठास्तपोनिष्ठा महादेवपरायणाः ॥२३　　वै॰१.२९.१७

---

पार्थ -d) का1 ब2 विस्तारेणाभि°, दे3 विस्तरेणाभि°, ते1 विस्तरेणानु°, द1 विस्तरेणापि, प्र1 विस्तरेणाथ (→°विस्तरेणाभि°), ब1 दे1 3 6 द1 म1 °भाषित (→°भाषितुं).

१६ -a) ते1 आदौ (→आद्यं) -b) का1 दे5 युग (→युगं) -c) दे1 2 प्रोक्त (→पार्थ) -d) ब2 3 दे3 5 6 चतुर्य (→चतुर्थं), दे10 कलिग (→कलिर्), द1 प्र1 2 म1 युग च (ते) (→°रुच्यते)

१७ -a) दे1 प्र1 ज्ञानं, दे10 ध्यायन् (→ध्यानं), दे8 10 ते1 मुबं मुए मुब तप, द1 प्र1 2 म1 स्मृत (→परं) -b) द1 प्र1 2 म1 ध्यानम् (→ज्ञानम्), ब1 3 दे3 5 द1 प्र1 म1 प्रध्वर (दे4 °रा), प्र2 ईश्वर (→उच्यते) -c) प्र2 दाहौ (→°दाहुः) -d) ब2 दे1 3 4 6 8-10 मुबं मुए मुब एक (→एव)

१८ -b) दे4 ऋषि, दे5 प्रभु, दे10 विभु (→रवि), ते1 भग एव च (→भगवान् रवि) -d) दे8 10 मुबं मुए, मुब देवो, ते1 युद्धो (→रुद्रो)

१९ दे4 १९ a-२० b ○ -a) म1 दे5 10 ते1 ब्रह्म (→ब्रह्मा), ते1 तदा (→तथा), ते1 रुद्र (→सूर्यं) -b) दे1 शर्व (→एव), ब2 3 दे1 मुबं, मुब कलावपि (→कलिष्वपि) ते1 सर्व एव चतुर्ष्वपि, द1 प्र1 2 म1 सर्वदै(द1 प्र1 °दे)व चतुर्ष्वपि -c) का1 पूजते, ब1 दे8 9 म1 मुबं मुए मुब पूज्यन्ते, ते1 पूज्यते, + पूज्यते (→पूज्यते) -d) दे5 चतुर्यु(?), द1 प्र1 2 म1 कलिष्वपि (→चतुर्ष्वपि), ते1 °भृत (→°धृक्)

२० दे4 ab ○ -a) म1 आद्यो, मुब आद्यो (→आद्ये), दे5 कृते (→कृत-), प्र2 आद्ये तत्र कृतयुगे धर्मा -b) दे1 2 8-10 ते1 मुबं मुए मुब प्रकीर्तितः (→सनातनः) -c) दे2 6 प्र1 2 म1 त्रिपाद-(→त्रिपादः), दे6 प्र2 द्विपादे, दे10 द्विपादौ (→द्विपादो) -d) दे2 ते1 स्मृत (→स्थित) -c) प्र2 म1 °हीन (→°हीनम्), का1 तिष्येषु, ब1 3 दे4 8 मुबं मुए मुब तिष्ठेतु, ते1 पादेन, प्र2 युगोन्द्र (→तिष्ये तु) -d) दे5 सत्व° (→सत्ता°), दे1 विशिष्ट, ते1 त्रिष्वपि (→तिष्ठति) द1 प्र1 2 म1 सत्तामात्रमधिष्ठित

२१ -a) दे3 8 कृतेनि-, प्र2 कृतोऽनु- (→कृते तु), दे2 मधुनो°, + मैथुनो° (→मिथुनो°), प्र2 °नोत् भक्ति (→°नोत्पत्ति) -b) दे4 वृत्ति (→वृत्ति), का1 दे1 2 8-10 मुबं मुए मुब °रसोल्लुप्त, ब1 °रसोर्णसा, दे6 °द्रसोत्तमा, प्र2 °द्रसेवसा (→°द्रसोल्लसा), ब2 3 वृत्ति सर्वत्र मानसी, ते1 वृत्ति साधारणी स्मृता म1 वृत्तिस्थाभरसोल्लसा -c) दे2 तुष्टा, + तृप्ता, दे3 -सूत्र, दे5 सुप्ता, दे6 स्थित, दे10 गुप्ता, ते1 स्वस्था, द1 स्मृत्वा (→तृप्ता), का1 तथा, दे1 तदा, प्र2 ततस् (→सदा) -d) ब1 दे8-10 मुबं मुए सर्वा° (→सदा°), दे3 तु (→च), दे5 भागिन, ते1 प्र1 2 म1 योगिन (→भोगिन)

२२ -a) ब 2 3 दे1 मुब °मोत्तमता, दे5 °मोत्तमत्व (→°मोत्तमत्व), का1 धर्ममोत्तमा न सन्तीति, दे4 धर्मोत्तमत्व नास्त्यासां, द1 धर्मोत्तरत्व माद्या ये, प्र1 धर्मोत्तरत्वमाप्यासीत्, प्र2 धर्मोत्तरत्वा भाषेसन्, म1 धर्मोत्तरत्वमन्यानेस्मिन् -b) द1 प्र1 2 म1 निर्विशेष (→निर्विशेषा); ब1 परंतप, ब2 दे3 5 परंतप (दे3 °पाद्), ते1 परस्परम् (→पुरंजय) -c) द1 प्र1 2 म1 °माहु (→°मायु), दे5 सुखधर्माणि, ते1 प्र2 म1 दुःख (→रूप) -d) दे1 8-10 ते1 मुबं मुए तासु (→तासां), म1 युग युगे (→कृते युगे)

२३ -a) दे1 2 सत्य,° दे4 8-10 द1 मुबं मुए तत्त्व° (→सत्त्व°), म1 °विपुला (→°बहुला). -b) दे1 स्थिता (→तथा)

वा.१ २६.१७ ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः ।
पर्वतोदधिवासिन्यो ह्यनिकेताः परंतप ॥२४
रसोल्लासा कालयोगात् त्रेताख्ये नश्यते ततः ।
तस्यां सिद्धौ प्रणष्टायामन्या सिद्धिरवर्तत ॥२५
अपां सौक्ष्म्ये प्रतिहते तदा मेघात्मना तु वै ।
मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम् ॥२६
सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले ।
प्रादुरासंस्तदा तासां वृक्षा वै गृहसंज्ञिताः ॥२७
सर्वप्रत्युपयोगस्तु तासां तेभ्यः प्रजायते ।
वर्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः ॥२८
ततः कालेन महता तासामेव विपर्ययात् ।
रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत् ॥२९
विपर्ययेण तासां तु तेन तत्कालभाविना ।
प्रणश्यन्ति ततः सर्वे वृक्षास्ते गृहसंज्ञिताः ॥३०
ततस्तेषु प्रनष्टेषु विभ्रान्ता मैथुनोद्भवाः ।
अभिध्यायन्ति तां सिद्धिं सत्याभिध्यायिनस्तदा ॥३१
प्रादुर्बभूवुस्तासां तु वृक्षास्ते गृहसंज्ञिताः ।
वस्त्राणि ते प्रसूयन्ते फलान्याभरणानि च ॥३२

२४ –a) व3 तना, व1 चेरद्, द5 स वै (→ता वै), दे5 °तारिण्यो (→°चारिण्यो), प्र2 ता वैदिकामाचारिण्यो –c) दे1 पर्वता-, दे6 सवतो° (→पर्वतो°), द1 प्र1 2 म1 पवतो (प्र2 °ते)दं (प्र3 °द)धवासिन्यो –d) प्र2 थीनिकेता (→ह्यनिकेता), व1 दे5 पर सप, दे8 10 परंतपा (→परन्तप)

२५ –a) का1 दे2 रसोल्लसा, प्र1 रसोर्णमा, व2 द1 प्रतालस्या (वे1 °ला), दे3 मुवें मुए मुब रसोल्लास, दे5 रसेलिका, प्र2 शरसाल्या (→रसोल्लासा), व2 कालवशात्, दे8 10 रसायोगात् (→कालयोगात्) –b) दे1 त्रेताया, ते1 द्वितीये (→त्रेताख्ये), ते1 मुवें मुए मुव नश्यति (→नश्यते), दे1 नृप, दे3 8-10 ते1 मुए, मुव द्विज (→तत), व1 त्रेताख्ये न च ते च व –c) ते1 तासा, प्र2 तस्य (→तस्या), दे2 स्थितौ (→सिद्धौ) –d) व3 दे1 3 0 प्रवर्तते (दे1 °त) (→रवर्तत)

२६ –a) द1 तदा (→अपां), का1 व2 3 दे2 6 ते1 मुवें मुए मुव सौक्ष्य, दे1 शौच, द1 प्र1 2 सौक्ष्म्य, म1 सौक्ष्य (→सौक्ष्म्ये), का1 व1-3 दे3 5 6 प्रतिगते, द1 प्र1 2 म1 प्रतिगत (प्र2 °ता) (→प्रतिहते) –b) दे1 द1 प्र1 2 म1 तथा (→तदा), का1 मध्यात्मना तु वै, व2 मेघातुरा तु वै, दे3 6 मेघात्मनार्णव, ते1 मेघात्मना तुर्थं, प्र1 मेघात्म्यमातु वै, प्र2 म1 मेरवा(म1 °वा)त्मा शुभं (→मेघात्मना तु वै) –c) दे1 मध्येभ्यस् (→मेघेभ्य), दे3 स्तनयित्नुभ्य, दे6 स्वनयित्नुभ्य (→स्तनयित्नुभ्य), ते1 मेघेभ्यास्तवभवत्तास्य –d) का1 प्रवर्त, ते1 प्रवृत्ति, प्र1 2 म1 प्रवृष्ट (प्र2 °ष्ट) (→प्रवृत्त), ते1 गृष्टि, प्र2 मप (→वृष्टि-), द1 प्र1 2 म1 °गर्जनम् (→°सर्जनम्)

२७ –a) दे1 सकृतैव, दे6 मद्देव (→सकृदेव) –c) दे8-10 द1 प्र1 2 म1 मुवें मुए मुब तथा (→तदा), म1 तेषां (→तासां) –d) ते1 व्यक्ता (→वृक्षा), दे2 ते1 °संस्थिता (→°संज्ञिता)

२८ –a) का1 द1 सर्वं प्र°, व1 सर्वं प°, व2 सर्वं प्र°, दे2 सर्वं वृ°, दे4 प्र1 म1 सर्वे(दे4 °र्वं)प्री°, प्र2 सकृत् प्र° (→सर्वं प्र°), का1 दे2-4 °योगास्तु, व1-3 दे6 द1 प्र1 म1 °मोगस् (व2 °ग) तु (→°योगस्तु), ते1 सर्वत्र ह्युपभोगस्तु –b) प्र2 तस्मात् (→तासा), दे2 मेघा (→तेभ्य), दे1 4 द1 प्र1 2 म1 प्रवर्तते, दे2 प्रजज्ञिरे (→प्रजायते) –c) दे3 6 मु- (→स्म), दे1 वर्तयन्ति द्रुमेभ्यस्ता, प्र2 प्रवर्तयन्ति स्म तेभ्य –d) द5 °सुखे (→°मुखे)

२९ –a) दे4 तस्य (→तत) –b) व3 ताम्याम् (→तासां) –c) ते1 राज°, + रजो°, द1 रोग° (→राग°), दे2 °लोभादिको (→°लोभात्मको) –d) दे1 द1 प्र1 2 म1 तथा (→तदा), व2 या°, दे1 6-या°, दे4 स्या° (→ह्या°)

३० –a) ते1 सा तत्र (→तासां तु) –b) दे2 तदा (→तेन), दे1 3 5 8-10 ते1 मुवें मुए मुव °भाविना (दे1 ते1 मुवें मुए °ना) (→°भाविना) –c) व2 तथा (→तत) –d) दे3 6 ब्रह्मा (दे6 °ह्म), दे5 वृक्षान् (→वृक्षास्), दे1 वै (→ते), व3 गृह°, प्र1 ग्रह° (→गृह°), म1 °वर्तिता (→°संज्ञिता)

३१ व1 दे10 म1 ३१ a-३२ b ⊙, दे5 c ○ –a) व3 दे1 3 5 6 ते1 द1 प्र1 प्रणष्टेषु, प्र2 प्रविष्टेषु (→प्रनष्टेषु), दे5 विभ्रान्तान् (→विभ्रान्ता) –b) व2 मिथुनो° (→मैथुनो°) –d) का1 दे5 °ध्यायितम्, दे8-10 मुवें, मुए °ध्यानगम् (→°ध्यायिनम्)

३२ व1 दे10 म1 ab ○ (द्र ३१ पा टि) –b) द1 वृक्षाय (→वृक्षास्ते), दे2 °संस्थिता, ते1 °संज्ञिता (→°संज्ञिता) –d) दे8-10 फलान्या°, ते1 फलान्या° (→फलान्या°)

तेष्वेव जायते तासां गन्धवर्णरसान्वितम् ।
अमाक्षिकं महावीर्यं पुटके पुटके मधु ॥३३

तेन ता वर्तयन्ति स्म त्रेतायुगमुखे प्रजाः ।
हृष्टपुष्टास्तया सिद्धया सर्वा वै विगतज्वराः ॥३४

ततः कालान्तरेणैव पुनर्लोभावृतास्तदा ।
वृक्षांस्तान् पर्यगृह्णन्त मधु चामाक्षिकं बलात् ॥३५

तासां तेनापचारेण पुनर्लोभकृतेन वै ।
प्रणष्टा मधुना सार्द्धं कल्पवृक्षाः क्वचित् क्वचित् ॥३६

शीतवर्षातपैस्तीव्रैस्ततस्ता दुःखिता भृशम् ।
द्वन्द्वैः संपीड्यमानास्तु चक्रुरावरणानि च ॥३७

कृत्वा द्वन्द्वप्रतीघातान् वार्तोपायमचिन्तयन् ।
नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ॥३८

ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतायुगे पुनः ।
वार्त्तायाः साधिका ह्यन्या वृष्टिस्तासां निकामतः ॥३९

तासां वृष्ट्युदकानीह यानि निम्नगतानि तु ।
अवहन् वृष्टिसंतत्या स्रोतःस्थानानि निम्नगाः ॥४०

ये पुनस्तदपां स्तोकाः आपन्नाः पृथिवीतले ।
अपां भूमेश्च संयोगादोषध्यस्तास्तदाऽभवन् ॥४१ वे १ २९.३१

---

तै1 पुस्तके b,c मध्ये अधिकम्—

*सर्वप्राण्युपभोगास्तु शासा तेभ्य प्रवर्तिता । (=२८ab)

३३ –a) द1 प1 म1 तेष्वेव(म1 °व), प्र2 यतेषु (→तेष्वेव), दे1 जायते (→जायते), दे10 तासां, म1 तेषां (→तासां), तै1 तष्वेव जायतेऽत्रादिर्. –b) दे1 10 °समन्वितम् (→°रसान्वित) –c) प्र2 माक्षिक त (→ममाक्षिर)

३४ –a) का1 प2 तेन वा-, म1 ते ताम (→तेन ता) –c) दे1 हृष्टा * *, दे2 8 10 वे1 मुबँ मुए हृष्टास्तुष्टा, मुब हृष्टा पुष्टा (→हृष्टपुष्टा), दे1 4 प2 म1 मुब तथा, तै1 सदा (→तया), दे1 2 5 तै1 प1 म1 मुप सिद्धा (→सिद्धया) –d) प्र2 म1 ता (→वै)

३५ –a) दे1 8-10 मुबँ मुए मुब पुन (→नत) –b) दे8 10 मुब मुए मुब ततो (→पुनर्), प1 2 दे6 °वृताम् (→°वृताम्), दे4 द1 प1 म1 तथा (→तदा) दे1 पुनर्लोभा(सु)त्तास्तथा, दे2 पुनर्लोभान्विताऽस्तथा, दे8 10 पुनर्लोभास्तदा वृता, तै1 प्रजालोभान्वितास्तदा –c) दे4 5 10 प्र2 वृताम् (→वृक्षान्), का1 [प]र्यमान्, प2 3 ता (→तान्) प3 °गृह्णन्तु द1 °गृह्णन्ति (→°गृह्णन्त) –d) का1 दे3 5 8 म1 मधुना, दे1 2 4 6 9 द1 प2 मुबँ मुए मधु वा, दे10 मधुना (→मधु चा-), दे10 °क्षिकं (→°माक्षिक), दे2 जना (→बलात्), तै1 मधुरूपादिरर्थं बलात्

३६ –b) द1 प, प2 म1 वा (→वै) –c) प2 3 दे2 1 8 9 मुबँ मुए मुब प्रनष्टा (→प्रणष्टा) –d) म1 कल्प वृक्षेषु नं तदा

३७ –b) दे1 तीव्रा*, दे3 9 मुबँ मुए मुब तापनो दे5 ते तथा, दे10 तस्तान (→ततस्ता), प2 तस्मात् दु निर्गो भृश –c) द1 प1 2 म1 द्वन्द्वस् (→द्वन्द्वैस्), दे4 स (→सं-), दे8 10 °पीड्यमानम् (→पीड्यमानास्) –d) द5 बहुधा° (→चक्रुरा°), दे10 °वरणानि (→°वरणानि), द1 2 4 द1 प1 2 म1 तु (→च), तै1 वृक्षावावरणे गतः

३८ –a) दे1 8 तान्, दे10 हृता (→कृत्वा), दे3 8 द्वन्द्वा° (→द्वन्द्व°), दे8 10 मुबँ मुए विनिघातान्, द1 प1 2 प्रतीघात-, म1 प्रतीकारम् (→प्रतीघातान्) –c) दे5 नष्टेषु, म1 गतेषु (→नष्टेषु), प2 मनसा (→मधुना)

३९ द5 ३६a–४२d ○ (८ श), द1 प1 2 म1 ३९c–४१b ○ –a) दे1 3 मुब मुए मुब °रभूत्तासां, दे8-10 °बभूवाथ (→°बभौ तासां), वे1 प्रादुर्भूतास्य सिद्धि- –b) त1 मुप (→सिद्धिस्) –c) दे8-10 मुप साधरा (→साधिका), प2 3 मुब तस्या दे4 चान्या, त1 ह्यपुरा (→ह्यन्या)

४० दे5 द1 प1 2 म1 ○ –b) प3 निम्ने, दे3 8 मुब निम्न- (→निम्नेषु), द1 ह्यानि (→गतानि), तै1 यानि गतानि तु तानि वै. –c) प2 दे1 4 8-10 मुबँ मुए मुब प्रवहन्, दे6 प्रवहद त1 प्रावहन् (→अवहन्) –d) व1 दे3 6 त1 यान, दे3 8 10 यातु (द8 °त) (→स्रोत)

४१ द5 ○, द1 प1 2 म1 ab ○ –a) का1 नासा, दे3 8 स्नाता (→स्तोका), दे8-10 मुबँ मुए यदा यापो बहुतरा –b) का1 प्राप्ता, प3 प्रपन्ना, तै1 प्राप्ता (→आपन्ना) –c) द1 पाप्ता (→अपां), प2 भूयाम् (→भूमेश्च), दे2 तै1 तु (→च) –d) का1 प1 दे1 2 4 8 10 मुबँ मुए ओषध्यस् (→ओषध्यस्) का1 दे2 तै1 तु यदा, दे4 द1 तास्तथा, द1 तास्तदा प2 म1 तदा (→तास्तदा)

कू.१.२६.१२ अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश ।
ऋतुपुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे ॥४२
ततः प्रादुरभूत् तासां रागो लोभश्च सर्वशः ।
अवश्यं भाविनार्थेन त्रेतायुगवशेन वै ॥४३
ततस्ताः पर्यगृह्णन्त नदीक्षेत्राणि पर्वतान् ।
वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम् ॥४४
विपर्ययेण तासां ता ओषध्यो विविशुर्महीम् ।
पितामहनियोगेन दुदोह पृथिवीं पृथुः ॥४५
ततस्ता जगृहुः सर्वा अन्योन्यं क्रोधमूर्च्छिताः ।
सुतदारधनाद्यांस्तु बलात् कालबलेन तु ॥४६

मर्यादायाः प्रतिष्ठार्थं ज्ञात्वैतद् भगवानजः ।
ससर्ज क्षत्रियान् ब्रह्मा ब्राह्मणानां हिताय च ॥४७
वर्णाश्रमव्यवस्थां च त्रेतायां कृतवान् प्रभुः ।
यज्ञप्रवर्तनं चैव पशुहिंसाविवर्जितम् ॥४८
द्वापरेष्वथ विद्यन्ते मतिभेदाः सदा नृणाम् ।
रागो लोभस्तथा युद्धं तत्त्वानामविनिश्चयः ॥४९
एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ।
वेदव्यासैश्चतुर्द्धा तु व्यस्यते द्वापरादिषु ॥५०
ऋषिपुत्रैः पुनर्भेदाद् भिद्यन्ते दृष्टिविभ्रमैः ।
मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥५१

---

४२ दे5 ⊙ –a) बं1-3 दे1 2 6 म(दे1 पा) काल°, दे10 यफला° (→मफाल°), का1 दे3 6 चालुप्ता (→चानुप्ता), दे4 हलाकृष्टाश्चानुपात्ता, ते1 अफालकृष्टास्त्वस्यासन्, द1 हलादृष्टाश्चानुप्ता, प्र1 म1 हलाकृष्टाश्चतु प्राप्ता, प्र2 हलात्तुष्टा श्चतु प्राप्ता –b) ब3 °रण्यास् (→°रण्यास), दे1 °दिश (→°दश) –c) ब1 फल चैव, दे1 फलाश्चैव (→फलैश्चैव), द1 प्र1 2 म1 चतुष्पथफलैश्चैव –d) ब1 वृक्षा (→वृक्ष-).

४३ –a) ते1 मासां (→तासां) –b) दे4 राग- (→रागो), दे4 सर्वत (→सर्वशः) –c) दे1 अविश्य, दे2 ध्यावश्य, प्र2 अविश्या–, म1 अवश्य- (→अवश्यं), दे2 8 10 मुवें मुए. मुव भाविनार्थेन, दे3 6 भाविनात्मेन (→भावि-नाऽर्थेन) –d) ब1 3 दे3 6 द1 प्र1 2 म1 च (→वै)

४४. –a) का1 दे5 पर्यगृह्णन् तु (→पर्यगृह्णन्त) –b) ब3 °तोयानि, ते1 °क्षेत्रादि- (→°क्षेत्राणि) –c) दे5 °ल्मौषधान्, प्र2 °ल्मौषधस् (→°ल्मौषधीश्च) –d) का1 अगृह्णन्तु, दे6 प्रसह्यन्तु, दे8 9 प्रसाह्यन्तु, ते1 प्रसान्धन्त (→प्रसह्य तु)

४५ –a) का1 ब3 दे6 विपर्ययेन, दे3 विपययोग- (→विपर्ययेण); द1 च तात्स, दे8-10 मासाञ्च, प्र2 म1 तासां तु, (→तासां ता) –b) ते1 गुहाम् (→महीम्)

४६ –a) का1 प्र2 सर्वे (→सर्वा) –b) का1 दे3 10 मुवें मुए मुव अन्योन्य, ते1 क्रोधश्च (→क्रोधेन) –c) का1 ब1 3 द1 5 ते1 सपुत्रा दानधाद्यास्तु(ब2 °रव), ब1 समक-दानधनाद्यांस्तु दे1 2 पशुदारधनाद्यान् (दे1 °कयान्) तु, दे3 मानुदाराधनाद्यास्तु, दे6 मासुदाराधनाद्यास्तु, दे8-10 मुवें मुए. सदाचारे विनष्टे तु, मुव सुतदारधनाद्यास्तु –d) ब1 2 दे8-10 मुवें. मुए मुव च (→तु)

४७ –a) दे2 मर्यादा ••••• –b) दे8 9 प्रतिष्ठान (→प्रतिष्ठार्थं) –c) ते1 दोर्भ्यांम् (→ब्रह्मा) –d) दे4 हितानि (→हिताय), दे8-10 मुवें मुए मुव वै (→च)

४८ –a) दे1 °व्यवस्थान, दे3 ते1 °व्यवस्थान्तु, मुव व्यवस्थाश्च (→व्यवस्था च) –b) का1 ब1 3 दे3 5 6 विभु (→प्रभु) –c) मुव °नश्चैव (→°नं चैव) –d) द1 प्र1 2 म1 °पिवर्जनम् (→°विवर्जितम्)

४९ –a) दे2 द1 प्र1 2 स्वप, दे4 ते1 -त्वेव, दे8 म1 मुवें, मुए मुव -न्यय, दे10 त्यय (→ष्वथ), का1 दे1 4 ते1 द1 प्र2 भिद्यन्ते (→विद्यन्ते) –b) दे1 प्र1 2 म1 गति° (→मति°), दे1 2 4 8-10 द1 प्र1 2 म1 मुवें मुए तथा (→सदा), ते1 मन्त्राभेदास्तथा नृणां –c) दे8 तदा (→तथा), दे1 श्रद्धा (→युद्ध) –d) प्र1 मत्वा नाम°, दे8-10 मुवें. मुए मत्वा वृद्धि°, प्र2 तत्त्वाराम° (→तत्त्वानाम°), दे8-10 मुवें मुए °विनिश्चय (→°विनिश्चय), ते1 तत्त्वानामपि निश्चयम्

५० –a) दे1 प्र1 देवम् (→वेदस्). –b) ब1 त्रेताग्निश्च, दे1 3 8 10 मुवें मुए मुव त्रिधा स्विह ते1 त्रेधा स्विह, प्र1 व्रतास्येन (→त्रेतास्विह), दे8 10 मुवें मुए मुव. विभाव्यते, म1 विशीर्यते (→विधीयते) –c) ब2 म1 वेद-व्यासस्, दे1 वेदाभ्यासैस्, दे3 वेदाभ्यासैश् (→वेदव्यासैश्); दे8 10 मुवें मुए मुव च (→तु) –d) दे1 व्यज्यते, दे8 10 मुवें मुए -यस्यते, प्र2 व्यास्यते, म1 व्यज्यत (→व्यस्यते)

५१ –a) का1 ब1 दे1 4 5 8-10 द1 प्र1 2 भेदा, दे1 3 ते1 मुवें मुए मुव वेदा, म1 वेदा, + वेद (→भेदाद्) –b) द8 9 विद्यन्ते (→भिद्यन्ते), दे5 चापि (→दृष्टि-), ब1 मुव °विभ्रमं (→°विभ्रमैः) –d) म1 °मन्त्र° (→°वर्ण°), दे8 °विपर्यय (→°विपर्ययैः)

संहिता ऋग्यजुःसाम्नां संहन्यन्ते श्रुतर्षिभिः ।
सामान्याद् वैकृताच्चैव दृष्टिभेदैः क्वचित् क्वचित् ॥५२
ब्राह्मणं कल्पसूत्राणि मन्त्रप्रवचनानि च ।
इतिहासपुराणानि धर्मशास्त्राणि सुव्रत ॥५३
अवृष्टिर्मरणं चैव तथैव व्याध्युपद्रवाः ।
वाङ्मनःकायजैर्दुःखैर्निर्वेदो जायते नृणाम् ॥५४
निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ।
विचारणाच्च वैराग्यं वैराग्याद् दोषदर्शनम् ॥५५
दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसंभवः ।
एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे स्मृता ॥५६
आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्तते ।
द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ॥५७ वे.१.२९.५१

इति श्रीकूर्मपुराणे षट्साहस्र्या संहितायां पूर्वविभागे सप्तविंशोऽध्यायः ॥२७॥

---

५२ दे6 ५२d ५४a ○ (द्र स) -a) दे5 8 10 साम्ना (→साम्नां) -b) दे1 सहन्यन्न, दे8-10 तै1 मुवँ मुए ससहृत्य, द1 ग्र2 म1 सदिश्यन्ते, ग्र1 सदिह्यन्ते (→संहन्यन्ते), दे1 2 तै1 मुरर्षिभि, दे3 शुणर्षिभि, दे4 द1 ग्र1 2 म1 महर्षिभि (→श्रुतर्षिभि), दे8-10 मुवँ मुए प्रोच्यन्ते परमर्षिभि -c) ग्र2 3 द1 ग्र1 2 म1 वैकृताश्चैव, दे6 वैकृत चैव (→वैकृताच्चैव), दे4 सामान्याश्च कृताश्चैव, दे8 10 मुवँ मुए मुब सामान्यो द्भावना चैव, तै1 सामान्याद्वैकृता चैव -d) ग्र2 वृष्टि°, म1 दृष्टि° (→दृष्टि°), दे1 °भेदो, दे3 4 °भेदा (→°भेदैः)

५३ दे6 ○ (द्र ५२ पा वि) -a) दे2 मन्त्र°, + कल्प° (→कल्प°) -b) दे8-10 मुवँ मुए मुब ब्रह्म° (→मन्त्र°), दे4 मन्त्रेण प्रसवानि च -d) दे5 ग्र1 सुव्रता, दे10 सुव्रत (→सुव्रत)

५४ दे6 8 ○ (द्र ५२ पा वि) -a) व० सदृष्टिर् दे3 प्रवृत्तिर् +प्रवृष्टिर्, तै1 प्रसूति (→प्रवृष्टिर्), दे2 चैतत् (→चैव) -b) दे2 तथा ते, दे3 6 दुर्भिक्ष (दे6 °क्ष) (→तथैव) दे2 उपद्रमा, +उपद्रवा (→उपद्रवा), दे8 10 मुवे मुए तथैवान्य द्युपद्रवा -c) दे1 3 8-10 तै1 मुवँ मुए दोषैर् (→दुःखैर्)

५५ -a) दे4 निर्वेदा (→निर्वेदाज्), दे8 शाश्वत (→जायते), द1 तस्माद्, दे3 6 येषां (→तेषां) -b) व2 सुख-, व3 दे5 दुःस (→दुःख), व3 दे1 4 -विचारणा, तै1 -विचारणे, ग्र2 विचारण (→विचारणा) -c) दे3 6 विचारणात्तु (→विचारणाच्च)

५६ -a) का1 स्पर्शनाच्चैव, तै1 दर्शनादेव, ग्र2 दर्शन चैव (→दर्शनाच्चैव) -c) दे10 एषो, ग्र2 एष, म1 एषां (→एषा), दे1 राजस् (→रजस्) -d) व3 वृष्टिर् (→वृत्तिर्), म1 वा (→वै), दे8-10 पापिका (दे9 °क) (→द्वापरे), दे1 6-10 मुवँ मुए मुब द्विजा, द1 ग्र2 स्थिता (→स्मृता), तै1 व्यक्तिरेवागद द्विजा

५७ -a) का1 दे5 च, व1-3 दे3 6 न (→तु), दे4 द1 ग्र1 2 म1 आद्ये कृतेऽस्ति यो धर्मस् -b) का1 दे2 प्रवर्द्धते, दे1 सप्रवर्तते (→प्रवर्तते) -c) दे4 5 व्याकुलो, म1 द्वापरे (→व्याकुली-), दे4 तै1 द1 ग्र1 °भूत (तै1 °ता), म1 भूय (→भूत्वा), ग्र2 द्वापरे विपरीताश्च -d) दे4 ग्र2 तै1 प्रण- (दे4 °न) श्यन्ति (→प्रणश्यति)

पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

पुराणनाम—का1 दे1 4 8-10 ग्र1 2 मुवँ मुए इति श्रीकूर्मपुराणे, व1 इति कौर्मे, व2 3 दे2 3 6 म1 इति कूर्मपुराणे, दे5 इति श्रीकौर्मे महापुराणे, तै1 इत्यादिमहापुराणे श्रीकौर्मे, मुब इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम—व2 दे4 तै1 ग्र1 2 म1 ○, का1 युगधर्मकीर्तनं नाम, व1 3 दे5 युगधर्मानुकीर्तनं नाम, दे1 युगधर्मकीर्तने, दे2 6-10 मुब युगधर्मानुकीर्तने, दे3 8 युगधर्मानुकीर्तन (दे3 °ना) नाम, मुवँ मुए युगधर्मानुकीर्तनं नाम अध्यायसंख्या—दे8 ○, का1 व1 3 दे3 5 ग्र1 षड्विंशोऽध्यायः, व2 ॥२६॥, दे1 6 9 मुवँ मुए एकोनत्रिंशोऽध्यायः, दे2 षड्विंशतितमोऽध्यायः ॥२६॥, द1 षड्विंशोऽध्यायः ॥२६॥, दे10 एकोनत्रिंशोऽध्यायः ॥२९॥ श्रीकृष्णार्पणमस्तु, तै1 सप्तविंशोऽध्यायः, ग्र2 म1 सप्तविंशोऽध्यायः, मुब सप्तविंशोऽध्यायः ॥२७॥

# २८

व्यास उवाच ।*

वं.१.३०.१ तिष्ये मायामसूयां च वधं चैव तपस्विनाम् ।
साधयन्ति नरा नित्यं तमसा व्याकुलीकृताः ॥१
कलौ प्रमारको रोगः सततं क्षुद् भयं तथा ।
अनावृष्टिभयं घोरं देशानां च विपर्ययः ॥२
अधार्मिका अनाचारा महाकोपाल्पचेतसः ।
अनृतं वदन्ति ते लुब्धास्तिष्ये जाताः सुदुःप्रजाः ॥३
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ।
विप्राणां कर्मदोषैश्च प्रजानां जायते भयम् ॥४
नाधीयते कलौ वेदान् न यजन्ति द्विजातयः ।
यजन्त्यन्यायतो वेदान् पठन्ते चाल्पबुद्धयः ॥५
शूद्राणां मन्त्रयौनैश्च संबन्धो ब्राह्मणैः सह ।
भविष्यति कलौ तस्मिञ् शयनासनभोजनैः ॥६
राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयन्ति च ।
भ्रूणहत्या वीरहत्या प्रजायेते नरेश्वर ॥७

---

२८

[न1 पुस्तके अयमध्यायो नास्ति, दे1 पुस्तके २८-३३ अध्याया न सन्ति, अध्यायारम्भे दे10 अधिकम्-श्रीगणेशाय नमः ]

* द1 ⊙, दे3 व्यास उ., दे10 व्यास उवाच, तै1 श्री शिव, + व्यास, प्र1 2 म1 व्यास

१ दे3 १c-३d ⊙ –a) दे5 असूया च, तै1 ह्यसूया च (→असूया च), दे10 तिष्ये माता प्रमूढ वेद्, म1 तिष्ये माया-मयस्थाय –b) दे8-10 द्वय चैव, दे3 तै1 भय चैव, दे8 वैर चैव (→वध चैव), दे8-10 तपस्विन (→तपस्विना) –c) प्र2 नित्या (→नित्य) –d) दे8 व्याकुला (→व्याकुली-).

२. दे3 ⊙ –a) दे8 द1 प्र1 2 म1 प्रवर्त्तते, दे10 प्रमारका (→प्रमारको), दे9 राग, दे10 रोगा (→रोग) –b) प्र2 कथिता (→भतथ) –c) दे2 घेष (→घोर)

३ दे3 ⊙ –a) तै1 पधार्मिकम् (→अधार्मिका[ ]), दे8-10 निराधारा, मुवं मुए मुब निराहारा (→अनाचारा) –b) व1-3 दे8 8-10 तै1 प्र1 2 मुवं मुए मुब °तेजसः, द1 °मेघग (→°चेतस) –c) दे10 अमृत (→अनृत), दे8 मुवं मुए मुब वदन्ते, दे9 द1 प्र1 2 ब्रुवन्ति, दे10 वदन्तो (→वदन्ति), का1 व2 3 दे9 द1 प्र1 म1 सुखाश्च, दे8-10 मुवं मुए मुब सुब्धा (→ते सुब्धा); व1 अनृतवदन्ति सुब्धाश्च, दे8 अनृत वक्ति सुब्धाश्च, दे8 वदन्त्यनृत त सुब्धा, ते1 अनृता ह्यतिसुब्धाश्च –d) दे1 तिष्य ता, समजा प्रजा, तै1 दुर्बलाश्च सुदुर्मदा, द1 प्र1 2 म1 तिष्या (प्र1 2 °तिष्य°) जाताश्च दु मिता

४ –a) व2 दुर्नीतैर्, द1 दरिष्टैर्, प्र1 दरिष्टैर्, + दुरिष्टैर्, प्र2 पदुष्टैर्, म1 अदुष्टैर् (→दुरिष्टैर्), तै1 दुरिष्टे महति चेता –d) द1 प्र1 2 म1 पालन (→जायते).

५ –a) का1 दे2 4-6 द1 प्र1 म1 नाधीयन्ते, तै1 नाधीयन्त (→नाधीयते), का1 दे8-10 तै1 मुवं मुए मुब. उदर, दे2 द्विवर (→कलौ), म1 वेदान्, + देवान्, दे4 6 तै1 द1 प्र1 वेदा, प्र2 वेद, ग1 देव (→वेदान्) –c) व2 3 दे2 यपन्त्य°, दे3 यजन्त्य°, दे4 यजन्तो° (→यजन्त्य°), व1 देवान्, + वेदान्, द1 प्र1 2 म1 देवान् (→वेदान्), दे8-10 मुवं. मुए मुब यजन्ति यज्ञान् वेदांश्च, तै1 सजन्त्यदोषतो जाय(या). –d) दे4 पठन्ते चा°, द1 प्र1 पतन्ते चा°, प्र2 म1 पतन्त्ये (म1 °न्ये) चा° (→पठन्ते चा°), तै1 हरन्ते ह्यल्पबुद्धय

६. –a) का1 व2 दे2 8-10 तै1 मुवं मुए मुब °योनैश्च, द1 म1 °योनिस्तु, प्र1 °योगस्तु (→°यौनैश्च), प्र2 शूद्राणामल्प-योनिस्तु –b) दे3 6 स संबन्धोऽपि ब्राह्मणैः. –c) व2 दे6 10 द1 प्र2 भविष्यन्ति, दे1 भवन्ति (→भविष्यति). –d) व2 दे1 शयनाशन° (→शयनासन°).

७ –b) व2 हारयन्ति, दे4 वादयन्ति, दे5 द1 वधयन्ति, तै1 व्यथयन्ति (→बाधयन्ति), व3 ह (→च) –c) दे2 ब्रह्म° (→वीर°), प्र1 °हत्या (→°हत्या) –d) व2 दे5 8-10 मुवं. मुए मुब प्रजायेत, व1 प्रजायन्ते, तै1 द1 प्र1 2 म1 प्रजायन्ते (→प्रजायेते), दे2 8 तै1 मुवं मुए मुब नरेश्वरे, द1 प्रजामुखे, दे5 9 10 नरेश्वर 1, द1 प्र1 2 म1 प्रजासु च (द1 म1 वै) (→नरेश्वर)

पश्च पर दे4 द1 प्र1 2 म1 अधिकम्—

*न प्रमाणं श्रुतेरस्ति नृणां चाधर्मसेवनात् ।

[–1) दे4 द1 चाधर्म° (→चाधर्म°) ]

स्नानं होमं जपं दानं देवतानां तथाऽर्चनम् ।
अन्यानि चैव कर्माणि न कुर्वन्ति द्विजातयः ॥८
विनिन्दन्ति महादेवं ब्राह्मणान् पुरुषोत्तमम् ।
आम्नायधर्मशास्त्राणि पुराणानि कलौ युगे ॥९
कुर्वन्त्यवेददृष्टानि कर्माणि विविधानि तु ।
स्वधर्मेऽभिरुचिर्नैव ब्राह्मणानां प्रजायते ॥१०
कुशीलचर्याः पाषण्डैर्वृथारूपैः समावृताः ।
बहुयाचनको लोको भविष्यति परस्परम् ॥११

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥१२
शुक्लदन्ता जिनाख्याश्च मुण्डाः काषायवाससः ।
शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते ॥१३
शस्यचौरा भविष्यन्ति तथा चैलाभिमर्षिणः ।
चौराश्चौरस्य हर्तारो हर्तुर्हर्ता तथाऽपरः ॥१४
दुःखप्रचुरताल्पायुर्देहोत्सादः सरोगता ।
अधर्माभिनिवेशित्वात् तमोवृत्तं कलौ स्मृतम् ॥१५ वं १.३०.१५

---

८ –a) दे4 जयो (→जप), दे2 स्नान दान तथा होम, द1 म1 2 म1 स्नान दान ज(प) तं]शो ह्रोमो –b) दे6 दैवताना, ते1 देवाना च (→देवतानां), व1 तदा° (→तथा°) –c) दे2 ततो ह्यपि न कर्माणि°, दे8 10 ते1 मुवं मुए मुव तथान्यानि च कर्माणि

९ –b) व1 दे3 8 ते1 ब्राह्मणा, द1 श1 2 म1 ब्रह्माण (→ब्राह्मणान्), म1 पुरुषोत्तम (→पुरुषोत्तमम्) –c) का1 व3 दे5 भ्राम्नाय, व2 ते1 द1 प्र1 म1 धाम्नाय (→आम्नाय-), का1 व1-3 दे3 5 8 -सव° (→ धर्म°)

१० –a) दे5 कुर्युर्वं वेदाख्या • नि –b) दे3 6 कुर्वाणि (→कर्माणि), का1 व1-3 दे3,5 8 प्र2 मुव च, ते1 तु, + च (→तु) –c) दे8 स्वकर्म, प्र2 स्वधर्मो (→स्वधर्मे), दे8 10 मुवं मुए मुव तु, द1 प्र1 2 हि (→[म]भि), दे5 °शुचिर् (→°रुचिर्), व2 स्वधर्म व्यभिचीर्णं च, ते1 स्वयमेव विरोध तु –d) द1 प्र1 2 म1 कलौ युगे (→प्रजायते)

११ दे2 ११d १२a ○ –a) व2 कुशोद° (→कुशील°) दे4 5 6 °वर्या (दे3 °र्यं) ते1 °वण, प्र2 °पर्यं, म1 °चण्डा (→°चर्या), व1 3 पाषंडं, ते1 पापण्डा, प्र2 पाखण्डे (→पाषण्डै) –b) द1 वृथा° (→वृथा°), व1 3 दे3 4 8 समावृत (→समावृता) –c) दे5 6 8-10 मुव मुए मुव °यानका द1 प्र1 म1 °याजनका (→°याचनको), व1 3 दे6-10 मुव मुए मुव लोका, प्र2 द1 म1 लोक (→लोको), ते1 बहुधावनता लाभे, प्र2 बहुधा याजन लोके –d) दे8-10 मुव मुए मुव भविष्यन्ति, ते1 निपिडन्ति (→भविष्यति), प्र2 पुरस्पर (→परस्पर)

१२ दे2 ○ –a) दे10 जगाख्याश्च (→जनपदा) –b) ते1 शैव° (→शिव°), का1 व1 दे10 चतुष्पदा (→चतुष्पथा) –c) व1 प्रमादा (→प्रमदा), का1 व1 3 दे3 6 8 10 मुवं मुए मुव °शूलाश्च (→°शूलिन्य)

१३ दे4 a ○ –a) का1 जिनाख्या च, द1 3 दे2 3 5 6 मुव जिता (व2 दे2 °त) श्चाश्च, ते1 क्षीरगुप्ता, (→जिनाख्याश्च), द1 प्र2 म1 शुक्लदना (द1 °ता) मिताक्षाश्च, प्र1 शुक्लदन्ता मिलिताक्षा –b) दे9 भण्डा, दे4 भण्डा (→मुण्डा), दे4 6 प्र2 °वासका, म1 °वासिन (→°वासस), ते1 कषायवदन(स)ना सदा –d) व1 समवस्थिते (→समुपस्थिते)

१४ दे5 cd ○ –a) व3 शस्य, दे5 सस्या, दे10 यत्र (→शस्य-), दे4 सत्सु बाधा भविष्यन्ति, द1 प्र1 2 म1 सत्सु बाधा (म1 °धा) करिष्यन्ति, ते1 सर्वे बाधा भविष्यन्ति –b) का1 दे5 वेला, व2 3 दे3 8 10 ते1 मुवं मुए मुव वेला-, दे4 चैवा- (→चैला-), व3 दे3 8 गपण, दे5 -नापिण, दे8 10 मुवे मुए मर्शिन, ते1 -मशवा (→-मर्षिण), द1 तथा क्रैडालदुष्टिन, प्र1 तथा वैलालवृत्तिन, प्र2 म1 बकवैलालवृत्तय (प्र2 °त्तिन) –c) का1 दे8-10 मुवं मुए मुव चौराञ्चो (मुव °चौ) राश्च, दे10 चौराञ्चोलाश्च द1 प्र2 चाराश्चोरस्य (→चौराश्चौरस्य), ते1 म1 चाराश्चोराश्च भर्तारो, प्र1 चाराश्चोरहिरयो भर्ता –d) व3 दे3 6 हन्तुर् (→हर्तुर्), व3 मुवं मुए हन्ता (→हर्ता), ते1 दन्तहर्ता तथा पर, द1 वार्ताहर्ता तथापर, प्र1 भर्तुर्हर्तुस्तथास्त्रिय, प्र2 भर्तुर्हर्ता तथा पर म1 पाथ भर्तास्तथापरे

१५ –a) व1 दु स, प्र2 दु ख, म1 दु खे (→दु ख-), दे4 प्रहरा॰, दे8-10 मुवं मुए प्रचुरम-, प्र1 प्रचुरिता-, प्र2 म1 प्रोचुरया (→प्रचुरता-), ते1 ह्यल्प. (→[अ]-ल्पायु) –b) का1 देहोत्पार, व3 दोहात्साद, दे2 9 10 देहोत्साह (→देहोत्साद), ते1 दोषशीलातरा गता, द1 देहात्साह सरोगता, प्र1 देहे चात्महरोगता, प्र2 म1 देहमासाहरोगता (म1 °त) –c) व2 °निवेशी च, दे8-10 मुवं मुए °निवेशत्वात्, मुव निवेशित्व (→°निवेशित्वात्) –d) दे2 तमोवृत्ति, दे4 तमोवृत्ते, ते1 तथावृत्ति (→तमोवृत्त), व2 दे2 युगे, ते1 स्मृता (→स्मृतम्)

वें १.३० १६ कापायिणोऽथ निर्ग्रन्थास्तथा कापालिकाश्च ये ।
वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे ॥१६

आसनस्थान् द्विजान् दृष्ट्वा न चलन्त्यल्पबुद्धयः ।
ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपजीविनः ॥१७

उच्चासनस्थाः शूद्रास्तु द्विजमध्ये परंतप ।
ज्ञात्वा न हिंसते राजा कलौ कालबलेन तु ॥१८

पुष्पैश्च हसितैश्चैव तथान्यैर्मङ्गलैर्द्विजाः ।
शूद्रानभ्यर्चयन्त्यल्पश्रुतभाग्यबलान्विताः ॥१९

न प्रेक्षन्तेऽर्चिताश्चापि शूद्रा द्विजवरान् नृप ।
सेवावसरमालोक्य द्वारि तिष्ठन्ति च द्विजाः ॥२०

वाहनस्थान् समावृत्य शूद्रान् शूद्रोपजीविनः ।
सेवन्ते ब्राह्मणास्तत्र स्तुवन्ति स्तुतिभिः कलौ ॥२१

अध्यापयन्ति वै वेदान् शूद्रान् शूद्रोपजीविनः ।
पठन्ति वैदिकान् मन्त्रान् नास्तिक्यं घोरमाश्रिताः ॥२२

तपोयज्ञफलानां च विक्रेतारो द्विजोत्तमाः ।
यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ॥२३

नाशयन्ति ह्यधीतानि नाधिगच्छन्ति चानघ ।
गायन्ति लौकिकैर्गानैर्दैवतानि नराधिप ॥२४

वामपाशुपताचारास्तथा वै पाञ्चरात्रिकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥२५

---

१६ द1 म1 cd ○ -a) ब2 स्वाध्यायिनोऽथ, द1 श1 2 म1 स्वाध्यायहीना (→कापायिणोऽथ), द1 श1 निर्गन्था (→निर्ग्रन्था), तै1 भिक्षाशिनोऽथ दुर्गन्धा -b) श3 तथा कापालिकानि च, दे3 तथा कापालिकाश्च ये, द1 श1 2 म1 तथा काशाय काश् (श1 °काश्) च ये -c) तै1 प्राय (→चान्ये) -d) दे2 श1 2 च य (→परे)

१७. दे4, १७d-२०a ○ (ह स) -a) तै1 श्रयास्का-रान् (→आसनस्थान्) -b) दे6 नमस्यन्त्य°, दे8-10 मुर्वे मुए मुब चालयन्त्य°, तै1 नर्चयन्त्य°, द1 न चलन्त° (→न चलन्त्य°) -d) दे5 राज्ञो°, तै1 यज्ञो° (→राजो°); ब2 श2 °सेविन (श2 °व), श1 °सेविता (→°जीविन), दे4 शूद्रा द्विजवरा नृप

१८ दे4 ○, द1 श1 2 म1 १८a-२०b ○ -a) दे8-10 तै1 मुर्वे मुए मुब च (→तु) -c) का1 ज्ञात्वो (→ज्ञात्वा), दे5 राज्ञा (→राजा) दे8-10 मुर्वे मुए मुब द्विजासनकरो राजा, तै1 दत्त्वा हरन्ति राजानो -d) तै1 लोकानामहिते रताः

१९ दे4 द1 श1 2 म1 ○, दे10 १९c-२० d ○, दे3 १९d-२१ a ○ -a) दे8 10 मुर्वे मुए मुब मूपर्णैश् (→हसितैर्) -ab) तै1 पुष्पेऽपि फले चापि निर्गन्धश्च कलौ द्विजा -c) दे8 9 मुर्वे मुए मुब परिचरन्त्य° (→अभ्यर्च यन्त्य°) -cd) तै1 न श्रेयसि रताश्चापि शूद्राद्या नृवरा नृपा

२० दे3 10 ○, तै1 द1 श1 2 म1 ab ○, दे4 a ○ -a) ब1 प्रेक्ष्यन्ते (→प्रेक्षन्ते), का1 ब1 2 दे2 5 5 8 9 मुब मर्चितास्चापि (→र्चिताश्चापि) -c) तै1 सदा° (→सेवा°) -d) दे8 9 मुर्वे मुए मुब द्वारे (→द्वारि), का1 तै1 वै (→च),

२१ दे3 4 तै1 २१ c-२२ b ○ (ह, स) -a) का1 दे5 समारुत्य (→समावृत्य) -b) ब1 दे6 शूद्रा, तै1 विप्रा (→शूद्रान्), द1 °सेविन (→°जीविनः) -c) दे9 10 सेवन्ति (→सेवन्ते), दे8-10 मुर्वे मुए मुब तास्तु (→तत्र) -d) ब1-3 दे2 3 श्रुतिभि (→स्तुतिभि),

२२ दे4 8 तै1 ab ○ -a) ब1 द1 देवान् (→वेदान्) -b) द1 श1 2 म1 शूद्राणां शूद्रसेवका -c) दे3 पचन्त्य-, दे4 त्यजन्ति (→पठन्ति), ब2 मोहात् (→मन्त्रान्), दे8 10 मुर्वे मुए मुब एव निर्वेद (दे10 °दि)कानर्थान्. -d) तै1 ब1 श1 2 म1 नास्तिका (→नास्तिक्य), म1 हृपं (→घोरम्), ब2 श्रास्यिता (→श्राश्रिता)

२३ -a) दे4 ततो म1 तथा (→तपो-), दे8-10 मुर्वे मुए मुब कलानां (→फलानां), दे2 8-10 तै1 मुर्वे मुए मुब तु (→च) -c) दे2 तु (→च), तै1 यत्नेनापहरिष्यन्ति -d) श2 [श]ति (→[श]श)

२४ -a) दे4 8-10 मुर्वे मुए मुब नाशयन्त (→नाशयन्ति), दे8 10 मुए मुब स्वकः धर्म, तै1 च क्रितानि मुव स्वकान् धर्मान् (→ह्यधीतानि), घ2 नाशयन्त्यश्रुतीतानि -b) दे8 10 मुर्वे मुए मुब तत्पदम्, तै1 वानधा, द1 म1 शानय (→चानघ) -c) दे6 तै1 गीतैर् (→गानैर्) -d) ब2 3 दे2 4-6 8 द1 मुब दैवतानि (→दैवतानि), ब3 नराधिप, दे2 5 8 10 नराधिपा (→नराधिप)

२५ दे5 b ○ -a) ब2 3 दे4 द1 श2 म1 मुर्वे वामा, तै1 पापा (→वाम-) -b) ब2 दे4 पच° (→पाञ्च°)

ज्ञानकर्मण्युपरते लोके निष्क्रियतां गते ।
कीटमूषकसर्पाश्च धर्षयिष्यन्ति मानवान् ॥२६
कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै ।
दधीचशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ॥२७
निन्दन्ति च महादेवं तमसाविष्टचेतसः ।
वृथा धर्मं चरिष्यन्ति कलौ तस्मिन् युगान्तिके ॥२८
ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः ।
सर्वे ते च भविष्यन्ति ब्राह्मणाद्याः स्वजातिषु ॥२९
विनिन्दन्ति हृषीकेशं ब्राह्मणान् ब्रह्मवादिनः ।
वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः ॥३०
मोहयन्ति जनान् सर्वान् दर्शयित्वा फलानि च ।
तमसाविष्टमनसो वैडालवृत्तिकाधमाः ॥३१
कलौ रुद्रो महादेवो लोकानामीश्वरः परः ।
स देवता भवेन्नृणां देवतानां च दैवतम् ॥३२
करिष्यत्यवताराणि शंकरो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥३३
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ।
सर्ववेदान्तसारं हि धर्मान् वेदनिदर्शितान् ॥३४ वै १.३०.३५

२६ –a) दे8 मुवँ मुए मुव ज्ञाने (→ज्ञान-), व1 2 °रतो (व2 °दा), दे4 ग्र1 2 म1 °हृते, दे9 10 मुवँ मुए, मुव °गते, द1 °हृते (→°रते) –c) व1-3 दे3 6 8-10 ग्र1 2 म1 मुवँ मुए मुव °मूषिक° (→°मूषक°), दे5 कीटा मुख + सर्पाश्च –d) दे8-10 मुवँ मुए मुव मानुषान् (→मानवान्)

२७ –c) दे5 दधीचि, ते1 द1 दधीचि (→दधीच), दे8 10 मुवँ मुए देवीशापविनिर्दग्धा –d) दे3 दग्धा, दे5 दत्ते (→दक्षा-)

२८ दे5 d O –a) व1 निन्दन्ति स, व2 निन्दयन्ति (→निन्दन्ति च) –b) ते1 -तेजस (→-चेतस) –c) ग्र1 म1 वृथा (→वृथा), दे4 धर्मे, दे8 धमश् (→धर्मं) –d) का1 व2 3 दे3 मुव युगान्तिगे, दे2 युगेऽन्तिमे, द1 ग्र1 2 म1 युगान्तरे (→युगान्तिके), दे8-10 तस्मिन् कलौ युगान्तिके

अत पर व3 दे2 6 मुवँ मुए मुव अधिकम्—

*सर्वे वीरा भविष्यन्ति ब्राह्मणाद्या स्वजातिषु ( = २९cd)

[दे2 तेन (→वीरा), दे6 ********, मुए सर्वं तेभ्य-स्तरिष्यन्ति (→सर्वे वीरा भविष्यन्ति)]

२९ दे6 O, व2 3 दे2 cd O, दे3 २९c ३१b O, दे4 8 10 द1 ग्र1 मुवँ मुए मुव सर्वे ते (दे4 °वा) चरिष्यन्ति, ग्र2 सर्वे नैव वदिष्यन्ति, म1 सर्वे ह्यविजनिष्यन्ति –d) व1 ब्राह्मणाभ्याऽ स्व, दे4 ग्र1 ब्राह्मणाद्यासु, द1 ब्राह्मणाद्येषु (→ब्राह्मणाद्या स्व), दे8 10 मुवँ मुए मुव ब्राह्मणास्तासु योनिषु

३० दे3 O –a) व1 विनन्दन्वि, दे4 निन्दन्ति च, (→विनिन्दन्ति), दे5 महादेव, दे10 ऋषीकेश (→हृषीकेश) –b) ते1 शिवं च (→ब्राह्मणान्), दे8 वेद° (→ब्रह्म°) –c) ते1 ग्र2 म1 वेदबाह्या वृथा(ते1 दुरा) चारा –d) ते1 दुरात्मानो, द1 ग्र1 वृथाचारा, ग्र2 वृथाचारा (→दुराचारा[:]), ते1 वृथाशया, द1 ग्र1 वृथाधया (→वृथाश्रमा)

ग्र2 b c मध्ये अधिकम्—

*सर्वेषूक्त पुराणेषु वेदधर्म विनिन्दति ।
कश्चिदुक्ता प्रोक्षयन्ति तेन सर्वं श्मशानि वै ॥

३१ दे2 ab O –a) दे8 मोहयित्वा (→मोहयन्ति), ग्र2 नरान् (→जनान्) –b) का1 व1 दे4-6 ते1 द1 ग्र2 म1 तु, दे2 वै (→च) –d) व3 वैताल-, ते1 भेताल-, द1 ग्र1 2 म1 वैलाल- (ग्र2 °ला°) (→वैडाल), का1 व1-3 दे3-4 8 9 द1 मुवँ मुए मुव –व्रतिका-, दे5 6 –व्रतका, ते1 –प्रतिमा-, म1 –प्रतिका- (→ वृत्तिका-), व2 नरा (→[ग]धमा).

३२ –b) म1 देवानाम (→लोकानाम), दे3 ते1 प्रभु (→पर) –c) का1 तदेवसाधनो नृणां, दे5 न देवनस्तपो नृणा, दे8 10 मुवँ मुए मुव सदेव साधये (दे10 °ने) नृणा –d) म1 देवनाना (→देवताना), ते1 देवतायाश्च देवता

३३ –d) व2 दे2 लोकाना (→भक्ताना)

३४ –a) व1 दे4 5 6 10 द1 म1 मुवँ मुए मुव °देक्ष्यन्ति, दे3 °देक्ष्यमि, ग्र1 °देष्यति (→°देक्ष्यति), दे10 स ज्ञान, ते1 न ज्ञान द1 ग्र2 म1 तच्चाय, ग्र1 तत् सूत्र (→तज्ज्ञान) –c) ते1 ब्रह्म° (→सर्व°), व2 °सारान् (→°सार), दे8 च (→हि), दे3 सर्वं ****** –d) का1 दे4 5 धर्माद् (→धर्मान्), मुव देव° (→वेद°), दे2 दर्शितात्, दे4 5 6 10 द1 ग्र1 2 म1 दर्शनात् (दे8 9 °नान्) (→दर्शितान्), दे3 स्वधर्माद्विदर्शितात्, ते1 धर्मत्वेन निदर्शिता, ग्र1 2 म1 सर्वस्माद्वेतु दर्शनात्

अत पर मुवँ पुस्तके अधिकम्—

*सवचर्णान् समुद्दिश्य स्वधर्मा ये निदर्शिता । ( = ३४cd)

वें.१.३०.३६ ये तं विप्रा निषेवन्ते येन केनोपचारतः ।
विजित्यकलिजान् दोषान् यान्ति ते परमं पदम् ॥३५
अनायासेन सुमहत् पुण्यमाप्नोति मानवः ।
अनेकदोषदुष्टस्य कलेरेष महान् गुणः ॥३६
तस्मात् सर्वप्रयत्नेन प्राप्य माहेश्वरं युगम् ।
विशेषाद् ब्राह्मणो रुद्रमीशानं शरणं व्रजेत् ॥३७
ये नमन्ति विरूपाक्षमीशानं कृत्तिवाससम् ।
प्रसन्नचेतसो रुद्रं ते यान्ति परमं पदम् ॥३८
यथा रुद्रनमस्कारः सर्वकर्मफलो ध्रुवम् ।
अन्यदेवनमस्कारान्न तत्फलमवाप्नुयात् ॥३९
एवंविधे कलियुगे दोषाणामेकशोधनम् ।
महादेवनमस्कारो ध्यानं दानमिति श्रुतिः ॥४०
तस्मादनीश्वरानन्यान् त्यक्त्वा देवं महेश्वरम् ।
समाश्रयेद् विरूपाक्षं यदीच्छेत् परमं पदम् ॥४१
नार्चयन्तीह ये रुद्रं शिवं त्रिदशवन्दितम् ।
तेषां दानं तपो यज्ञो वृथा जीवितमेव च ॥४२
नमो रुद्राय महते देवदेवाय शूलिने ।
त्र्यम्बकाय त्रिनेत्राय योगिनां गुरवे नमः ॥४३
नमोऽस्तु वामदेवाय महादेवाय वेधसे ।
शंभवे स्थाणवे नित्यं शिवाय परमेष्ठिने ।
नमः सोमाय रुद्राय महाग्रासाय हेतवे ॥४४
प्रपद्येऽहं विरूपाक्षं शरण्यं ब्रह्मचारिणम् ।
महादेवं महायोगमीशानं चाम्बिकापतिम् ॥४५
योगिनां योगदातारं योगमायासमावृतम् ।

---

३५ –a) दे3 8 तान्, ते1 तु, द1 ग्र1 च, ग्र2 म1 न (→तं), दे4 येन विप्रा यजन्ते वै, दे10 ये त प्रेता निषिञ्चन्ति –b) ते1 ज्ञान वेदोपचारत, ग्र1 2 म1 येन केनाप्युपायत –c) व1 ग्र1 2 म1 कर्मजान् (→कलिजान्), व2 लोकान् (→दोषान्) –d) व2 ते यान्ति परम पदम्

३६ द1 ३६a-३८d ⊙ (द्र स), म1 ३६a-३७b '°श्वर' यावत् खण्डितम् –b) दे10 आप्नोति (→आप्नोति) –c) ते1 अत्यन्त° (→अनेक°) –d) व2 एव, व3 दे8 10 मुर्वें मुए मुव एको (→एष), व1 3 दे5 महागुण (→महान् गुण), ग्र2 कलावेष महान् गुण

३७ द1 ○ (द्र ३६ पा टि), म1 ab ⊙ –c) दे5 विश्वेशान्, दे10 विशेषात् (→विशेषाद्), दे8 10 ब्राह्मणान्, ते1 ब्रह्मणो (→ब्राह्मणो) –d) दे8 10 व्रज (→व्रजेत्)

३८ द1 ○ –a) ते1 विदन्ति (→नमन्ति) –b) व1 कीर्ति° (→कृत्ति°) –c) वे1 प्रशस्ता, ते1 प्रनन्य- (→प्रसन्न-), दे10 °चेतस (→°चेतसो) –d) का1 व1 3 दे3 6 ग्र1 2 म1 यान्ति ते (→ते यान्ति)

३९ –a) का2 रुद्र°+हर° (→रुद्र°) –b) का1 व2 दे8 10 ग्र1 2 म1 मुर्वें मुए –काम,° मुव का॰ (→कर्म°), का1 व1 दे8 9 मुर्वें मुए मुव °फला ध्रुव, दे4 फलावृन, दे5 °फलोद्भव, ते1 द1 ग्र1 2 म1 फलप्रद (→°फलो ध्रुव) –c) व1 नमस्कारान्, व1 म1 °नमस्कार, ग्र1 °नमस्कारो (→नमस्कारात्) –d) एतत्, दे5 यत्र तत्, ग्र2 वत्तत् (→न तत्), ते1 पुण्य° (→फल°)

४० –b) का1 व1 दे2 एष, व2 दे5 8-10 मुर्वें मुए मुव. एष (→एक-), दे10 °शोभन, ते1 °बोधन, म1 °शोषण (→°शोधन) –d) व2 परा मति, व3 परा गति (→इति श्रुति)

४१. द1 ग्र1 2 म1 cd ⊙ –a) का1 व2 3 दे2 3 5 6 मुव अधीश्वरान्, दे4 अनीश्वराद्, ते1 विश्वेश्वरात् (→अनीश्वरान्), ते1 ग्र2 अन्य (→अन्यान्) –b) दे3 देव- (→देवं), ग्र2-मनस (सदा) देवन्महेश्वरम् –d) दे4 8 ईसेत (→इच्छेत्)

४२. –a) व2 तु, ते1 च, म1 स्म (→[इ]ह) –b) ते1 शिव त्रिभुवनेश्वरम् c) व2 दे3 6 जपो (→तपो), ग्र2 म1 यज्ञा (→यज्ञो) –d) दे10 जीवन° (→जीवित°)

४३ –a) द1 ग्र1 2 म1 देवाय (→रुद्राय) –b) दे5 देवाय शूलपाणिने –c) ते1 2 म1 त्रिनेत्राय (→त्रिनेत्राय) –d) द1 ग्र1 2 म1 पतये (→गुरवे)

४४ –a) व1 2 वासु°, दे4 8-10 द1 ग्र1 2 म1 मुर्वें मुए मुव देव° (→वाम°) –b) दे2 धीमते (→वेधसे) –d) दे2 परतराय च, ग्र2 म1 परमात्मने (→परमेष्ठिने) –f) ते1 नीलग्रीवाय (→महाग्रासाय)

४५ व1 ४५b-४७a ⊙ –b) दे2 4 8-10 शरण (→शरण्य), दे2 °चारिणा, दे1 °चारिणा (→°चारिणम्) –d) ग्र2 त्वम्बिका° (→चाम्बिका°) –cd) दे3 महायोगिनमीशान चाम्बिकापतिमीश्वर

४६ व1. ⊙, दे9 ab ⊙, दे3 6 cd ○ (द्र स) –a) दे4 द1 ग्र1.2 योगिन (→योगिनां), ग्र2 योगदातारं

योगिनां गुरुमाचार्यं योगिगम्यं पिनाकिनम् ॥४६
संसारतारणं रुद्रं ब्रह्माणं ब्रह्मणोऽधिपम् ।
शाश्वतं सर्वगं शान्तं ब्रह्मण्यं ब्राह्मणप्रियम् ॥४७
कपर्दिनं कालमूर्तिममूर्तिं परमेश्वरम् ।
एकमूर्तिं महामूर्तिं वेदवेद्यं दिवस्पतिम् ॥४८
नीलकण्ठं विश्वमूर्तिं व्यापिनं विश्वरेतसम् ।
कालाग्निं कालदहनं कामदं कामनाशनम् ॥४९
नमस्ये गिरिशं देवं चन्द्रावयवभूषणम् ।
विलोहितं लेलिहानमादित्यं परमेष्ठिनम् ।
उग्रं पशुपतिं भीमं भास्करं तमसः परम् ॥५०
इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः ।
अतीतानागतानां वै यावन्मन्वन्तरक्षयः ॥५१
मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै ।
व्याख्यातानि न संदेहः कल्पः कल्पेन चैव हि ॥५२
मन्वन्तरेषु सर्वेषु अतीतानागतेषु वै ।
तुल्याभिमानिनः सर्वे नामरूपैर्भवन्त्युत ॥५३
एवमुक्तो भगवता किरीटी श्वेतवाहनः ।
बभार परमां भक्तिमीशानेऽव्यभिचारिणीम् ॥५४
नमश्चकार तमृषिं कृष्णद्वैपायनं प्रभुम् ।
सर्वज्ञं सर्वकर्त्तारं साक्षाद् विष्णुं व्यवस्थितम् ॥५५
तमुवाच पुनर्व्यासः पार्थं परपुरंजयम् ।
कराभ्यां सुशुभाभ्यां च संस्पृश्य प्रणतं मुनिः ॥५६ वं १.३०.५८

---

(→यागदातार) –c) ब2 योगिना परमाचार्यं, डे1 योगिना योगसिद्धयर्थं –d) का1 व2 3 दे3 5 6 ते1 प्र2 म1 मुव योग° (→योगि°), द1 प्र1 2 म1 सनातन (→पिनाकिन)

४७ –a) दे2 °तारिण, व2 मुव °नाशक, दे4 °तारणं (→°तारण), ब2 घोर, दे2 शिव (→रुद्र) –c) व2 शर्वं (→शान्त) –d) दे4 प्र1 2 म1 ब्रह्माण (→ब्रह्मण्य), व1-3 दे6 प्र1 2 ब्रह्मणं, द1 ब्रह्माण (→ब्राह्मण-), दे2 ब्रह्माण ब्रह्मवत् प्रियाम्

४८ –a) का1 व1-3 दे3 4 5 द1 प्र1 म1 मुव कला° (दे5 लो°), ते1 कथा° (→काल°) –b) दे8 तारक, दे8-10 मुवें अमूर्ति-, दे1 अमूर्तं (→अमूर्त्ति), का1 व1 3 दे3 5 मुव अमरे-श्वर (→परमेश्वर), दे4 निर्विकारममरेश्वर, द1 प्र1 2 म1 मूर्तिमन्त महेश्वर –c) दे4 6 एकमूर्तिर् (→एकमूर्ति), दे3 6 देवदेव (→महामूर्त्ति) –d) दे2 देवदेव, दे8 महामूर्ति (→वेद-वेद्य), व2 वनस्पति, द1 प्र1 2 म1 सना गति (→दिवस्पति), दे3 त्रिनेत्र त्रिदिवस्पति

४९ –a) व1 दे9 विश्वमूर्त्ति (→विश्वमूर्ति) –b) दे2 व्यापिनां (→व्यापिन), व1 दे4 °चेतस (→°रेतस) –c) दे° °हनन, +°दहन, डे1 °दमन, प्र1 °हनन (→°दहन) –d) द1 प्र1 2 म1 कामिन (→कामद)

५० –a) दे10 नमस्ते, डे1 नतोऽस्मि, द1 प्र1 2 म1 नमामि (→नमस्ये), दे5 रुद्र (→देव) –b) म1 °भूषित (→°भूषण), ते1 चन्द्रार्धकृतभूषण –c) व1 विमोहित, द1 प्र1 2 म1 विलोचनं (→विलोहित) –f) दे8-10 मुवें मुए भास्वर परम तप .

५१ –a) द1 प्र1 2 म1 इत्येव (→इत्येतत्), प्र2 दक्षिण (→लक्षण) –b) दे2 युगान्ता (→युगाना), दे2 दे1 ते (→वै) –c) द1 अतीतानागतानां वै –d) दे1 मन्वन्तर (→मन्वन्तर), व2 दे4 द1 प्र1 2 मुव °क्षय (→°क्षय)

५२ –b) दे2 ते1 च (→वै) –c) प्र2 व्याख्यातानि ना द्र (न ?) संदेहात् –d) व1 कल- (→कल्प), दे8-10 कल्पे कल्पे तथैव हि

५३ व2 ab ○ –a) दे8 9 मुवें. मुए मुव. चैवेषु (→सर्वेषु) –b) दे4 द1 प्र1 2 म1 ह्यतीता° (→अतीता°), द1 °नागतेन (→°नागतेषु), दे2 च (→वै) –c) म1 तुल्या हि (→तुल्याभि) –d) का1 दे2 10 भवत्युत, व1 भवेत्युत, दे1 भवन्त्युत दे5 भवात्युत (→भवन्त्युत), दे4 द1 प्र1 2 म1 नामरूपादिभिर्नृप

अत: परं अधिकम् दे2 सूत उवाच, द1 म1 श्रीसूत ; प्र1 2 सूत

५४ –a) प्र2 उक्त्वा (→उक्तो). –c) दे8 चकार (→बभार), म1 प्रीतिं (→भक्तिं) –d) दे4 ईशानेर् (→ईशाने), प्र2 भवेदव्यभिचारिणीम्, म1 भक्तिमव्यभि-चारिणीम्

५५ –a) म1 तर्षिं (→तमृषिं) –b) व1 शुभ (→प्रभुम्) –d) प्र2 विष्णु- (→विष्णुं), दे2 सनातन (→व्यवस्थितम्)

५६ –b) द8 पार्थं, प्र2 पार्थं (→पार्थं), प्र2 °पुरजय (→पुरंजयम्) –c) दे1 6 च, दे3 तु, ते1 हि, म1 सव-, (→सु-) व2 कराभ्यां वर्तुलाभ्यां च, दे8 कराभ्यां च सुताभ्यां च, प्र1 कराभ्यां शुभगाभ्यां च –d) दे10 मस्पृश्य, द1 परामर्श (→संस्पृश्य), व1 दे3 द1 प्र1 2 मुनिं (→मुनिः)

वं १.३०.११ धन्योऽस्यनुगृहीतोऽसि त्वादृशोऽन्यो न विद्यते ।
त्रैलोक्ये शंकरे नूनं भक्तः परपुरंजय ॥५७
दृष्टवानसितं देवं विश्वाक्षं विश्वतोमुखम् ।
प्रत्यक्षमेव सर्वेशं रुद्रं सर्वजगद्गुरुम् ॥५८
ज्ञानं तदैश्वरं दिव्यं यथावद् विदितं त्वया ।
स्वयमेव हृषीकेशः प्रीत्योवाच सनातनः ॥५९
गच्छ गच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि ।
व्रजस्व परया भक्त्या शरण्यं शरणं शिवम् ॥६०
एवमुक्त्वा स भगवाननुगृह्यार्जुनं प्रभुः ।
जगाम शंकरपुरीं समाराधयितुं भवम् ॥६१
पाण्डवेयोऽपि तद् वाक्यात् संप्राप्य शरणं शिवम् ।
संत्यज्य सर्वकर्माणि तद्भक्तिपरमोऽभवत् ॥६२
नार्जुनेन समः शंभोर्भक्त्या भूतो भविष्यति ।
मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥६३
तस्मै भगवते नित्यं नमः सत्याय धीमते ।
पाराशर्याय मुनये व्यासायामिततेजसे ॥६४
कृष्णद्वैपायनः साक्षाद् विष्णुरेव सनातनः ।
को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ॥६५
नमः कुरुध्वं तमृषिं कृष्णं सत्यवतीसुतम् ।
पाराशर्यं महात्मानं योगिनं विष्णुमव्ययम् ॥६६

५७ –a) का1 ब1 2 दे2 4 ग्र1 2 म1 धन्योऽस्त्य° (→धन्योऽस्य°), का1 व3 दे2 4 ग्र2 म1 °तोस्मि (→°तोसि), दे5 धन्यो समनुगृहीतो –c) दे4 ग्र3 त्रैलोक्य (→त्रैलोक्ये), व3 ग्र2 शंकरो, दे10 शंकर (→शंकरे), तै1 देवे (→नूनं) –d) व1 3 दे3 3 5 8 10 द1 ग्र1 2 म1 मुए मुब °पुरजय (→°पुरंजय)

५८ –a) दे8-10 दृष्ट्वा वाम सित देव –b) का1 ब2 दे2 3 5 6 विश्वाख्य, द1 ग्र1 2 म1 विश्वाक्ष (ग्र2 °क्षा) (→विश्वाक्ष) –c) दे8 10 मुवें मुए मुब सर्वेषा, तै1 सर्वज्ञ (→सर्वेश) –d) का1 °जगद् वर, व1 3 दे3 5 °जगद्वर, दे6-10 मुवें, मुए मुब °जगन्मय (→°जगद्गुरु), व2 रुद्र सर्वगतेश्वर

५९ –a) ग्र3 म1 मून (→ज्ञान), ब1 तदेश्वर, व2 3 दे3 6 तच्चैश्वर, तै1 तपेश्वर (→तदैश्वर) –b) दे4 यथा, व2 तथा (→त्वया) –c) का1 दे5 ययमेव (दे5 °च), ने1 नियमेन (→स्वयमेव), दे8 10 गुडाकेश (→हृषीकेश) –d) ग्र2 प्रीतस्तव, दे2 प्रत्युवाच, दे4 9 10 प्रीतोवाच, तै1 प्रिय पार्थ (→प्रीत्योवाच), दे4 द1 ग्र1 सनातन, ग्र2 समागत (→सनातन)

६० –a) व1 स्वय (→स्वकं), द1 ज्ञान, म1 राज्य (→स्थानं), तै1 गच्छस्व शाश्वत स्थान –b) दे5 यथावद् वेदित त्वया –c) दे8 द1 ग्र1 2 म1 भजस्व (→व्रजस्व), दे10 परमा- (→परया)

दे5 b c मध्ये अधिकम्—

* ययमेव हृषीकेश प्रीत्यावाच सनातन । (= ५९cd)

६१ –a) द1 ६१ a-६२ b O (इ स) –a) दे10 एकम् (→एवम्), दे5 10 उक्ता (→उक्त्वा) –b) दे8-10 प्रति, तै1 पुन, ग्र2 विभु (→प्रभु) –c) ग्र1 2 म1 °पुर (→°पुरी) –d) व2 तमा° (→समा°), का1 व2 ग्र1 2 म1 शिव, दे10 भुव (→भवम्)

६२ द1 ab O, ग्र2 म1 ६२c ६३d O –a) व2 3 पाण्डवोऽपि च (→पाण्डवेयोऽपि), का1 ब1 दे2-4 तै1 तद् वाक्य (→तद् वाक्यात्) –d) व3 भगवद् परमो भवत्, दे8-10 तै1 मुव मुए मुब ज्ञात्वा तद् परमोऽभवत्

६३ ग्र2 म1 O –a) मुब नार्जुनेन (→नार्जुनेन) –b) तै1 भक्तो (→भक्त्या) –c) दे5 मुनि-, दे8 त्यक्त्वा (→मुक्त्वा)

६४ दे3 6 ६४a-६६b O (इ स) –a) ब1 ग्र1 भगवतो (→भगवते) –b) दे8 10 मुव मुए मुब शा dाय (→सत्याय) –c) ग्र2 परा° (→पारा°)

६५ दे3 6 O (इ १४ मा दि) –a) म1 कृष्ण (→कृष्णः) –b) का1 दे2 5 एव (→एव) –c) दे10 कोह्यन्यस्तुरयते रुद्र, तै1 कोन्यस्तु सत्त्वतो (तत्त्वतो) रुद्र, द1 ग्र1 2 म1 को ह्यन्यस्तु ततो रुद्र

६६ दे3 6 ab O –a) का1 ब1 दे2 5 नमोऽस्तु रुद्र, व2 3 नमामि रुद्र, दे4 नमस्कुरुध्व (→नमः कुरुध्वं). –d) दे4 योगिना (→योगिन)

एवमुक्तास्तु मुनयः सर्वं एव समाहिताः । प्रणेमुस्तं महात्मानं व्यासं सत्यवतीसुतम् ॥६७

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायां पूर्वविभागे अष्टाविंशोऽध्यायः ॥२८॥

# २९

ऋषय ऊचुः ।※

प्राप्य वाराणसीं दिव्यां कृष्णद्वैपायनो मुनिः ।
किमकार्षीन्महाबुद्धिः श्रोतुं कौतूहलं हि नः ॥१

सूत उवाच ।※

प्राप्य वाराणसीं दिव्यामुपस्पृश्य महामुनिः ।
पूजयामास जाह्नव्यां देवं विश्वेश्वरं शिवम् ॥२

तमागतं मुनिं दृष्ट्वा तत्र ये निवसन्ति वै ।
पूजयाञ्चक्रिरे व्यासं मुनयो मुनिपुंगवम् ॥३

पप्रच्छुः प्रणताः सर्वे कथाः पापविनाशनीः ।
महादेवाश्रयाः पुण्या मोक्षधर्मान् सनातनान् ॥४

स चापि कथयामास सर्वज्ञो भगवानृषिः ।
माहात्म्यं देवदेवस्य धर्मान् वेदनिदर्शितान् ॥५ वें १३१५

---

६७ –a) व1 दे8 9 द1 मुवँ मुए उक्त्वा (→उक्तास्) -b) का1 ग्र2 एप (→एव), ग्र1 सनातन, ग्र2 समाहित (→समाहिता) –c) व3 महाकाय (→महात्मान). -d) दे5 कृष्ण (→व्यास)

पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

पुराणनाम—का1 इति श्रीकौर्मे पुराणे, व1 दे5 इति कौर्मे, व2 3 दे3 6 इति कूर्मपुराणे, दे2 इति कौर्मे पुराणे, दे4 8 10 प1 2 म1 मुवँ मुए इति श्रीकूर्मपुराणे, तै1 इत्यादिमहापुराणे श्रीकौर्मे, मुव इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम—का1 व1 3 दे2-6 तै1 प1 2 म1 O, दे8 9 मुए मुव व्यासार्जुनसंवादे युगधर्मे दे10 व्यासार्जुनसंवादे युगधर्मवर्णनो नाम, मुवँ व्यासार्जुनसंवादे युगधर्मनिरूपणं नाम अध्याय संख्या—दे6 O, का1 व1 2 दे2 3 5 प्र1 सप्तविंशोऽध्याय, व2 ॥२७॥, दे4 सप्तविंशोऽध्याय ।२७॥, दे8 9 त्रिंशोऽध्याय, दे10 मुवँ मुए त्रिंशोऽध्याय ॥३०॥, तै1 षष्ठाविंशोऽध्याय, प2 म1 एकोनत्रिंशोऽध्याय, मुव एकोनत्रिंशोऽध्याय ॥२९॥

## २९

[द1 पुस्तके अध्यायोऽयं नास्ति ]

※ न1 प1 O, तै1 श्रीशिव, + ऋषय, द1 प्र2 म1 ऋषय

१. दे5 न1 द1 O –a) दे4 प्र1 2 म1 पुण्या (→दिव्या) –c) व2 दे10 प्र1 2 म1 °बुद्धे (→°बुद्धि) –d) द1 कौतूहल (→कौतूहलं), दे3 हि मे, दे10 मुव (→हि न)

※ दे5 द1 O; दे8 9 मूत उ, न1 तै1 प्र1 2 म1 सूउ

२ –a) दे1 प्र2 म1 पुण्या, प्र1 दिव्य (→दिव्या) -b) दे1 °मति (→°मुनि) –d) दे5 शिवा, प2 म1 हर (→शिवम्)

दे4 a b मध्ये अधिकम्—कृष्णद्वैपायनो मुनि ।

३ –b) दे6 यत्र (→तत्र), तै1 यो, + ये (→ये), दे8 10 च, प्र2 ते (→वै) –d) दे2 5-8 10 °पुंगवा (→°पुंगवम्)

४ –a) व3 प्रणत (→प्रणता) –b) का1 दे3 5 8-10 मुवँ मुए मुव कथां (→कथा), का1 दे2 5 °विनाशि (दे5 शा°) नी व2 दे3 तै1 °प्रणाशि (दे3 °श)नी, दे8 10 मुवँ मुए मुव °प्रणाशि(दे10° श)नी, दे4 म1 °विनाशिनी, दे6 °प्रनाशनी न1 °प्रणाशिन (→°विनाशनी), द1 प्र1 2 कथास्ता (प्र2 °स्था) पापनाशिनी (प्र2 °नी) –c) का1 दे3 5 6-10 प्र2 मुवँ मुए मुव °श्रयां, द1 °श्रयात्, प्र1 म1 °श्रयान् (→°श्रया), का1 दे2 5 8 10 न1 द1 प्र1 2 मुवँ मुए मुव पुण्यां, प्र1 म1 पुण्यान् (→पुण्या) –d) तै1 °धर्मास्, द1 °धर्मात् (→धर्मान्), दे3 सनातनी, दे4 10 द1 सनातनात्, दे5 सनातन तै1 सनातना (→सनातनान्)

५ –a) म1 चाय (→चापि) –c) द1 महात्मा (→माहात्म्य) –d) दे8 10 तै1 मुवँ मुए मुव धर्म्यं दे9 धर्म (→धर्मान्), दे8-10 न1 मुवँ मुए मुव °निदर्शनात् (न1 °नान्) (→°निदर्शितान्), द1 प्र1 2 सर्वान् देव (प्र2 वेद) विदर्शितान्

वे.१.३३.२३ तदाऽचिरेण कालेन पञ्चत्वमहमागतः ।
न दृष्टं तन्मया घोरं यमस्य वदनं मुने ॥२४

ईदृशीं योनिमापन्नः पैशाचीं क्षुधयाऽन्वितः ।
पिपासयाऽधुनाक्रान्तो न जानामि हिताहितम् ॥२५

यदि कंचित् समुद्धर्तुमुपायं पश्यसि प्रभो ।
कुरुष्व तं नमस्तुभ्यं त्वामहं शरणं गतः ॥२६

इत्युक्तः शङ्कुकर्णोऽथ पिशाचमिदमब्रवीत् ।
त्वादृशो न हि लोकेऽस्मिन् विद्यते पुण्यकृत्तमः ॥२७

यत् त्वया भगवान् पूर्वं दृष्टो विश्वेश्वरः शिवः ।
संस्पृष्टो वन्दितो भूयः कोऽन्यस्त्वत्सदृशो भुवि ॥२८

तेन कर्मविपाकेन देशमेतं समागतः ।
स्नानं कुरुष्व शीघ्रं त्वमस्मिन् कुण्डे समाहितः ।
येनेमां कुत्सितां योनिं क्षिप्रमेव प्रहास्यसि ॥२९

स एवमुक्तो मुनिना पिशाचो
दयालुना देववरं त्रिनेत्रम् ।
स्मृत्वा कपर्दीश्वरमीशितारं
चक्रे समाधाय मनोऽवगाहम् ॥३०

तदाऽवगाढो मुनिसंनिधाने
ममार दिव्याभरणोपपन्नः ।
अदृश्यतार्कप्रतिमे विमाने
शशाङ्कचिह्नाङ्कितचारुमौलिः ॥३१

विभाति रुद्रैरभितो दिविस्थैः
समावृतो योगिभिरप्रमेयैः ।
स वालखिल्यादिभिरेष देवो
यथोदये भानुरशेषदेवः ॥३२

---

दे6 9 ते1 ग्र1 वारणस्या (→वाराणस्या) –d) दे4 10 न1 दिष्ट-, दे1 दष्ट्वा, म1 दिष्ट्या (→दृष्ट), ते1 दृष्ट्वा, म1 दृष्टो (→स्पृष्टो)

२४ दे3 ⊙ –a) व1 3 दे10 कदा° (→तदा°) –c) ग्र3 मदष्ट (→न दृष्ट), ग्र2 दे5 6-10 व1 ग्र1 2 मुर्वे मुए महा- (→मया), ते1 न च दृष्टो यमो घोरो –d) दे4 द1 ग्र1 2 म1 यमस्य सदन महत्

२५ दे3 abc ○ –a) दे10 ईदशी, ते1 ईदृश, + ईदृशीं, ग्र1 ईदृश (→ईदृशीं) –b) दे8-10 न1 मुर्वे मुए मुच °यार्दित, द1 म1 °या युत (→°यान्वित) –c) दे4 पिशाचि या (?) (→पिपासया), व2 [अ]धुनाग्रस्तो, दे6 क्षुधापरान्तो, दे3 10 न1 मुर्वे मुए मुव. परिक्रान्तो, ते1 ग्र2 परिभ्रान्तो (→[अ]धुनाक्रान्तो), म1 क्षुत्पिपासाविनाक्रान्तो –d) दे6 द्विज (→हितम्)

२६ –a) व3 दे4 6 8-10 कश्चित् दे5 द1 ग्र2 म1 किंचित (→कंचित्) –b) ग्र2 वदसि (→पश्यसि) –c) न1 नमस्कुत्य (→नमस्तुभ्यं) –d) ग्र2 त्वमसि (→त्वामहं)

२७ –b) का1 मपि (→इद) –c) व2 त्वादिश, ते1 त्वदृशो (→त्वादृशो) –d) व3 °युत्तम (→°कृत्तम)

२८ –a) दे2 5 पूर्वे (→पूर्वं) –b) व3 द1 दृष्ट्वा (→दृष्टो) –c) व1 संपृष्टो, दे10 समृष्टो (→संस्पृष्टो) –d) व1 3 दे2 5 म1 द1 व3 वद- (→त्वत्-), दे2 -वादशो (→सदृशो)

२९ –a) म1 दे10 ग्र2 वेन (→तेन), –b) दे10 देशोन, द1 व1 म1 दिशा (द1 श°) मेता, ग्र2 दशमेकं (→देशमेतं), ग्र2 समाहृत (→समागत) –c) व3 स्नात्वा (→स्नानं), ते1 स्नान कुरुष्व वै शीघ्रम –e) व1 ग्र1 येन मा (→येनेमा), दे5 योनि (→योनिं)

३० –a) ग्र2 एवमुक्तो न मुनिना –b) व1 दे4 दयात्मना, दे8-10 ग्र3 मुर्वे मुए मुच दयावता (→दयालुना) ते1 ग्र1 2 त्रिणेत्र (→त्रिनेत्रम्) –c) द1 व1 2 म1 दृष्ट्वा (→स्मृत्वा) –d) का1 चक्र, द1 चक्रे, म1 दृष्ट्वा (→चक्रे), व2 3 दे3 6 मनोऽवगाढ, म1 मनोपहार (→मनोऽवगाहम्), ग्र2 चक्रे समाराध्य मनोऽवगाहम्

३१ –a) व1 दे6 तदावगाढे, दे4 8.10 तथा(दे4 °तो) वगाढो, दे9 यदावगाह्य, द1 म1 2 म1 तदा(व3 °था)वगाहे, मुर्वे मुए मुच तदावगाहात् (→तदाऽवगाढो), ते1 तथा पिशाचो मुनिसंनिधाने –b) दे4 ससार (→ममार), –c) व3 °तार्कं, ते1 °तार्क- (→°तार्क), दे4 °प्रतिम, द1 °प्रतिमो (→°प्रतिमे), द1 °विमाने (→°विमाने) –d) का1 व1 3 दे2 3 5 6 ते1 °चिह्नाङ्कित°, दे4 °चिह्न क°, म1 °लेखाङ्कित° (→°चिह्नाङ्कित°), ग्र1 त्रिलोचनचन्द्रनिभमौलि

३२ –a) का1 दे2 5 महितो, दे8-10 न1 मुर्वे मुए °र्दितो (→°रभितो), व2 दे2 3 5 6 मुव दिविष्ठै (→दिविस्थैः) –b) दे3 ग्र2 मुव °रप्रमय (→°रप्रमेयैः) –c) व1 3 दे2 3 वालि° (→वाल°), दे4 5 द1 ग्र1 2 म1 °रेव (→°रेष), दे4 दिव्यैः, द1 पान्य (→देवो), ते1 स वालखिल्यैः रविदेववृन्दैः –d) दे3 °दयेष°, द1 °दये म° (→°दये°),

स्तुवन्ति सिद्धा दिवि देवसङ्घाः
नृत्यन्ति दिव्याप्सरसोऽभिरामाः ।
मुञ्चन्ति वृष्टिं कुसुमाम्बुमिश्रां
गन्धर्वविद्याधरकिंनराद्याः ॥३३

संस्तूयमानोऽथ मुनीन्द्रसंघै-
रवाप्य बोधं भगवत्प्रसादात् ।
समाविशन्मण्डलमेतदग्र्यं
त्रयीमयं यत्र विभाति रुद्रः ॥३४

दृष्ट्वा विमुक्तं स पिशाचभूतं
मुनिः प्रहृष्टो मनसा महेशम् ।
विचिन्त्य रुद्रं कविमेकमग्निं
प्रणम्य तुष्टाव कपर्दिनं तम् ॥३५

शङ्कुकर्ण उवाच ।※

कपर्दिनं त्वा परतः परस्ताद्
गोप्तारमेकं पुरुषं पुराणम् ।
व्रजामि योगेश्वरमीशितार-
मादित्यमग्निं कपिलाधिरूढम् ॥३६

त्वां ब्रह्मपारं हृदि सन्निविष्टं
हिरण्मयं योगिनमादिमन्तम् ।
व्रजामि रुद्रं शरणं दिविस्थं
महामुनिं ब्रह्ममयं पवित्रम् ॥३७

सहस्रपादाक्षिशिरोऽभियुक्तं
सहस्रबाहुं तमसः परस्तात् ।
त्वां ब्रह्मपारं प्रणमामि शंभुं
हिरण्यगर्भाधिपतिं त्रिनेत्रम् ॥३८

यतः प्रसूतिर्जगतो विनाशो
येनावृतं सर्वमिदं शिवेन ।
तं ब्रह्मपारं भगवन्तमीशं
प्रणम्य नित्यं शरणं प्रपद्ये ॥३९ दे १ ३२ ३९

---

द1 °देव (→°देव), तो1 यथाम्बरे भानुरशेषदेवं, प्र1 यथोदये भानुरनेकभानु

३३ –a) दे5 गायन्ति (→स्तुवन्ति), प्र1 त्रिलोकेश देव दिवि देवसङ्घा –b) दे3 6 स्तुवन्ति (→नृत्यन्ति), दे2 ए2 दिव्याप्सरसा° (→दिव्याप्सरसो°) –c) म2 वृष्ट (→वृष्टिं), दे3 6 कुसुमाद्य°, दे8-10 मुवें मुए मुब कुसुमालि° (→कुसुमाम्बु°)

३४ –b) द1 वाला, प1 रेमे, प2 वाम, म1 याद (→बोध) म2 °प्रसादत (→°प्रसादात्) –c) का1 एतदग्र्य, म1 एतमग्र्य, दे4 एनदग्र्य, दे8-10 मुवें मुए मुब, एवमग्र्य, ना1 एतदावृत, द1 प्र1 ऽग्र्यस्तभे, ए2 ** रश्मे (→एतदग्र्य) –d) म2 °मयो (→°मय), दे5 य च, दे8-10 तत्र (→यत्र)

३५ –a) दे3 6 मु-, ते1 तु प2 च (→स), का1 °भेत (→°भूत) –b) दे10 मनगा (→मनसा) –c) दे8-10 न1 विचिन्त्यमग्निं (→विचिन्त्य रुद्रं), दे4 कपि-, द1 प1 कलि- (→कवि), दे8 10 -मेव रुद्र न1 -मेकमग्निं, द1 प1 2 ग1 -मेकमग्र्यं, मुवें मुए मुब मेवमग्र्यं (→मेकमग्निं)

※ दे8 10 न1 प2 O, ते1 द1 प1 म1 शङ्कुकर्णं

३६ –a) ब1 3 स, द1 चा- (→त्वा), ते1 परम (→परत), ग1 पुरस्ताद् (→परस्ताद्), दे8-10 मुवें मुए मुब समामि नित्यं परत परस्ताद् –c) दे8 9 ते1 प2 म1 योगीश्वर° (→योगेश्वर°) –d) दे10 -मौलि, प्र1 -वर्णं (→मग्निं), ब1 कलिकाधि, म2 कलिगादि-, दे3 दे8 10 मुवें मुए मुब कलिलाधि दे1 ते1 कलिलादि-, दे4 कपिलाधि-, द1 प1 2 म1 कपिलादि (→कपिलाधि-), दे4 ते1 द3 प1 2 म1 रूढ, दे5 -रूढा (→रूढम्)

३७ –a) म1 तुष्टाव दृष्टो विविधम् मुनीन्द्र –b) ते1 °मादिमन्त, प्र1 °मादिमन्तम्, मुवें मुए मुब °मादिहीनम् (→°मादिमन्तम्), ना1 हिरण्मयानादिमनन्तमध्य, + हिरण्मय योगिनमादिमन्त –c) ब1 3 दे3 4 6 दिविष्ठ, ते1 द1 प1 2 हृदिस्थ (→दिविस्थं) –d) दे8-10 ब1 मुवें मुए °पर (→°मय)

३८ म2 ३८c–४०b O (ब म) –a) द1 °पादाग्नि° (→°पादाक्षि°) –b) का1 प1-3 दे2-8 °बाहु (→°बाहुं), दे5 6 तपस, दे4 तमन, दे10 परत (→तमस) –c) ब2 3 दे3 6 रुद्र (→शंभुं) –d) म2 द4 °गर्भादि- (→°गर्भाधि-) म2 -पति (→-पतिं), ते1 द1 प2 म1 त्रिनेत्र (→त्रिनेत्रम्)

३९ म2 O. –a) दे5 प्रभूतिर्, दे10 प्रभूतो, द1 म1 ग1 प्रसूतिर् (→प्रसूतिर्), ब1 प1 म1 जगतां (द1 °ता), दे10 जगतिर् (→जगतो), दे4 विनाश, दे9 10 विनाशं, म1 [म]पि नाशो (→विनाशो) –b) दे8 9 मुवें मुए येनाहृत,

वे १.३३४०

अलिङ्गमालोकविहीनरूपं
स्वयंप्रभं चित्पतिमेकरुद्रम् ।
तं ब्रह्मपारं परमेश्वरं त्वां
नमस्करिष्ये न यतोऽन्यदस्ति ॥४०

य योगिनस्त्यक्तसबीजयोगा
लब्ध्वा समाधिं परमार्थभूताः ।
पश्यन्ति देवं प्रणतोऽस्मि नित्यं
तं ब्रह्मपारं भवतः स्वरूपम् ॥४१

न यत्र नामादिविशेषक्लृप्ति-
र्न संदृशे तिष्ठति यत्स्वरूपम् ।
तं ब्रह्मपारं प्रणतोऽस्मि नित्यं
स्वयंभुवं त्वां शरणं प्रपद्ये ॥४२

यद् वेदवादाभिरता विदेहं
सब्रह्मविज्ञानमभेदमेकम् ।
पश्यन्त्यनेकं भवतः स्वरूपं
सब्रह्मपारं प्रणतोऽस्मि नित्यम् ॥४३

यतः प्रधानं पुरुषः पुराणो
विवर्त्तते यं प्रणमन्ति देवाः ।
नमामि तं ज्योतिषि संनिविष्टं
कालं बृहन्तं भवतः स्वरूपम् ॥४४

व्रजामि नित्यं शरणं गुहेशं
स्थाणुं प्रपद्ये गिरिशं पुरारिम् ।
शिवं प्रपद्ये हरमिन्दुमौलिं
पिनाकिनं त्वा शरणं व्रजामि ॥४५

(→पेनावृत), दे$_{10}$ वृतेन (→शिवेन) –c) वे$_{2}$ परम तमीश (→भगवन्तमीश) –d) द$_{1}$ प्र$_{1}$ प्रणौमि (→प्रेणाम्य)

४०. दे$_{8\ 9}$ ⊙, प्र$_{2}$ ab ⊙ –a) दे$_{1}$ अलिङ्ग° (→अलिङ्ग°), द$_{1}$ °मालीन°, प्र$_{1}$ °माकार° (→°मालोक°) –b) व$_{2\ 3}$ दे$_{4}$ न$_{1}$ द$_{1}$ प्र$_{1}$ मुवें मुए मुब °भु (→°प्रभ), व$_{2\ 3}$ मुवें मुए मुब °चित्प्रतिमं(व$_{3}$ °मे)क- (→चित्पतिमेक ), व$_{2}$ म$_{1}$ -रूप (→-रुद्र), दे$_{10}$ स्वयप्रकाश तमचिन्त्यरूप, ते$_{1}$ स्वयंभुव चातिथिमेकरुद्र –c) दे$_{4}$ द$_{1}$ म$_{1}$ त्वं, ते$_{1}$ प्र$_{1\ 2}$ त्वा (→तं), दे$_{10}$ परमेश्वरस् (→परमेश्वरं), प्र$_{2}$ त (→त्वां) –d) दे$_{10}$ नमस्करिष्ये भवभेदनाय

४१ दे$_{8\ 9}$ ○, प्र$_{2\ 3}$ ४१d-४२c ○ –a) दे$_{5}$ त्यक्तम-, दे$_{10}$ स्तुत्य रा-, न$_{1}$ त्यक्तुस- (→त्यक्तस-), व$_{1}$ न$_{1}$ -योग, म$_{1}$ -माया, दे$_{4}$ मुवें मुए मुब -योगात् (→ योगा[ ]) –b) व$_{1\ 3}$ दे$_{3\ 4\ 6\ 10}$ न$_{1}$ ते$_{1}$ द$_{1}$ प्र$_{1\ 2}$ म$_{1}$ मुवें मुए मुब परमात्म- (→परमार्थ-), दे$_{10}$ सूता, न ते$_{1}$ प्र$_{2}$ -भूतं (→भूता ) –d) ते$_{1}$ मध्यक्त°, प्र$_{3}$ मुवें मुए मुब तद् ब्रह्म°, म$_{1}$ त्वा ब्रह्म° (→त ब्रह्म°)

४२ दे$_{8\ 9}$ ○, व$_{1\ 2}$ abc ○, दे$_{5}$ ४२d-४३d⊙ (ह रा ) –a) दे$_{3}$ मानादि-, दे$_{4}$ मुवें मुए मुब नामानि, प्र$_{3}$ यानादि- (→नामादि ), व$_{1}$ दे$_{6}$ मुवें मुए मुब -तृप्तिर्, दे$_{4}$ न$_{1}$ -क्लृप्ति (दे$_{4}$ -प्त) द$_{1}$ प्र$_{1}$ म$_{1}$ -हीन, म$_{1}$ -हीन, + °रूप (→क्लृप्तिर्) –b) दे$_{3}$ सदृशे, दे$_{10}$ सदर्शं, मुब तान्शो (→सदृशे), ते$_{1}$ यस्य रूप (→यत् स्वरूप).

४३ दे$_{2}$ न$_{1}$ ○ –a) व$_{3}$ ते$_{1}$ ब्रह्म° (→वेद°), म$_{1}$ °वादानि°, दे$_{4}$ °वेदाभि°, दे$_{8\ 9}$ मुवें मुए मुब °वेदाभि°, द$_{1}$ प्र$_{2}$ °वाताभि° (→°वादाभि°), ते$_{1}$ वदन्ति (→विदेह), दे$_{8}$ यद् वाक्यवादादिभिरविदेह, म$_{1}$ यद् वेदवादाभिरतोऽतुदेह –b) व$_{3}$ दे$_{4}$ द$_{1}$ प्र$_{1\ 2}$ तद् दे$_{8\ 10}$ सु, ते$_{1}$ सद्, म$_{1}$ स (→स-), प्र$_{2}$ °रूप, + °मेक (→°मेकं) –c) ते$_{1}$ सशान्तमेक भवत स्वरूपम् –d) दे$_{4\ 8\ 10}$ ते$_{1}$ प्र$_{2}$ म$_{1}$ मुवें मुए मुब तद् (→स), म$_{1}$ °रूप (→°पार), दे$_{8\ 10}$ ते$_{1}$ मुवें मुए प्रणमामि (→प्रणतोऽस्मि)

४४ –a) दे$_{8-10}$ पुराण (→प्रधान), ते$_{1}$ प्र$_{1}$ पुरुष (→पुरुष ), ते$_{1}$ प्रधानो, न$_{1}$ द$_{1}$ प्र$_{1}$ पुराण, प्र$_{2}$ प्रधान (→पुराणो) –b) दे$_{3}$ द$_{1}$ विवर्त्तये, दे$_{6\ 9}$ द$_{1}$ प्र$_{1\ 2}$ निवर्त्तते, (→विवर्त्तते), दे$_{4\ 8-10}$ म$_{1}$ प्र$_{3}$ वेदा (दे$_{10}$ °द ), दे$_{6}$ देव (→देवा ), ते$_{1}$ विवर्त्तते यत्र रमन्ति देवा –c) प्र$_{2}$ ते (→तं), ते$_{1}$ योऽस्य (→ज्योतिषि) –d) दे$_{5\ 10}$ महन्त, दे$_{8}$ बृहन्त (→बृहन्तं), ते$_{1}$ कलात्मकं तत् भवत स्वरूपम्

४५ व$_{1}$ cd ⊙ –a) व$_{1}$ दे$_{8\ 10}$ मुवें मुए मुब महेश, दे$_{4}$ नगेश ते$_{1}$ सुरेश (→गुहेश) –b) व$_{3}$ दे$_{3\ 6\ 8-10}$ मुवें मुए मुब. पुराण, दे$_{2}$ पुरारि, दे$_{5}$ पुरान्त (→पुरारिं) –c) दे$_{3\ 4}$ प्र$_{1}$ हरिम् (→हरम्), ते$_{1}$ शर्वेन्दुमौलिं शरणं प्रपद्ये –d) म$_{1}$ त (→त्वा), दे$_{8-10}$ नमामि (→व्रजामि)

४५ श्लोकात्पर न$_{1}$ अधिकम्–

२१ * तं ब्रह्मपारं प्रणमामि नित्यं ।
सदाशिवं सच्चिदानन्दरूपम् ॥

स्तुत्वैवं शङ्कुकर्णोऽसौ भगवन्तं कपर्दिनम् ।
पपात दण्डवद् भूमौ प्रोच्चरन् प्रणवं परम् ॥४६

तत्क्षणात् परमं लिङ्गं प्रादुर्भूतं शिवात्मकम् ।
ज्ञानमानन्दमद्वैतं कोटिकालाग्निसन्निभम् ॥४७

शङ्कुकर्णोऽथ मुक्तात्मा तदात्मा सर्वगोऽमलः ।
निलिल्ये विमले लिङ्गे तदद्भुतमिवाभवत् ॥४८

एतद् रहस्यमाख्यातं माहात्म्यं वः कपर्दिनः ।
न कश्चिद् वेत्ति तमसा विद्वानप्यत्र मुह्यति ॥४९

य इमां शृणुयान्नित्यं कथां पापप्रणाशिनीम् ।
भक्तः पापविशुद्धात्मा रुद्रसामीप्यमाप्नुयात् ॥५०

पठेच्च सततं शुद्धो ब्रह्मपारं महास्तवम् ।
प्रातर्मध्याह्नसमये स योगं प्राप्नुयात् परम् ॥५१

इहैव नित्यं वत्स्यामो देवदेवं कपर्दिनम् ।
द्रक्ष्यामः सततं देवं पूजयामोऽथ शूलिनम् ॥५२ वे १.३१.५२

---

४६ -a) न1 स्तुत्वैव (→स्तुत्वैवं), मा1 दे3 5 [प्र]णि (→[प]पौ) -d) मा1 दे3 5 परम (→प्रणव), का1 दे5 पद, दे4 न1 ते1 प1 म2 वाणी, दे8 10 मुबे मुए मुव शिव, म2 शुभ (→पर)

४७ -a) ते1 वत् पर, म1 प्रणवं (→परम्), न1 त क्षणात् क्षण लिङ्ग -b) दे4 द1 प1 2 चाविर्भूत (→प्रादुर्भूत) -d) का1 दे5 °ज्वाला°, व3 दे3 °माला° (→°काल°), म1 कणाङ्किकालसन्निभ

४८ -a) व2 दे4 न1 ते1 म1 युक्तात्मा, दे8 10 मुबे मुए मुव रा सदा, द1 मुक्तं स्वा प1 2 युक्तत्मात् (→मुक्तात्मा) -b) व2 3 मुब धर्मात्मा ते1 तद् ज्ञात्वा (→तदात्मा), का1 सर्वगो मत, दे2 5 सर्वगो मन (→सर्वगोऽमल), दे8-10 मुबे मुए मुनि सर्वात्मवोऽजन -c) का1 म1 विलिल्ये ब1 न लिल्ये, दे2 5 निनि ये, दे3 मुबे मुए निलिम्पे दे8 निमिले, प1 विलीनो (→निलिल्ये)

४९ ब1 ○ -b) व2 तु, दे4 ते, दे8 10 मुबे मुए मुब च (→न) -c) मा1 तमसा,+मनसा, दे3 तमसो, द1 म1 मनसा, प2 न तस्य (→तमसा) -d) दे10 विज्ञान° (→विद्वान°) द1 प1 2 म1 विद्वान्न प्रतिमुह्यति.

५० ब1 ⊙, दे5 cd ○ -a) ते1 द1 इम (→इमां) -c) मा1 सततं प2 3 दे8 10 त्यक्त, ते1 सर्व· (→भक्त), दे8-10 मुबे मुए मुव °विमुक्तात्मा (→°विशुद्धात्मा) -d) मा1 ते1 °सायुज्यम्, म2 °सारूप्यम् (→°सामीप्यम्)

अत परं दे5 प्रक्षिप्तम्—

कपर्दिनस्त्वय ध्यानस्थो मार्कण्डेयं ।
भविष्यन्ति न सन्देहो एतावदभिमाय ।
यत्र द्रक्ष्यन्ति देवेश स्नात्वा रुद्रां पिनाकिनीम् ।
ब्रह्महत्यादिकं पापं तेषामाशु विनश्यति ।
प्राणं त्यजन्ति ये मर्त्याः पापकर्मरता अपि ।
ते यान्ति तत्परं स्थानं नात्र कार्या विचारणा ।
यस्यास्तु खलु वै विप्रा मन्दाकिन्या कृतोदका ।
अर्चयन्ति महादेवं अव्यमेशपरमीश्वरम् ।
स्नानं दानं तपः श्राद्धं पिण्डनिर्वपणं क्रिया ।
यान्ति तत्परं स्थानं नात्र कार्या विचारणा ।
एवं कृत्वा विप्रा पुनात्यासप्तमं कुलम् ।
सन्निहित्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
यत्फलं लभते मर्त्यस्तस्माद्दशगुणं त्विद ।
एवमुक्त्वा महायोगी मध्यमशानिवेश प्रभु ।
(= १.३२.२६a-३३b)

५१ दे5 ○, न1 b ○ -a) व3 पठेत, प2 म1 प पठेद् (→पठेच्च), दे1 प शुध (→च्छुद्धो) -b) ते1 ब्रह्मपार-महास्तव -c) मा1 द1 का1 2 म1 °मध्याह्नो (→°समये) -d) द1 प1 2 म1 योगी (→योग), दे4 द1 प1 2 म1 पद, दे8 10 मुबे मुए मुव नर (→पर)

५२ दे5 ○ -a) प2 इह· (→इहैव), मा1 वत्स्यामि, दे8 व यामो, ते1 वस्यामो, प2 प्रवत्स्यामो, म2 वेत्स्यामो (→वत्स्यामो) -b) व1 पिनाकिन (→कपर्दिनम्). -c) प2 द्रक्ष्यामि म1 दीप्यता (→द्रक्ष्याम), मा1 देवी, दे3 मदे (→देवं) -d) दे3 च, प1 [म]च (→[म]थ), दे8 पूजयामास शूलिनं, दे8-10 मुबे मुए मुव पूजयामन्त्रिनायकं, ते1 पूजयामस्त्रिशूलिनं.

वें.१.३३ ५३ इत्युक्त्वा भगवान् व्यासः शिष्यैः सह महामुनिः । | उवास तत्र युक्तात्मा पूजयन् वै कपर्दिनम् ॥५३

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे एकत्रिंशोऽध्यायः ॥३१॥

# ३२

सूत उवाच ।❀

उषित्वा तत्र भगवान् कपर्दीशान्तिके पुनः ।
द्रष्टुं ययौ मध्यमेशं बहुवर्षगणान् प्रभुः ॥१

तत्र मन्दाकिनीं पुण्यामृषिसङ्घनिषेविताम् ।
नदीं विमलपानीयां दृष्ट्वा हृष्टोऽभवन्मुनिः ॥२

स तामन्वीक्ष्य मुनिभिः सह द्वैपायनः प्रभुः ।
चकार भावपूतात्मा स्नानं स्नानविधानवित् ॥३

संतर्प्य विधिवद् देवानृषीन् पितृगणांस्तथा ।
पूजयामास लोकादिं पुष्पैर्नानाविधैर्भवम् ॥४

प्रविश्य शिष्यप्रवरैः सार्द्धं सत्यवतीसुतः ।
मध्यमेश्वरमीशानमर्चयामास शूलिनम् ॥५

ततः पाशुपताः शान्ता भस्मोद्धूलितविग्रहाः ।
द्रष्टुं समागता रुद्रं मध्यमेश्वरमीश्वरम् ॥६

---

५३ दे5 ab ○ –a) ब1 इत्युक्त्वा स भगवान् व्यास –b) दे8-10 मुवें मुए मुव महाद्युति, ते1 महाद्युति (→महामुनि) –c) दे3 8 उवाच, म1 उपास्ते (→उवास), ब3 दे3 मुक्तात्मा (→युक्तात्मा), पा1 उपवास तत्र मुक्तात्मा, दे5 उवास सुचिरं काल, द1 उपासते स्म युक्तात्मा, प्र1 पूजयामास सतत, प्र2 उपासते स्म सततस्मात् –d) ब1 पूजयेन–, ब3 पूजयन्नेन–, द1 प2 पूजया वै, प्र1 देवदेव (→पूजयन्वै), दे5 महेश्वर (→कपर्दिनम्)

पुष्पिका—

पुराणनाम—द2 ○, पा1 दे2 5 ते1 इत्यादिमहापुराणे कौर्मे (ते1 श्रीकौर्मे), ब1 इति कौर्मे, ब2 3 दे3 म1 इति कूर्मपुराणे, दे4 6-10 प1 2 मुवें मुए इति श्रीकूर्मपुराणे, दे0 कौर्मे, न1 इति श्रीकौर्मे, मुव इति श्रीकौर्मे महापुराणे

अध्यायनाम—दे4 5 न1 ते1 द1 म1 ○, ब1 प1-3 दे2 3 6 8 10 मुए मुव वाराणसी मा(दे10 म)हात्म्य, प्र1 2 वाराणसीमाहात्म्य दिवासमोचन(प्र2 °न) कथन नाम, मुवें वाराणसीमाहात्म्य नाम अध्यायसंख्या—दे4 द1 ○, पा1 ब1 3 दे2 3 न1 प1 त्रिंशाध्याय, प2 ॥३०॥, दे3 त्रिंशोऽध्याय ॥३०॥, दे5 ते1 एकत्रिंशोऽध्याय, दे3 8 मुए सप्तत्रिंशोऽध्याय, दे10 मुवें सप्तत्रिंशोऽध्याय ॥३१॥, प्र2 म1 मुव द्वात्रिंशोऽध्याय.

## ३२

[दे1 5 पुस्तकयो प्रथमश्लोको नास्ति]

❀ द1 ○, न1 प्र1 2 सूत, ते1 श्रीशिव –, सूत, म1 श्रीसूत

१ –c) दे8 10 मुवें मुए मुव ययौ द्रष्टु (→द्रष्टु ययौ), प1 3 दे3 न1 प्र2 मध्यदे (प्र2 °मी)श (→मध्यमेश) –d) पा1 ते1 प्र1 2 म1 बहून, न1 बहवान (→बहु)

२ –a) दे4 प्र2 मन्दाकिनी (→मन्दाकिनीं) –b) पा1 °निषेविनीम, दे3 6 °निषेवित, दे10 °निषेवितां (→°निषेविताम्), द1 प्र1 2 ऋषिसङ्घैश्च सेविताम् –c) दे4 10 नदी (→नदीं), ते1 नदीविमलाम पानीय –d) प1 प2 [भ]भवान(?) (→[भ]भवन्):

३ –a) म1 ⊙ –a) पा1 सभ्रम वीक्ष्य, ब3 स तामवेक्ष्य, ब3 स तामवीक्ष्य, दे4 स तामुद्वीक्ष्य, ते1 स गत्वा तत्र (→स तामन्वीक्ष्य) –b) पा1 दे4 8 9 द्वैपायन– (→द्वैपायन) –c) ब3 दे3 6 म1 प्र2 °पूता° (→°पूता°) –d) द1 प्र1 °विधानवद् (→°विधानवित्), दे4 स्नान च स्नानवित् ••

४ –b) पा1 प1-3 दे3 4 द1 प्र1 2 म1 गणान् स्तथा (→°गणांस्तथा) –d) म1 पुष्पैं (→पुष्पैः), ब1 °विधैर् (→°विधैर्)

५ –a) दे8 ते1 प्रविश्यशिष्यै (ते1 °श्य), द1 प1 शिष्यप्रशिष्य–, म1 शिष्यास्य शिष्य– (→प्रविश्य शिष्य–) –d) ते1 सर्पया° (→मर्चया°)

६ –b) ब1 °विग्रह (→°विग्रहाः) –c) द2 रुद्रा (→रुद्रं), पा1 दे4 प2 समागत (दे4 °त), दे1 9 समागता (→समागता) –d) ते1 ईश्वरं मध्यमेश्वरम्

ओंकारासक्तमनसो वेदाध्ययनतत्पराः ।
जटिला मुण्डिताश्चापि शुक्लयज्ञोपवीतिनः ॥७
कौपीनवसनाः केचिदपरे चाप्यवाससः ।
ब्रह्मचर्यरताः शान्ता वेदान्तज्ञानतत्पराः ॥८
दृष्ट्वा द्वैपायनं विप्राः शिष्यैः परिवृतं मुनिम् ।
पूजयित्वा यथान्यायमिदं वचनमब्रुवन् ॥९
को भवान् कुत आयातः सह शिष्यैर्महामुने ।
प्रोचुः पैलादयः शिष्यास्तानृषीन् ब्रह्मभावितान् ॥१०
अयं सत्यवतीसूनुः कृष्णद्वैपायनो मुनिः ।
व्यासः स्वयं हृषीकेशो येन वेदाः पृथक् कृताः ॥११
यस्य देवो महादेवः साक्षादेव पिनाकधृक् ।
अंशांशेनाभवत् पुत्रो नाम्ना शुक इति प्रभुः ॥१२
यः स साक्षान्महादेवं सर्वभावेन शंकरम् ।
प्रपन्नः परया भक्त्या यस्य तज्ज्ञानमैश्वरम् ॥१३
ततः पाशुपताः सर्वे हृष्टसर्वतनूरुहाः ।
नेमुरव्यग्रमनसः प्रोचुः सत्यवतीसुतम् ॥१४
भगवन् भवता ज्ञातं विज्ञानं परमेष्ठिनः ।
प्रसादाद् देवदेवस्य यत् तन्माहेश्वरं परम् ॥१५
तद्वदास्माकमव्यक्तं रहस्यं गुह्यमुत्तमम् ।
क्षिप्रं पश्येम तं देवं श्रुत्वा भगवतो मुखात् ॥१६
विसर्जयित्वा ताञ्छिष्यान् सुमन्तुप्रमुखांस्ततः ।
प्रोवाच तत्परं ज्ञानं योगिभ्यो योगवित्तमः ॥१७
तत्क्षणादेव विमलं संभूतं ज्योतिरुत्तमम् ।
लीनास्तत्रैव ते विप्राः क्षणादन्तरधीयत ॥१८ वं°१.३४.१७

७ द१ म२ ७c–८d ⊙ (– द म). –a) प१ न१ ओंकारासक्त°, ब३ ओंकारासिक्त°, दे३ ६ 8-10 द१ ओंकार-मत्त° (→ओंकारासक्त°) –c) के१ मुण्डित (→मुण्डिता) –d) ब३ मुवँ मुए. मुब शुद्ध°, के१ शुभ्र° (→शुक्ल°)

८ द१ म२. ⊙ (द्र ७ पा दि) –a) ब२ प१ °वासना (→°वसना) –b) दे३.६ चान्य° (→चाप्य°), का१ °वाससा (→°वाससः). –d) का१ दे८ 8-10 मुवँ मुए मुब दीक्षा वे ज्ञान°, प१ वेदाध्ययन° (→वेदान्तज्ञान°)

९. दे४ ९c–१०b ⊙ (द्र स) –a) म१ दृष्ट्वा- (→दृष्ट्वा), प२ विप्र (→विप्रा) –d) द१ प१ २ म१ वचनञ्चेदमब्रवीत् (प३ म१ °मब्रुवन्)

१०. दे४ ab ⊙ (द्र ९ पा दि) –b) दे३ ६ शिष्यैं मत, के१ सह शिष्यो (→सह शिष्यैं) –c) ब३ शौनकादय, दे१ 10 पौलादय, प२ द्वैपायन (→पैलादय), प२ शिष्याः (→शिष्या) –d) के१ तापसान (→तानृषीन्), दे३-10 म१ के१ मुवँ. मुए धर्म- (→ब्रह्म-), ब३ दे३ ४ ६ -भाविनान्, दे३७ -भास्करान्, के१ -भाविण, प१ -भावितान (→-भावितान्)

११ –b) दे8-10 के१ मुवँ मुए मुब प्रभु, प२ विभु (→मुनि) –c) प३ म१ ध्यान(?) (→व्यास)

१२ –b) दे३.७ 8-10 म१ के१ प१ मुवँ मुए मुब साक्षाद् देव (→साक्षादेव), दे10 °धृक्, + °भृत् (→°धृक्) –a) के१ तापसेनाभवत् पुत्रो –d) प२ शुक (→शुक[ ])

१३ –a) का१ पाशु, ब२ दे१ द१ प१ २ म१ दत्त, दे४ प० का, दे8-10 म१ मुवँ. मुए. मुब. यो वै के१ दत्त, (→प्रपन्न), दे10 परयो (→परया) –d) प१ पत्र (→यस्य), ब२१ यज्ज्ञान (→तज्ज्ञान), ब२ दे10 ईश्वरम् (→ऐश्वरम्).

१४ –b) ब१ २ हृष्टसर्व°, दे३-10 मुवँ.मुए मुब ते च हृष्ट-, प२ हृष्टागर्व- (→हृष्टगर्व-), न३ °रुहा, द१ °रुह् (→°रुहाः). –c) का१ ते त (→नेमु:), दे४ तेन पुष्कर प्रसन्ना, दे8-10 के१ मुवँ मुए मुब ऊचुरव्यग्रमनसो –d) दे३-10 के१ मुवँ. मुए. मुब °व्राग (→प्रोचु)

तत पर म३ पुस्तके पतितम—मुनय

१५ व१ १५b–१७c ⊙ (द्र म). –a) ब१-३ दे३-४ 8 10 न१ के१ द१ प१ २ म१ ज्ञान (→ज्ञातं) –b) के१ परमष्ठिनम् (→परमेष्ठिनः) –d) दे४ द१ प३ २ म१ यत्, दे10 तस्मात् (→यत्तत्), प३ दे३ 10 प२ म१ परम (→परम्)

१६ ब१ ⊙ (द्र १५ पा. दि) –a) ब३ दे४ प२ तद्वदस्माक (→तद्वदास्माक), दे३ ६ 8-10 मुवँ मुए मुब मध्यम (→मव्यक्त) –c) का१ पश्यामि त, दे४ द१ प१ म१ पश्यामः, प३ पश्य महा- (→पश्येम तं) –d) म१ मुखम् (→मुखात्)

१७ ब१ abc ⊙ (द्र १५ पा दि), दे8-10 ⊙. –a) के१ नर्तान् (→शिष्यान्) –b) का१ दे२ के१ तथा, मुवँ. मुए मुब तदा (→ततः) –d) ब२ योगविद्यया, दे१ योग मुक्तम् (→योगवित्तमः).

१८ दे7-10 ⊙. –b) ब२ ज्ञानमुत्तमम् (→ज्योतिरुत्तमम्); ब२ तन्मुहूर्तादिलमम. –c) दे२.६ लीनाम्, के१ लिनाम् (→लीनाः)

स्नानं दानं तपः श्राद्धं पिण्डनिर्वपणं त्विह ।
एकैकशः कृतं विप्राः पुनात्यासप्तमं कुलम् ॥३०
संनिहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
यत् फलं लभते मर्त्यस्तस्माद् दशगुणं त्विह ॥३१
एवमुक्त्वा महायोगी मध्यमेशान्तिके प्रभुः ।
उवास सुचिरं कालं पूजयन् वै महेश्वरम् ॥३२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे द्वात्रिंशोऽध्यायः ॥३२॥

# ३३

सूत उवाच ।

ततः सर्वाणि गुह्यानि तीर्थान्यायतनानि च ।
जगाम भगवान् व्यासो जैमिनिप्रमुखैर्वृतः ॥१
प्रयागं परमं तीर्थं प्रयागादधिकं शुभम् ।
विश्वरूपं तथा तीर्थं तालतीर्थमनुत्तमम् ॥२
आकाशाख्यं महातीर्थं तीर्थं चैवार्षभं परम् ।
स्वर्लीलं च महातीर्थं गौरीतीर्थमनुत्तमम् ॥३ व.१.३४.३

३० -a) स१ व१ दे२-४,६ द१ प्र१ शान (→स्नान), दे३ दान्त, द१ ध्यान (→दान), न१ तथा, (→तप) -b) व३ दे१० द१ प१ म१ °निर्वापण (→°निर्वपण), प्र१ पितृ (→त्विह) -c) म१ एनेकश (→एकैकश), दे८ कृत (→कृतं) -d) द१ पुनरुत्त° (→पुनात्या°)

अन परं का१ दे२ पुस्तके अधिकम्—

३५ •ते यान्ति तत्पर स्थान तत्र कार्या विचारणा ।

३१ -a) व१,३ दे२ संनिहित्यां, दे४ द१ प्र१,२ म१ मन्दाकिनी (प२ °न्यां) (→संनिहत्यां), ते१ उपस्पृत्य (→उपस्पृश्य) -c) दे१० यत्पुण्यं (→यत्फलं), का१ मर्त्यं, दे८ मर्त्योन्, दे९ मर्त्या, दे१० मरवा, प२ मर्त्या (→मर्त्य)

३२ -a) द१ उक्त, +उक्त्वा (→उक्त्वा), का१ महादेवो (→महायोगी) -b) दे३,६ शान्तिके (→शान्तिके), स१-३ दे३,८ पुन (→प्रभु), न१ मध्यमेनरथीमत -c) प२ उवाच (→उवास) -d) प२ पूजयद् (→पूजयन्)

पुष्पिका—

पुराणनाम—द१ O, का१ दे२ इत्यादिमहापुराणे कौर्मे, व१ इति कौर्मे, व२,३ दे३,८ इति कूर्मपुराणे, दे९,१०,११ म१ मुद्र मुए इति श्रीकूर्मपुराणे, न१ इति श्रीकौर्मे, ते१ इत्यादिमहापुराणे श्रीकौर्मे, मुव इति श्रीकौर्मे महापुराणे पूर्वभागे अध्याय नाम—का१ व१ दे२-४,६ म१ ते१ द१ प्र१,२ प१ O, व२,३ दे३,८ मुद्रे मुए मुव वाराणसीमाहात्म्य, दे१० वाराणसीमहात्म्य अध्यायसंख्या—दे५ द१ O, का१ व१,३ दे२ न१ प१ एकत्रिंशो ऽध्याय, व२ ॥३१॥, दे१ त्रिंशोऽध्याय, दे४ एकत्रिंशोऽध्याय ॥३१॥, दे३-५ मुए चतुस्त्रिंशोऽध्याय, दे१० मुद्रे चतुस्त्रिंशोऽध्याय ॥३४॥, ते१ द्वात्रिंशोऽध्याय प्र२ म१ मुव त्रयस्त्रिंशोऽध्याय

३३

[दे१,४ पुस्तकयो प्रथमश्लोको नास्ति, अध्यायारम्भे प्र२ पुस्तके अधिकम्—श्रीगणेशाय परब्रह्मणे नम ]

✱ न१ द१ प्र२ O, द३ सूत उ , ते१ श्री शिव सूत , प१ सूत , म१ श्रीसूत

१ -a) प्र१ भूतानि, प्र२ म१ तीर्थानि (→गुह्यानि) -b) ते१ पुण्या वा°, प्र२ म१ गुह्यान्या° (→तीर्थान्या°)

२ दे१० २b-४a O (६ स), दे८ bc O, दे५ २d-४a O (६ स) -a) मुव प्रयाण (→प्रयाग), म१ प्रयागतीर्थं (→परमं तीर्थं) -b) दे५ शुभां (→शुभं), दे३,६ तीर्थं चैव महानदी -c) दे३ महातीर्थं (→तथा तीर्थं) -d) दे५ ताल° द६ न१ द३ प१,२ प१ मुद्रे मुए मुव नरक°, दे८ ज्ञान°, ते१ नाग° (→ताल°)

दे४,९ पुस्तकयो b, c मध्ये अधिकम्—

• नागाख्यं परं तथा चापुतीर्थमनुत्तमम् ( = ४ cd )

३ दे३,९ ३-४ O (६ सं), दे५,८ O (६ स ) -a) प२ म१ उषा (→आका-) -b) प२ पैशाचं द१ पैशाचं मुद्रे मुए पैशाच (→चैवार्ष-), न१ शुभ (→परम्), ते१ तीर्थं चैव महत्परं प२ वायुतीर्थमनुत्तमम् -c) का१ प२,३ द२ स्वर्लीलं, व१ स्व दीन, दे४ स्वर्लीन ते१ स्वर्लीनं, द१ स्वस्थान, प्र१ स्वर्णलीनं, मुद्रे मुए मुव स्वर्लीनं (→स्वर्लीलं) प२ ज्ञानतीर्थं परं शुभं, म१ स्वर्णतीर्थं -d) द१ नमस्तं (→अनुत्तमम्), प२ वारणतीर्थमनुत्तमम्

वें १.३५.४ प्राजापत्यं तथा तीर्थं स्वर्गद्वारं तथैव च ।
जम्बुकेश्वरमित्युक्तं धर्माख्यं तीर्थमुत्तमम् ॥४
गयातीर्थं महातीर्थं तीर्थं चैव महानदी ।
नारायणं परं तीर्थं वायुतीर्थमनुत्तमम् ॥५
ज्ञानतीर्थं परं गुह्यं वाराहं तीर्थमुत्तमम् ।
यमतीर्थं महापुण्यं तीर्थं संवर्तकं शुभम् ॥६
अग्नितीर्थं द्विजश्रेष्ठाः कलशेश्वरमुत्तमम् ।
नागतीर्थं सोमतीर्थं सूर्यतीर्थं तथैव च ॥७

पर्वताख्यं महागुह्यं मणिकर्णमनुत्तमम् ।
घटोत्कचं तीर्थवरं श्रीतीर्थं च पितामहम् ॥८
गङ्गातीर्थं तु देवेशं ययातेस्तीर्थमुत्तमम् ।
कापिलं चैव सोमेशं ब्रह्मतीर्थमनुत्तमम् ॥९
अत्र लिङ्गं पुरातीय ब्रह्मा स्नातुं यदा गतः ।
तदानीं स्थापयामास विष्णुस्तल्लिङ्गमैश्वरम् ॥१०
ततः स्नात्वा समागत्य ब्रह्मा प्रोवाच तं हरिम् ।
मयानीतमिदं लिङ्गं कस्मात् स्थापितवानसि ॥११

---

४ दे10 ⊙ (द्र २ पा वि), दे8 9 ⊙ (द्र ३ पा वि), ग्र2 cd ○, दे5 a ○ –a) दे8 न1 दा ग्र1 2 म1 पर, ते1 महा- (→तथा) –b) व2 दे3 6 सु(वे2 सु)न्दतीर्थं, ग्र3 स्वर्गतीर्थं, ग्र2 कालतीर्थं (→स्वर्गद्वार), प्र2 मनुत्तमम् (→तथैव च), ते1 गोकुकेश्वरमुत्तमम् –c) दे3 6 गुह्यमेश्वरम् (→जम्बुकेश्वरम्) –d) व3 दे3 6 न1 मुबं, मुए मुब धर्माख्य, म1 धर्मार्थं (→धर्माख्य), प्र2 धर्माख्यस्तमनुत्तमम्, ते1 धर्मतीर्थं तथैव च

५ दे8 9 ⊙ (द्र ३ पा वि), दे10 a ○ (द्र २ पा वि), दे5 म1 ५a–६b)○, व1 ○ (द्र स) –a) ग्र1 2 सोमतीर्थं (→गयातीर्थं), का1 दे2 परं तीर्थं, प्र3 दे3 महातीर्थं, ग्र1 2 सूर्यतीर्थं (→महातीर्थं) –b) दे10 ते1 °नदीम् (→°नदी) –c) व2 तथा तीर्थं, ग्र1 2 महातीर्थं (→परं तीर्थं) –d) व2 महानदी (→मनुत्तमम्)

६ व1 दे5 म1 ab ○ –a) दे9 10 तथा (→परं) –b) प्र2 एव च (→उत्तमम्), ग्र2 वरतीर्थमनुत्तमम् –c) प्र1 महातीर्थं (→महापुण्य) –d) व1 स्मृतं, दे8 10 न1 ते1 मुबं मुए मुब परं (→शुभम्), दा प्र1 म1 तीर्थं सर्वतुं शुभम्, प्र2 तीर्थं सर्वत्र शुभ

७ व1 ७c–९d○, प्र2 ७b–५ ⊙(द्र १), म1 cd ○, न1 d ⊙ –a) न1 अग्नि°, दे3 महा° (→अग्नि°), दे9-10 °श्रेष्ठ (→°श्रेष्ठाः) –b) का1 दे10 कतालेश्वर, व3 कपलेश्वर, म1 केदारेश्वर, व2 कुम्भेश्वर, दा प्र2 म1 मुबं मुए मुब भारतेश्वर, प्र1 का 1 केशवं (→कलशेश्वरम्), ते1 प्र2 मनुत्तमम् (→उत्तमम्) –c) दे8 नागतीर्थं, प्र1 मार्गतीर्थं (→नागतीर्थं), दे10 सूर्यतीर्थं, ते1 गयातीर्थं, दा प्र1 गयातीर्थं (→नागतीर्थं) –d) का1 दर्श°, दे10 सोम°, व1 महा° (→सूर्य°)

म1 पुस्तके b, c मध्ये अधिकम्—
* सोमतीर्थं सूर्यतीर्थं तीर्थं चैव महानदी ।
नारायणं महातीर्थं वायुतीर्थमनुत्तमम् ।
ज्ञानतीर्थं परं गुह्यं वाराहं तीर्थमुत्तमम् ।
भागतीर्थं गयातीर्थं महातीर्थं तथैव च । (=५ ६)

८ व1 प्र2 ○ (द्र ७ पा वि), दा प्र1 ८c–१० d ○; दे5 ८c–९d ○ (द्र स), म1 a ⊙ –a) ते1 पर्वताख (→पर्वताख्य), दे8 10 दे1 दा प्र1 मुबं मुए मुब °पुण्य (→°गुह्य) –b) दे3 6 मणिकर्णं, दे5 न1 मणिकीर्णं (न1 °र्ण) (→मणिकर्णम्), दा म1 मणिकर्णिकमुत्तमम्, प्र1 पुण्यञ्च मणिकर्णिकम् –c) दे8 9 घटोत्कच, म1 घुण्टोत्कच (→घटोत्कचं) –d) प्र2 तीर्थं चापि पितामहम्

९ व1 प्र2 ○ (द्र ७ पा वि), दे5 दा म1 ○ (द्र ८ पा वि.) –a) दे3 6 ते1 म1 च (→तु), व2 3 दे3 न1 देवीश (→देवेश) –b) प्र2 दे10 न1 ययाते (→ययातेम्), ते1 ययातेस्तीर्थक परम्, मुबं मुए तथा तत्तीर्थमुत्तमम् –c) का1 व2 3 दे6 8 न1 मुबं मुए मुब कपिल (→कापिल), दे8 9 तीर्थं- (→चैव), ते1 उत्तम कपिल गोल –d) प्र2 चन्द्रतीर्थं तथैव च

१०. प्र2 ○ (द्र ७ पा वि), दे8-10 न1 म1 मुए १०–१२ ○, दा प्र1 ○ (द्र ८ पा वि.). –a) मुबं मुब यत्र (→अत्र), का1 प्र2 दे2 5 6 मुब पुरानीत, व1 3 मुबं पुरानीय (→पुरातीय), ते1 अत्र लिङ्गं समानीय –b) का1 व3 दे2 5 मुबं मुब स्नातु ब्रह्मा, प्र2 गतस ब्रह्मा, ते1 ब्रह्मा स्नात (→ब्रह्मा स्नातुं) –d) प्र2 लिङ्गमुत्तमम् (→लिङ्गमैश्वरम्)

११ प्र2 ○ (द्र ७ पा वि), दा प्र1 ○ (द्र ८ पा वि), दे8-10 न1 म1 मुए ○ (द्र. १० पा वि), दे5 ११d १२a ○, –a) ते1 तत्र (→ततः), का1 दे2 5 समागम्य (→समागत्य) –b) व3 विष्णु (→हरिं) –c)

तमाह विष्णुस्त्वत्तोऽपि रुद्रे भक्तिर्दृढा मम ।
तस्मात् प्रतिष्ठितं लिङ्गं नाम्ना तव भविष्यति ॥१२

भूतेश्वरं तथा तीर्थं तीर्थं धर्मसमुद्भवम् ।
गन्धर्वतीर्थं परमं वाह्नेयं तीर्थमुत्तमम् ॥१३

दौर्वासिकं व्योमतीर्थं चन्द्रतीर्थं द्विजोत्तमाः ।
चित्राङ्गदेश्वरं पुण्यं पुण्यं विद्याधरेश्वरम् ॥१४

केदारतीर्थमुग्राख्यं कालञ्जरमनुत्तमम् ।
सारस्वतं प्रभासं च भद्रकर्णं ह्रदं शुभम् ॥१५

लौकिकाख्यं महातीर्थं तीर्थं चैव महालयम् ।
हिरण्यगर्भं गोप्रेक्ष्यं तीर्थं चैव वृषध्वजम् ॥१६

उपशान्तं शिवं चैव व्याघ्रेश्वरमनुत्तमम् ।
त्रिलोचनं महातीर्थं लोलार्कं चोत्तराह्वयम् ॥१७

कपालमोचनं तीर्थं ब्रह्महत्याविनाशनम् ।
शुक्रेश्वरं महापुण्यमानन्दपुरमुत्तमम् ॥१८

एवमादीनि तीर्थानि प्राधान्यात् कथितानि तु ।
न शक्यं विस्तराद् वक्तुं तीर्थसंख्या द्विजोत्तमाः ॥१९

तेषु सर्वेषु तीर्थेषु स्नात्वाऽभ्यर्च्य पिनाकिनम् ।
उपोष्य तत्र तत्रासौ पाराशर्यो महामुनिः ॥२०

तर्पयित्वा पितॄन् देवान् कृत्वा पिण्डप्रदानकम् ।
जगाम पुनरेवापि यत्र विश्वेश्वरः शिवः ॥२१ पं.१.३५.१८

---

व2 मघातीरं (→मत्तामीश); दे8 तीर्थं (→लिङ्ग) –d) दे3 धर्मं (→तस्मात्)

१२ व2 ⊙ (द्र ७ पा. टि.), दा या ⊙ (द्र ८ पा टि); दे8-10 न1 म1 मुए ⊙ (द्र १० पा टि), दे6 ⊙ (द्र ११ पा टि.); वा १२ c-१५ b ⊙ –b) ते1 रुद्र- (→रुद्रे), व2 भवत्, दे3 मुबँ मुव. वत, दे5 मत, ते1 [भ]क्ति न (→मम) –d) मुवँ. तत्र (→तव)

१३. ब1 दा प्र1 ९ ⊙, दे9 10 ⊙ –a) का1 दे2.5 महा° (→गन्ध°) –b) का1 व2 दे2 5 तीर्थधर्ममनुत्तमम, त1 तीर्थं धर्मसमुद्भुत, ते1 तीर्थं धर्मसमन्वितम् –c) का1 च शुभ, व2 दे3 म1 मुवँ मुए, मुव शुभम्, व3 दे2 5 स्वशुभं, ते1 अपर (→परम) –d) दे1 वाग्नेय, दे6 वह्नेय (→वाह्नेयं), ते1 गौरी तीर्थमनुत्तमम्

१४ बा व2 ⊙ (द्र ७,१२ पा टि) –a) दा प्र1 म1 मुवँ मुए मुव होमतीर्थं (→व्योमतीर्थ), ते1 वैयासिक व्यासतीर्थं –b) दे8-10 ते1 तथैव च, न1 मनुत्तमम (→द्विजोत्तमा) –c) का1 दिव्य म°, दे2 शीर्षाग°, दे1 चोद्याग° (→चित्राङ्ग°), का1 दे2 5 तीर्थं (→पुण्य)

१५ बा व2 ab ⊙ (द्र ७,१२ पा टि) –a) का1 दे2 5 6-8 9 न1 म1 मुवँ मुए मुव केदार, दा प्र1 के (प्र2 कै) दार्य (→केदार-), दे8-10 मुवँ मुए -मुग्राख्य (→उग्राख्य) –b) दे1-10 कालिञ्जरम् (→कालञ्जरम्), –c) दा1 सारस्वत (→सारस्वतं), व3 दे2 5 प्रभार, म1 प्रभाव (→प्रभासं) –d) का1 दे1-10 मुवँ मुए भद्रवर्ण° (का1 र्ण-), दे5 ते1 दा प्र1 भद्रवर्ण- (दा1 °र्णा) (→भद्रकर्ण), व1 प्रद, व2 मुव. तथा, व3 दे2,5 पद, दे1 द्रद, दे8-10 मुवँ मुए हृदं (→ह्रदं), ते1 भद्रकर्णम् परम्.

१६. –a) का1 कौलभास्य, दे2 5 कौशिकाख्य, ते1 कौमाख (→लौकिकाख्य), दा प्र1 2 महापुण्य (→महातीर्थं) –b) दे2 8-10 मुवँ मुए मुव. हिमालय (→महालयम्). –c) का1 व1 3 दे5 न1 ते1 दा प्र1 गोप्रेक्ष, व2 दे8 9 मुवँ मुए मुव गोप्रेक्ष्य, व2 गोप्रेक्षर, म1 गोप्रेक्षं (→गोप्रेक्ष्य)

१७ –a) व1 उपागत, दे8-10 उपशान्ति (→उपशान्त) –c) ते1 °पुण्य (→°तीर्थं) –d) ते1 लोकेश, दा प्र1 2 म1 कोणार्कं (प्र1 °र्क्य) (→लोलार्कं), व2 रथाभग (→[उ]त्तराह्वयम्)

१८ –a) व2 कपाले (→कपाल-), –b) दा प्र1 2 म1 ब्रह्महत्यादि (प्र2 °दि) मोचन –c) व2 3 दे1 6 गणेश्वर, मुव चक्रेश्वर (→शुक्रेश्वर), व2 महातीर्थं, व3 महत्तीर्थ (→महापुण्य) –d) आनन्द (→आनन्द-), ते1 मानदं पर-मुत्तमम, प्र2 मान-स्कन्दमुत्तमम्

१९ –b) व1 ते1 व2 च (→तु) –c) व2 दे2 8-9 मुवँ मुए मुव न शक्या, दे6 व2 न शक्याद् (→न शक्यं) –d) का1 °संख्या (→°संख्या); का1 दे5 द्विजोत्तमम् (→द्विजोत्तमाः)

२० दे3 २०b-२१d ⊙ (द्र. ग ). –b) का1 दे10 स्नात्वाभ्यर्च्य (?) व2 स्नात्वाभ्यर्च्य (→स्नात्वाऽभ्यर्च्य), व2 मुव पिनाकिनम्, दे8-10 व2 मुवँ मुए. समानयन् (→पिनाकिनम्), दे1 स्नात्वा पूर्वं पिनाकिनम्

२१ दे3 ⊙ (द्र. २० पा टि) –c) ते1 [प]न (→[प]ुन[रे]) –d) दा1 तत्र (→यत्र)

२१ स्नात्वा.... व2 २१ cd पुनरागमत्.

व १.३१.१६ स्नात्वाऽभ्यर्च्य परं लिङ्गं शिष्यैः सह महामुनिः ।
उवाच शिष्यान् धर्मात्मा स्वान् देशान् गन्तुमर्हथ ।।२२
ते प्रणम्य महात्मानं जग्मुः पैलादयो द्विजाः ।
वासं च तत्र नियतो वाराणस्यां चकार सः ।।२३
शान्तो दान्तस्त्रिषवणं स्नात्वाऽभ्यर्च्य पिनाकिनम् ।
भैक्षाहारो विशुद्धात्मा ब्रह्मचर्यपरायणः ।।२४
कदाचिद् वसता तत्र व्यासेनामिततेजसा ।
भ्रममाणेन भिक्षा तु नैव लब्धा द्विजोत्तमाः ।।२५
ततः क्रोधावृततनुर्नराणामिह वासिनाम् ।
विघ्नं सृजामि सर्वेषां येन सिद्धिर्विहीयते ।।२६
तत्क्षणे सा महादेवी शंकरार्द्धशरीरिणी ।
प्रादुरासीत् स्वयं प्रीत्या वेषं कृत्वा तु मानुषम् ।।२७
भो भो व्यास महाबुद्धे शप्तव्या भवता न हि ।
गृहाण भिक्षां मत्तस्त्वमुक्त्वैवं प्रददौ शिवा ।।२८
उवाच च महादेवी क्रोधनस्त्वं भवान् यतः ।
इह क्षेत्रे न वस्तव्यं कृतघ्नोऽसि त्वया सदा ।।२९
एवमुक्तः स भगवान् ध्यानाज्ज्ञात्वा परां शिवाम् ।
उवाच प्रणतो भूत्वा स्तुत्वा च प्रवरैः स्तवैः ।।३०
चतुर्दश्यामथाष्टम्यां प्रवेशं देहि शांकरि ।
एवमस्त्वित्यनुज्ञाय देवी चान्तरधीयत ।।३१
एवं स भगवान् व्यासो महायोगी पुरातनः ।
ज्ञात्वा क्षेत्रगुणान् सर्वान् स्थितस्तस्याथ पार्श्वतः ।।३२
एवं व्यासं स्थितं ज्ञात्वा क्षेत्रं सेवन्ति पण्डिताः ।
तस्मात् सर्वप्रयत्नेन वाराणस्यां वसेन्नरः ।।३३

---

२२ –a) दे8-10 द1 श्री 1 2 मुवँ मुए मुव महा- (→पर) –b) व2 सह शिष्यैर्महामुनि, –d) दे8-10 मुवँ मुए मुव यथेष्ट (→स्वान् देशान्), दे5 स्वाशाना तु महर्थय, न1 सदेशा न तु महथ (?)

२३ –a) व2 महादेव, श्री2 महात्मान (→महात्मान) –c) श्री2 तु (→च) –d) द1 श्री1 2 ह (→स)

२४ –a) द1 श्री1 2 म1 दान्तश्शान्तस् (→शान्तो दान्तस्) –ab) ते1 शान्तो दान्तशुचि स्नात्वा ह्यर्चयित्वा पिनाकिनम् –c) व2 भैक्षाहारैर्, दे3 3 6 श्री2 भैक्ष्याहारो (→भैक्षाहारो) –d) व1 दे10 °परायण (व1 °णः) (→°परायणः)

२५ –a) दे8-10 ते1 मुवँ मुए मुव तत्र वसता (→वसता तत्र) –b) न1 [अ]मृततेजसा, द1 श्री1 [अ]द्भुत-तेजसा, श्री2 म1 [अ]द्भुतचेतसा (→[अ]मिततेजसा) –c) दे9 भिक्षां (→भिक्षा), दे8-10 मुवँ मुए मुव वै (→तु), श्री1 भ्रममाणेन भिक्षार्थं, श्री2 भ्रममाणे विशुद्धात्मा

२६ –a) न1 तत्र (→ततः), का1 °वृततनु, व1 °वृतस्तत्र (→°वृततनुर्) –b) ते1 वाराणस्यां निवासिनाम् –d) दे8 9 मुवँ मुए मुव हि हीयते, दे10 हि नीयते, ते1 विनश्यति, द1 विधीयते, श्री2 प्रक्षीयते, म1 विहन्यते (→विहीयते)

२७ –a) दे5 तत्क्षणैमा, दे8 9 मुवँ मुए मुव तत्क्षण(दे9 क्ष)णात् सा दे10 तत्क्षणा(?)त्सा ते1 तत्र क्षणात्, श्री1 न1 क्षणे सा (→तत्क्षणे सा) –c) द1 श्री1 म1 प्रीतात् (→प्रीत्या) –d) दे5 वश (?) (→वेष), व2 च (→तु), दे5 मानुषा (→मानुषम्)

२८ –b) श्री1 म1 शप्तव्यो (म1 °व्य) (→शप्तव्या), व2 न शप्तव्या त्वया पुरी, व3 मुवँ मुए मुव शप्तव्या न त्वया पुरी –c) ते1 गृहाण भिक्षां संतुष्टा, श्री1 मत्त गृहाण भिक्षास्त्व –d) का1 म1 उक्तैव, व3 उक्त्वैव (→उक्त्वैव)

२९ –a) ते1 तदोवाच (→उवाच च), दे5 °देवो (→°देवी) –b) न1 क्रोधनस्त्वा (→क्रोधनस्त्वं), का1 भवान्यत, यतो मुने, दे8 10 मुवँ मुए मुव यतो मुने, ते1 दुरात्मक (→भवान्यतः) –c) श्री2 इति (→इह) –d) दे10 कृतघ्नोऽपि (→कृतघ्नोऽसि), का1 तथा, दे5 त्वया, दे8-10 मुवँ मुए मुव यत (→त्वया)

३० –a) म1 एवमुक्त्वा (→एवमुक्त) –b) व2 दे8-10 न1 मुव ध्यात्वा, ते1 व्यासो (→ध्यानाज्), का1 दे1 5 कृत्वा (→ज्ञात्वा) –d) का1 दे2 3 6 प्रणवै (दे6 °वैः), दे5 प्रवर्णैः (→प्रवरैः)

३१ –a) ते1 श्री1 तथाष्टम्या (→थाष्टम्यां) –b) व1 2 दे3 6 8-10 न1 द1 श्री2 म1 शर्करि (दे10 °र) (→शांकरि) –c) श्री1 एकम् (→एवम्) दे3 6 एवमस्त्विति विज्ञाय, न1 एवमुक्तस्त्वनुज्ञाय –d) दे10 देवी (→देवी)

३१ श्लोकानन्तरं म1 अधिकम्
२८ • वत्स भगवान् योगी कृष्णद्वैपायन प्रभु ।

३२ –a) द1 श्री1 परस्य, श्री2 परवत्र (→एव स) –d) दे8 10 [अ]ति (→[अ]थ)

३३ –a) व3 श्री2 व्यास- (→व्यासं), ते1 स्थितिं (→स्थितं) –b) दे8 सेविन, दे10 सेवन्ति, द1 श्री1 2 म1 पश्यन्ति (→सेवन्ति), दे10 पंडित (→पण्डिताः).

सूत उवाच ।❀

यः पठेदविमुक्तस्य माहात्म्यं शृणुयादपि ।
श्रावयेद् वा द्विजान् शान्तान् सोऽपि याति परां गतिम् ३४
श्राद्धे वा दैविके कार्ये रात्रावहनि वा द्विजाः ।
नदीनां चैव तीरेषु देवतायतनेषु च ॥३५
स्नात्वा समाहितमना दम्भमात्सर्यवर्जितः ।
जपेदीशं नमस्कृत्य स याति परमां गतिम् ॥३६

*इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे त्रयस्त्रिंशोऽध्यायः ॥३३॥*

# ३४

ऋषय ऊचुः ।❀

माहात्म्यमविमुक्तस्य यथावत् तदुदीरितम् ।
इदानीं तु प्रयागस्य माहात्म्यं ब्रूहि सुव्रत ॥१
यानि तीर्थानि तत्रैव विश्रुतानि महान्ति वै ।
इदानीं कथयास्माकं सूत सर्वार्थविद् भवान् ॥२ वे १३६.२

सूत उवाच ।❀

❀ दे4 द1 ग1-3 म1 ⊙; दे8 9 सूत उ, न1 ते1 सूत

३४ –b) दे8-10 न1 ते1 मुवें मुए मुव श्रय (→यपि) –c) का1 दे2 श्रावयित्वा, दे5 श्रावयित्वा (→श्रावयेद्वा), द1 ग1.2 म1 द्विजस् (→द्विजान्), दे3.6 सर्वान्, न1 शान्तात्, द1 प1.2 म1 शान्त (→शान्तान्) –d) का1 ब1.3 दे2 3 5 6 न1 पर पद (→परां गतिम्), दे8-10 ते1 मुवें मुए मुव स याति परमां गतिम्

३५ –a) प1 च (→वा), ब3 दे5 वैदिके (→दैविके) –b) म1 च (→वा), ब2 द्विज (→द्विजाः), दे8-10 यावत्सा वा द्विजोत्तमा –c) दे3 6 तीर्थेषु (→तीरेषु) –d) दे2 5 दैवता° (→देवता°), दे3 6 °यतनेष्वपि (→°यतनेषु च)

३६ –a) ब1 दे8 10 मुवें मुए ज्ञात्वा (→स्नात्वा), दे8 9 न1 प2 म1 मुवें मुए मुव °मना, ते1 °मति (→°मना) –b) द1 दे1 द1 म1 2 °वर्जिता (→°वर्जित), दे8-10 मुवें मुए मुव कामक्रोधविवर्जित, ते1 मदमात्सर्य-वर्जित, –c) ते1 पठेदीश (→जपेदीश), न1 ते1 म1 नमस्कृत्वा (→नमस्कृत्य) –d) का1 दे2 5 परम पद (→परमां गतिम्)

पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

पुराणनाम—का1 दे2 5 इत्यादिमहापुराणे कौर्मे, ब1 इति कौर्मे, ब2 3 दे1 इति कूर्मपुराणे, दे6 8-10 मुवें मुए इति श्रीकूर्मपुराणे, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, म1 इति श्रीमत्कूर्मपुराणे, मुव इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम—न1 ते1 ⊙, का1 ब3 दे2 3 5 8-10 प1 2 म1 मुवें मुए वाराणसी मा (दे10 म) हात्म्ये, प1 दे8 वाराणसीमाहात्म्यं समाप्तम्, ब2 वाराणसी-माहात्म्य, मुव वाराणसीमाहात्म्य नाम. अध्यायसंख्या—ब1 दे6 ⊙, का1 द्वात्रिंशोऽध्याय ॥३२॥ वाराणसीमाहात्म्य समाप्तम् ॥, ब2 ॥३३॥, ब3 दे3 न1 म1 द्वात्रिंशोऽध्याय, दे2 द्वात्रिंशोऽध्याय वाराणसी माहात्म्य समाप्तम्, दे5 द्वात्रिंशोऽध्याय ॥ वाराणसीमाहात्म्य समाप्तम् ॥, दे9 पञ्चत्रिंशोऽध्याय ॥ वाराणसीमाहात्म्य समाप्तम्, दे10 पञ्चत्रिंशोऽध्याय ॥३५॥ इति वाराणसी महात्म्य सपूर्णम् ॥ श्री जगदीशार्पण-मस्तु ॥, ते1 त्रयस्त्रिंशोऽध्याय, प2 म1 चतुस्त्रिंशोऽध्याय, मुवें पञ्चत्रिंशोऽध्याय ॥३५॥, मुए पञ्चत्रिंशोऽध्याय, मुव चतुस्त्रिंशोऽध्याय ॥३४॥

## ३४

[दे1 पुस्तके अध्यायारम्भे अधिकम्—ॐ नमः गणेशाय नमः । दे10 पुस्तके अध्यायारम्भे अधिकम्—श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्री गुरुभ्यो नमः ॥ अथ कूर्मपुराणे ३६ अध्याय । मगल दिशतु मे विनायको मगल दिशतु मे सरस्वती मगल दिशतु मे महेश्वरो मगल दिशतु मे महेश्वरी ॥१॥]

❀ दे5 द1 म1, ⊙, दे8 9 ऋषय ऊ, दे10 ऋषय उवाच, न1 प2 म1 ऋषय, ते1 श्रीशिव, –ऋषय

१ दे, ⊙ –a) दे10 प2 महा° (→माहा°) –b) ब1 यथा वद्र° दे3 6 ते1 मुवें मुए मुव यथावत्, गमु°, दे3 10 यथा तावदु°, न1 यथावरदु°, द1 ग1.2 म1 यथा तस्यमु° (→यथावत्तदु°), ब3 यथावत् यथोदितम् –c) दे8-10 मुवें मुए मुव इदानीञ्च, द1 म इदानीं, ब1 2 म1 त्वमिदानी (→इदानीं तु) –d) दे10 महा° (→माहा°); ब1.3 गत्तम, दे2 सुव्रत, दे10 सुव्रत (→सुव्रत)

२ दे, ⊙ –a) दे1 तत्रापि (→तीर्थानि) –b) का1 ब2 दे2 च (→वै) –d) प1 कथं (→सूत),

वें.१३६२ शृणुध्वमृषयः सर्वे विस्तरेण ब्रवीमि वः ।
प्रयागस्य च माहात्म्यं यत्र देवः पितामहः ॥३
मार्कण्डेयेन कथितं कौन्तेयाय महात्मने ।
यथा युधिष्ठिरायैतत् तद्वक्ष्ये भवतामहम् ॥४
निहत्य कौरवान् सर्वान् भ्रातृभिः सह पार्थिवः ।
शोकेन महताविष्टो मुमोह स युधिष्ठिरः ॥५
अचिरेणाथ कालेन मार्कण्डेयो महातपाः ।
संप्राप्तो हास्तिनपुरं राजद्वारे स तिष्ठति ॥६
द्वारपालोऽपि तं दृष्ट्वा राज्ञः कथितवान् द्रुतम् ।
मार्कण्डेयो द्रष्टुमिच्छंस्त्वामास्ते द्वार्यसौ मुनिः ॥७
त्वरितो धर्मपुत्रस्तु द्वारमेत्याह तत्परम् ।
स्वागतं ते महाप्राज्ञ स्वागतं ते महामुने ॥८
अद्य मे सफलं जन्म अद्य मे तारितं कुलम् ।
अद्य मे पितरस्तुष्टास्त्वयि तुष्टे महामुने ॥९
सिंहासनमुपस्थाप्य पादशौचार्चनादिभिः ।
युधिष्ठिरो महात्मेति पूजयामास तं मुनिम् ॥१०
मार्कण्डेयस्ततस्तुष्टः प्रोवाच स युधिष्ठिरम् ।
किमर्थं मुह्यसे विद्वन् सर्वं ज्ञात्वाहमागतः ॥११
ततो युधिष्ठिरो राजा प्रणम्याह महामुनिम् ।
कथय त्वं समासेन येन मुच्येत किल्बिषैः ॥१२
निहता बहवो युद्धे पुंसो निरपराधिनः ।
अस्माभिः कौरवैः सार्द्धं प्रसङ्गान्मुनिसत्तम ॥१३

येन हिंसासमुद्भूताज्जन्मान्तरकृतादपि ।
मुच्यते पातकादस्मात् तद् भवान् वक्तुमर्हति ॥१४

मार्कण्डेय उवाच ।❀

शृणु राजन् महाभाग यन्मां पृच्छसि भारत ।
प्रयागगमनं श्रेष्ठं नराणां पापनाशनम् ॥१५
तत्र देवो महादेवो रुद्रो विश्वामरेश्वरः ।
समास्ते भगवान् ब्रह्मा स्वयंभूरपि दैवतैः ॥१६

युधिष्ठिर उवाच ।❀

भगवञ्छ्रोतुमिच्छामि प्रयागगमने फलम् ।
मृतानां का गतिस्तत्र स्नातानामपि किं फलम् ॥१७
ये वसन्ति प्रयागे तु ब्रूहि तेषां तु किं फलम् ।
भवता विदितं ह्येतत् तन्मे ब्रूहि नमोऽस्तु ते ॥१८

मार्कण्डेय उवाच ।❀

कथयिष्यामि ते वत्स या चेष्टा यच्च तत्फलम् ।
पुरा महर्षिभिः सम्यक् कथ्यमानं मया श्रुतम् ॥१९
एतत् प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम् ।
अत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥२०
तत्र ब्रह्मादयो देवा रक्षां कुर्वन्ति संगताः ।
बहून्यन्यानि तीर्थानि सर्वपापापहानि तु ॥२१
कथितुं नेह शक्नोमि बहुवर्षशतैरपि ।
संक्षेपेण प्रवक्ष्यामि प्रयागस्येह कीर्तनम् ॥२२
षष्टिर्धनुःसहस्राणि यानि रक्षन्ति जाह्नवीम् ।
यमुना रक्षति सदा सविता सप्तवाहनः ॥२३ मे १.३१ २३

दे3 °गुह्नवा, व1 दे1 4 8-10 न1 ते1 मुबँ मुए मुव °गस्तम (न1 °म) (→°गुह्नव).

१४. –a) व1 2 दे1-6 8-10 न1 ते1 द1 म1.2 समुद्भूता (→समुद्भूताद्) –c) ब1 दे8 9 मुबँ मुए मुव मुच्येय, दे1 मुच्येय, न1 वध्यते, भ1 मुच्येते, म1 मुच्येत (→मुच्यते), दे1 येन, दे5.6 मन्यात्, दे8-10 ते1 मुबँ मुए मुव महत्, न1 मत्पं (→मस्मात्), ब1 मुच्ये तत् पातका दयात् –d) दे4 वर्त्तं (→वक्तु), दे1 4-6 9 10 द1 म2 मर्हसि (→मर्हति)

❀ दे3 8 9 मार्कण्डेय उ, न1 ते द1 म1 2 म1 मार्कण्डेय

१५ –a) का1 दे2 5 महाबाहो (→महाभाग) –b) दे2.5 भारत (→भारत) –d) का1 दे2 5 °शोधन दे3 6 °शोधन (→°नाशनम्)

१६ –a) दे1 तत्र देवा महादेवा –b) दे1 ते1 विश्वा (ते1 °श्व) महेश्वर, दे4 विश्वामरे स्थित, दे6 विश्वश्वरेश्वर, दे9 मुबँ मुए [म] वाराणसीश्वर (→विश्वामरेश्वर) –c) दे1 समस्ते, दे3 समास्व (→समास्ते) –d) दे8-10 मुबँ मुए मुव सह (→मपि)

❀ दे3 8 9 युधिष्ठिर उ, न1 ते1 द1 म1 2 म1 युधिष्ठिर

१७ दे1 cd ○ (द म) –a) ब1 दे1 भगवान् (→भगवन्). –b) म1 2 दे4 °गमन (→°गमने) –d) दे8 9 मुबँ मुए मुव येन, न2 दे10 च, न3 द2 चापि (→मपि), म2 स्नानादपि च किं फलम्

१८ म1 दे3 6 म1 ab ○ (द म) –a) ब2 3 च (→तु) –b) ब2 3 च (→तु) –c) दे8-10 म1 मुबँ मुए मुव भवतो (→भवता), ब1 विदिता, ब1 वेदिता, दे1 गदितं (→विदित), दे1 येन (→ह्येतत्) –d) दे4 तत्ते, ते1 मम (→तन्मे), द1 शृणोम्यहं, म1 महामुने (→नमोऽस्तु ते)

❀ दे3 8 मार्कण्डेय उ, दे9 मार्कंडे उ, न1 ते1 म1 2 म1 मार्कण्डेय, द1 श्रीमार्कण्डेय

१९ –a) का1 दे2 5 तद्वत्स (→ते वत्स) –b) का1 यत्र, म2 दे6-10 यच्च (→यच्च), दे8-10 ते फल (→तत्फल), दे3 ते1 मुबँ मुए मुव प्रयागस्नानजं फलम्, दे4 द1 म1 2 म1 यत् पृच्छसि (दे5 °सि) च तत्फलम् –d) दे5 म1 कथा मान म2 कथमान (→कथ्यमान), म2 ममाश्रुतम् (→मया श्रुतम्)

२० दे8 10 २०c–२१ab ○, द1 ab ○ (द म) –a) दे5 प्रजापति, दे8 10 ते1 मुबँ मुए मुव प्रजापते (→प्रजापति) –b) ते1 गोपने (→विश्रुतम्), म2 त्रिलोकेषु च विश्रुतम् –d) म2 मृतास्ते, म1 नरास्ते (→मृतास्ते), दे2 °भवे (→°भवाः)

२१ दे9 10 ⊙ (द २० पा वि) –a) व2 यत्र (→तत्र), दे1 देवा (→देवा) –b) दे1 न1 ते1 सर्वदा, दे3 सगता, दे4 संगता (→संगताः) –d) का1 दे3 5 पापहानि, ब2 दे3 न1 म2 म1 पापहराणि (→पापापहानि)

२२ दे9-10 ⊙ (द २० पा. वि) –a) का1 ब1 दे4 कथित, दे1 कथ तु (→कथितुं), न1 न हि, ते1 तेन (→नेह), म2 नशक्नोमि (→शक्नोमि) –c) का1 म1 3 दे2 मुबँ संक्षेपेण (→संक्षेपेण),

२३ दे8-10 ○ (द.२० पा. वि.). –a) ब1 दे1 षष्टि (→षष्टिर्), ब1 दे5 म1 वर्ष- (→धनु-), द1 म1 2

वे.१।३६.२४ प्रयागे तु विशेषेण स्वयं वसति वासवः ।
मण्डलं रक्षति हरिः सर्वदेवैश्च सम्मितम् ॥२४
न्यग्रोधं रक्षते नित्यं शूलपाणिर्महेश्वरः ।
स्थानं रक्षन्ति वै देवाः सर्वपापहरं शुभम् ॥२५
स्वकर्मणावृतो लोको नैव गच्छति तत्पदम् ।
स्वल्पं स्वल्पतरं पापं यदा तस्य नराधिप ।
प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम् ॥२६
दर्शनात् तस्य तीर्थस्य नाम संकीर्तनादपि ।
मृत्तिकालम्भनाद् वापि नरः पापात् प्रमुच्यते ॥२७
पञ्च कुण्डानि राजेन्द्र येषां मध्ये तु जाह्नवी ।
प्रयागं विशतः पुंसः पापं नश्यति तत्क्षणात् ॥२८
योजनानां सहस्रेषु गङ्गां यः स्मरते नरः ।
अपि दुष्कृतकर्मासौ लभते परमां गतिम् ॥२९
कीर्तनान्मुच्यते पापाद् दृष्ट्वा भद्राणि पश्यति ।
तथोपस्पृश्य राजेन्द्र स्वर्गलोके महीयते ॥३०
व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः ।
गङ्गायमुनमासाद्य त्यजेत् प्राणान् प्रयत्नतः ॥३१
दीप्तकाञ्चनवर्णाभैर्विमानैर्भानुवर्णिभिः ।
ईप्सितांल्लभते कामान् वदन्ति मुनिपुंगवाः ॥३२

---

पश्चिमं- (→पश्चिमं तु -) -b) दे1 ते1 द1 मुवें मुए तानि, न1 हरा प2 यमा, म1 धाता (→याति), वा1 रक्षन्ति, न1 म1 रक्षति (→रक्षन्ति) -c) दे1 रक्षत (→रक्षति) -d) व1 भविता (→सविता), व3 दे2 3 म1 सप्ति° (→सप्त°)

२४ दे8-10 ⊙ (द्र २० पा वि) -a) का1 व1 3 दे2 3 5 6 ते1 प्रयाग (→प्रयागे) -b) का1 व1 2 दे3 5 वे1 रक्षति (→वसति) -d) ते1 प्र1 2 म1 सर्वे (→सर्व), का1 °देवत-, दे5 °देवस्तु (→°देवैश्च), व3 दे4 प2 म1 सम्मित, दे1 न1 सवृत, ते1 सयुत (→सम्मितम्), व2 सर्वदेवैं समन्वित

२५ दे8 10 ○ (द्र २० पा वि) -b) व3 °पाणिः (→°पाणिर्) -c) दे1 स्नात (→स्थान), व2 3 रक्षन्ति (→रक्षन्ति), व2 प2 देव, प1 देवा (→देवा) -d) दे1 प्रशुभ (→शुभम्)

२६ दे8-10 ○ (द्र २० पा वि), प2 म1 cd ○ -a) प2 सुकर्म° (→स्वकर्म°), द1 2 दे3 4 मुवें मुए मुव °वृता, दे6 °कृतः, द1 °वृतो (→°वृतो), व1 3 दे3 6 मुवें मुए मुव लोका, दे1 4 ते1 लोके (→लोको) -b) व1 3 दे2 3 6 द1 प2 मुवें मुए मुव गच्छन्ति, द4 यान्ति (→गच्छति), -c) न1 महत्तर, प्र1 स्वल्पतर (→स्वल्पतरं) -d) दे3 8 मुवें मुए मुव यस्य, दे4 सदा, द1 प1 यथा (→यदा), दे1 व1 प1 पग्य, दे4 सत्व, मुवें मुए मुव यान्ति (→तस्य), दे3 4 5 नराधिप (→नराधिप) -e) दे1 प्रयाग स्मरतस्तस्य -f) का1 दे5 सर्वमायाति, दे4 सर्वमायान्ति, प्र1 मायाविनाशि, म1 पापान् व्यायान्ति (→सर्वमायाति)

२७ दे8 10 ○ (द्र २० पा वि) -a) दे1 तस्मात् तत् (→दर्शनात्) -b) दे1 नाम, दे6 नाम (→नाम) -c) दे1 भुक्ति-(→मृत्तिका-) वापि, दे4 द1 प1 3 म1 मृत्युकालेऽपि (दे4 तु) यद्यपि -d) ने1 सर्वपापैः प्रमुच्यते

२८ दे8 10 ○ (द्र २० पा वि) -b) दे1 प1 2 एषा, ते1 गा1 तेषां (→येषां), द1 च (→तु) -c) दे3 विशव (→विशत)

२९ दे8 10 ○ (द्र २० पा वि), व1 ○ -a) प2 सहस्रेण (→सहस्रेषु) -b) न1 प्र2 गङ्गाया (→गङ्गां य), दे3 6 मुवें मुए मुव स्मरति यो (→य स्मरते) -d) व2 1 भजते, प2 लभेते (→लभते)

३० दे8-10 ⊙ (द्र २० पा वि), व1 ○ -b) प2 मुवें मुए मुव दृष्ट्वा (→दृष्ट्वा), व3 नश्यति (→पश्यति) -c) व2 ततो०, दे1 न1 ते1 तपो०, (→तथो०), का1 राजेन्द्र (→राजेन्द्र) -d) दे3 6 न1 मुवें, मुए मुव सुर° (→स्वर्ग°)

३१ दे8-10 ab ○ (द्र २० पा वि) -a) वा1 दे3 द1 प्र1 2 म1 हीन (→दीन) -b) दे6 क्रोधो (→क्रुद्धो) न1 नर (→नरः), दे1 क्रुद्धो वापि यस नर -c) व1 °यमुना (→°यमुन), व1 गङ्गायमुनयो स्तथा -d) दे1 त्यजेत् प्राणांश्च यत्नतः

३१ इत्यस्य ab भागानन्तर दे8 10 मुवें मुए अधिकम्—
२* पितॄणां तारयेच्चैव सर्वपापप्रणाशनम् ।
ये प्रयागे ह्यवसाय ज्वलितो भवत्यर ॥

३२ -a) दे4 दीर्घ-, प्र2 तस्मात् (→दीप्त), प2 वर्णाभो, प1 -वर्णाभैर् (→वर्णाभैर्) -b) प1 भाव°, दे1 भानु° (→भानु°), व1 दे3 10 वे1 प2 मुवें मुए -वर्णिभिः, द1 प्र1 म1 -वर्णिभि (→-वर्णिभिः) -d) दे4 भवन्ति, द1 प2 सुवते (→वदन्ति)

सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः ।
वराङ्गनासमाकीर्णैर्मोदते शुभलक्षणः ॥३३
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ।
यावन्न स्मरते जन्म तावत् स्वर्गे महीयते ॥३४
तस्मात् स्वर्गात् परिभ्रष्टः क्षीणकर्मा नरोत्तम ।
हिरण्यरत्नसंपूर्णे समृद्धे जायते कुले ॥३५
तदेव स्मरते तीर्थं स्मरणात् तत्र गच्छति ।
देशस्थो यदि वारण्ये विदेशे यदि वा गृहे ॥३६
प्रयागं स्मरमाणस्तु यस्तु प्राणान् परित्यजेत् ।
ब्रह्मलोकमवाप्नोति वदन्ति मुनिपुंगवाः ॥३७
सर्वकामफला वृक्षा मही यत्र हिरण्मयी ।
ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छति ॥३८
स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे ।
मोदते मुनिभिः सार्द्धं स्वकृतेनेह कर्मणा ॥३९
सिद्धचारणगन्धर्वैः पूज्यते दिवि दैवतैः ।
ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् ॥४०
ततः शुभानि कर्माणि चिन्तयानः पुनः पुनः ।
गुणवान् वित्तसंपन्नो भवतीह न संशयः । वें. १.३६.४१

---

३३ –a) का₁ °रयैर्, वे₁ °मय (→°मयैर्), वे₁ दिव्यै (→दिव्यैर्) –b) न₁ °ध्वज°, म₁ °रत्न°, + °वीज° (→°ध्वज°), ते₁ °कुले, मु₄ °कुल (→°कुलै) –c) दे₁₀ वारागना (→वराङ्गना), द₁ °कीर्णो, ते₁ °कीर्णं (→°कीर्णैर्) –d) व₁ दे₁₀ °लक्षणं, दे₅ °लक्षणा, ते₁ °भूषणै (→°लक्षण)

२८-३३ श्लोकानां स्थाने दे₈₋₁₀ पुस्तकेष्वयं पाठो वर्तते—

२८ | एतत् प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ।
पितॄणां तारकं चैव सर्वपापप्रणाशनम् ।
यं प्रयागे कुर्याद् वासं उत्तीर्णो भवसागरं ।
गङ्गायमुनयोरासाद्य त्यजेत् प्राणान् प्रयत्नतः । [4]
दीप्तकाञ्चनवर्णाभैर्विमानैर्भानुवर्तिभिः ।
सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः ।
वराङ्गनासमाकीर्णैर्मोदते शुभलक्षण ।

[ –7) दे₁₀ °लक्षणं (→°लक्षण) ]

३४ –b) ग₁ प्रबुद्ध (→प्रसुप्त) –c) म₂ यावत् (→यावन्न), का₁ व₂ दे₁ ₅ रमते प₃ [आ]गमते, दे₃ ₈ द₁ प्र₁ ₂ ग₁ मगने, ते₁ स्फुरते (→स्मरते), मा₁ दे₂ ₅ मल्प, व₂ तावत् (→जन्म) –d) व₂ स्वर्गलोके (→तावत् स्वर्गे)

३५ प्र₂ ३५ b-४०c (द्र स) –b) दे₁₀ °पुण्ये (→°कर्मा), का₁ व₁₋₃ दे₂ ₃ ₅ ₈ ₁₀ न₁ वे₁ मुबे मुए मुव नरोत्तम, दे₄ द₁ प्र₁ म₃ ह्यनुत्तम (→नरोत्तम), दे₁ क्षीणकल्मषमानव –c) दे₁ सकीर्णे दे₃ द₁ सम्पूर्णं (→सम्पूर्णे) –d) दे₁ पापने, दे₄ समृद्धा, दे₅ समृद्धे, प₁ समृद्धो (→समृद्धे), दे₁ मानवे (→जायते)

३६ प्र₂ ⊙ (द्र ३५ पा टि), द₁ १६८-३८ d ○ (द्र स) –a) दे₄ द₁ प₁ म₁ तदेव (→तदेव) –b) दे₁ द₁ म₁ म₁ स्मरणादनुगच्छति –c) दे₁ ८-१० वे₁ मुबे मुए मुव देशे वा (→देशस्थो) –d) दे₄ सुदेशे (→विदेशे), न₁ शुभे (→गृहे).

व₁ दे₅ पुस्तके b चरणानन्तरमधिकम्—

स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे (= ३९ ab)

३७ द₁ ⊙ (द्र ३६ पा टि), प्र₂ ⊙ (द्र ३५ पा टि) –a) दे₁ प्रयाग स्मरमा(स्मा)णेन (प), दे₁₀ प्रयाग-स्मर(ण)मानस्तु –b) व₂ समुत्सृजेत (→परित्यजेत्)

३८ द₁ ⊙ (द्र ३६ पा टि), प्र₂ ⊙ (द्र ३५ पा टि) –a) दे₄ प्र₁ म₁ °प्रदा (→°फला) –c) दे₄ ऋषयो (→ऋषयो) –d) दे₈₋₁₀ शिवलोके, ते₁ तत्र लोकं (→तत्र लोके), वे₁ स, + न (→स)

३९ प्र₂ ○ (द्र ३५ पा टि) –b) दे₄ स्त्रीसहस्रा° (→स्त्रीसहस्रा°), प्र₁ स्त्रीभिस्सह कुले रम्ये –d) का₁ सुकृतैरिह, व₃ दे₂ ₄ ₅ ते₁ द₁ म₁ मुव सुकृतेनेह, प्र₁ सुकृतेनैव (→स्वकृतेनेह), ते₁ धर्मणा, + कर्मण (→कर्मणा)

४० दे cd ○ (द्र स), प्र₂ abc ⊙ (द्र ३५ पा टि) –b) द₁ म₁ सेव्यते, प₁ सेवितो(?) (→पूज्यते); दे₄ दिव्य (→दिवि), दे₈ ₁₀ मुबे मुए मुव देवदानवै (→दिवि दैवतैः) –c) व₁ ₃ दे₃ ₈ न₁ नभ (→ततः) –d) का₁ दे₁ ₈ ₉₋₁₀ द₁ म₁ मुव जम्बू° (→जम्बु°)

४१ म₁ ef ⊙, –a) म₂ तस्मात्, म₁ यत्र (→ततः), दे₁ शुभानि, म₂ पुण्यानि (→शुभानि) –b) व₁ ₃ द₁ प₁ म₁ चिन्तयमान, दे₁₀ चिन्तयानि प्र₂ चिन्तय मन्य (→चिन्तयान) –c) का₁ द₁ मुवे वृत्त° (→वित्त°) –d) दे₁ ८-१० न₁ वे₁ मुबे मुए मुव भवन्तिमनुजोत्तम (दे₁ ₁₀ न₁ °म, दे₃ °म) –f) दे₁ ₈ ₈₋₁₀ न₂ वे₁ प₁ ₂ मुबे, मुए, मुव गर्भे धर्मे (दे₁₀ °र्मो) (→गर्भधर्म॰); द₁ यम्भु तेन प्रवर्धते

वें १३६४३ कर्मणा मनसा वाचा सत्यधर्मप्रतिष्ठितः ॥४१
गङ्गायमुनयोर्मध्ये यस्तु ग्रामं प्रतीच्छति ।
सुवर्णमथ मुक्तां वा तथैवान्यान् प्रतिग्रहान् ॥४२
स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा ।
निष्फलं तस्य तत् तीर्थं यावत् तत्फलमश्नुते ॥४३
अतस्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च ।
निमित्तेषु च सर्वेषु अप्रमत्तो द्विजो भवेत् ॥४४
कपिलां पाटलावर्णां यस्तु धेनुं प्रयच्छति ।
स्वर्णशृङ्गीं रौप्यखुरां चैलकठां पयस्विनीम् ॥४५
यावद् रोमाणि तस्या वै सन्ति गात्रेषु सत्तम ।
तावद् वर्षसहस्राणि रुद्रलोके महीयते ॥४६

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे चतुस्त्रिंशोऽध्यायः ॥३४॥

---

४२ द1 ४२a-४५b ○ –b) दे8 9 न1 म1 2 म1 मुवें मुए ग्राम, दे10 यामे (→ग्राम), व3 दे1 3 4 6 8 10 प1 2 मुवें मुए प्रयच्छति (→प्रतीच्छति), तै1 यस्तु सप्रगतिगृह्णति –c) दे5 सुवर्णां, ग्र2 सुपर्णं, म1 सुवर्ण (→सुवर्णं), दे4 शुक्ता दे8 10 न1 म1 मुक्त (→मुक्तां), व2 स्ववर्णधर्मयुक्तादा –d) दे9 10 °वान्यत् (→°वान्यान्), दे4 परिग्रहान्, दे9 10 प्रतिग्रह (→प्रतिग्रहान्), प1-3 दे3 6 8 न1 तै1 मुवें. मुए मुव. तथैवान्यद् परिग्रहम् दे1 प1 2 म1 सर्वं तस्या (दे1 °त्रा) क्षय भवेत्

४३ द1 ○, म1 2 म1 ४३a-४४d ○ (द्र सं) –a) तै1 स्वकीये (→स्वकार्ये), दे4 स्वकार्येष्वन्यकार्ये वा –b) दे1 धर्मनेव (→धर्मनेऽपि), दे8-10 मुवें मुए तीर्थं योऽभ्यर्चयेन्नर –d) व3 दे1 मुव तद्वत (→तत्फल)

४४ द1 ○ (द्र ४२ पा टि ), प1 2 म1 ○ (द्र ४३ पा टि ) –a) दे3 मत्र, तै1 तत (→अत ), दे8-10 तीर्थेषु (→तीर्थे न) –d) न1 भवात्, दे5 [ध]मयत् (→भवेत्), दे1 प्रमत्तो भवेद् द्विज

४५ द1 ab ⊙ (द्र ४२ पा टि ) –a) दे4 प1 कपिल (→कपिलां), व1 3 दे1-3 6 8 10 न1 तै1 मुवें मुए मुव पाटला (→पाटला-), दे8-10 मुवें मुए मुव धेनु (→-वर्णां) दे1 कपिला पाटलवर्णां(का), प1 2 कपिलां (प2 °ल) पाटला-भव, म1 कपिलां पाटला गाञ्च –b) दे8-10 मुवें मुए मुव, कुर्याद् (→धेनुं), तै1 प्रयुनक्ति (→प्रयच्छति) –c) दे4 8-10 न1 प1 [सु]वर्ण- (→स्वर्ण), दे1 3 5 6 8 10 द1 -शृङ्गी (→-शृङ्गीं), व2 3 दे2 5 रूप्य- (→रौप्य-), दे1 -खुरो, दे4 5 9 10 प1 -सुरी (→खुरां) –d) व3 3 दे3 6 चेल-, दे1 चैव, दे1 चेल- (→चैल), व2 दे1 4 -कठीं, दे8 मुवें मुए कर्णीं दे9 10 म1 -कर्णीं (→-कठां), प्र2 प्रयच्छति (→पयस्विनी), तै1 सुशीला च पयस्विनीम्, द1 प्र1 सचेला च पयस्विनीम्, म1 सवत्सां च पयस्विनीम्.

४६ –a) व1 तस्यैव, +तस्या वै, दे8-10 म1 तै1 तस्यागे (→तस्या वै), दे1 मुवें मुए मुव तस्या (मुवें मुए मुव तस्य) यावन्ति रो(दे1 °रो)माणि, दे4 द1 प1 2 म1 यावन्ति तस्य (प1 तत्र) रोमाणि –b) द1 प1 म1 तस्या, प2 तस्य (→सन्ति), दे4 गोत्रेषु, न1 गोत्रेव (→गात्रेषु), व1 सत्तम दे4 तत्तम, दे8 10 सत्तमा (→सत्तम) –d) दे1 द1 स्वर्ग° (→रुद्र°)

पुष्पिका—

पुराणनाम—का1 दे5 इत्यादिमहापुराणे कौर्मे, व1 इति कौर्मे, व2 3 दे3 6 प्र1 म1 इति कूर्मपुराणे, दे2 4 8-10 द1 प1 मुवें मुए इति श्रीकूर्मपुराणे, दे3 इति महापुराणे कौर्मे, म1 इति श्रीकौर्मे, तै1 इत्यादिमहापुराणे श्रीकौर्मे, मुव. इति श्रीकौर्मे महापुराणे पूर्वभागे अध्यायनाम—दे4 न1 तै1 द1 प1 2 म1 ○, का1 व1 3 दे1-3 5 6-9 10 मुवें मुए मुव प्रयाग मा(दे10 म)हात्म्ये अध्यायसङ्ख्या—का1 व2 दे1 3 5 6 न1 द1 प्र1 त्रयस्त्रिंशोऽध्यायः, व1 दे8 9 मुए षट्त्रिंशोऽध्यायः, प्र2 ॥३३॥, दे1 10 मुवें षट्त्रिंशोऽध्यायः, ॥३६॥, दे4 त्रयस्त्रिंशोऽध्यायः ॥३३॥, तै1 चतुस्त्रिंशोऽध्यायः प2 म1 मुव षट्त्रिंशोऽध्यायः

वें.२४१४ यो मे ददाति नियतः स मे भक्तः प्रियो मतः ॥१४

अहं हि जगतामादौ ब्रह्माणं परमेष्ठिनम् ।
विधाय दत्तवान् वेदानशेषानात्मनिःसृतान् ॥१५

अहमेव हि सर्वेषां योगिनां गुरुरव्ययः ।
धार्मिकाणां च गोप्ताऽहं निहन्ता वेदविद्विषाम् ॥१६

अहं वै सर्वसंसारान्मोचको योगिनामिह ।
संसारहेतुरेवाहं सर्वसंसारवर्जितः ॥१७

अहमेव हि संहर्त्ता स्रष्टाहं परिपालकः ।
मायावी मामिका शक्तिर्माया लोकविमोहिनी ॥१८

ममैव च पराशक्तिर्या सा विद्येति गीयते ।
नाशयामि तया मायां योगिनां हृदि संस्थितः ॥१९

अहं हि सर्वशक्तीनां प्रवर्त्तकनिवर्त्तकः ।
आधारभूतः सर्वासां निधानममृतस्य च ॥२०

एका सर्वान्तरा शक्तिः करोति विविधं जगत् ।
आस्थाय ब्रह्मणो रूपं मन्मयी मदधिष्ठिता ॥२१

अन्या च शक्तिर्विपुला संस्थापयति मे जगत् ।
भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः ॥२२

तृतीया महती शक्तिर्निहन्ति सकलं जगत् ।

---

सतत (→नियत) -d) ते1 स वै द1 ग्र3 म1 उ1 सदा (→स मे), न1 भक्ति (→भक्त), व2 3 दे3 6 8 ते1 द1 ग्र2 म1 उ1 मुवँ मुए मुव मम, दे1 नर, दे9 मत +मम, न1 मुनि (→मत)

१५ व1 ○(द्र ११ पा वि). -a) द1 ग्र3 म1 उ1 ध्यर्थे (→मादौ) -b) न1 ब्रह्मणे (→ब्रह्माण), न1 °मेष्ठिने (→°मेष्ठिनम्) -c) का1 निध्याय, व2 3 दे8 धधीय, दे8 मुवँ मुए मुव विदधो, दे9 विधाय, +विदधौ (→विधाय). -d) व2 °निस्थितम्, दे4° निरसृता, ते1 निश्चित, द1 ग्र2 म1 उ1 °मामया (→°निःसृतान्), ब3 दे1 शेषानात्मविनि सृतान्

१६ व1 ○ (द्र ११ पा वि) -a) व2 °मेको (→°मव), दे1 च (→हि) -b) व2 योगीना (→योगिना) -c) दे3 5 °काना थ, ते1 °काना सु- (→°काणां च) -d) दे3 °विद्विषी (→°विद्विषाम्)

१७ ब1 ○ (द्र ११ पा वि) -a) दे4 च, न1 दे1 मुवँ मुए मुव हि (→वै), ग्र3 °संसार- (→°संसारान्) -b) दे1 अपि, ते1 अहम् (→इह), दे2 मोचको (योगिनां) गुरुरव्यय

१८ व1 ○ (द्र ११ पा. वि) -a) दे1 एवाभि (→एव हि) -b) दे3 9 मुवें मुए मुव सस्रष्टा (→स्रष्टाह) -c) दे3 8 मुवँ मुए मुव माया वै, ते1 माया हि (→मायावी) ते1 भूमिका, उ1 मामकी (→मामिका), दे9 ममैव परमाशक्तिर्, +माया वै मामिका शक्तिर् -d) ते1 मया (→माया), का1 व3 दे8 10 न1 द1 मुवँ मुए मुव °विमोहनी (→°विमोहिनी), ग्र2 उ1 करोति विविधं जगत्

१९ ब1 ○ (द्र ११ पा वि), ते1 cd ○, ग्र2 उ1, ○. -a) दे4 मामेव (→ममैव), दे9 चापरा (→च परा), दे1 ममैवा परमा शक्तिर् -c) दे9 नोपयामि, + नाशयामि (→नाशयामि), ब2 दे3 6 द1 म1 मुव तथा, दे3 8 मुवँ मुए च ता (→तया), दे3 ज्ञानं (→मायां)

२० ब1 ○ (द्र ११ पा वि); ग्र2 २० a-२१ b ○ -a) ते1 तथाहं (→अहं हि) -b) व2 प्रवर्त्तको (→प्रवर्त्तक), म1 प्रवृत्तकनिवृत्तक -c) दे3 6 °भूता, म1 °भूतो (→°भूत), दे4 सर्वेषां, दे9 सर्वासो (→सर्वासां) -d) दे3 6 विधान°, दे1 विदान° (→निधान°), दे1 ते1 द1 तु (→च)

२१ ब1 ○ (द्र ११ पा वि), ग्र2 ab ○ -a) ब3 एषा (→एका) -b) दे1 सकलं (→विविधं) -c) म1 रूप- (→रूपं) -d) का1 यन्मयी, दे4 ते1 द1 मन्मया (→मन्मयी), न1 मदनुष्ठिता, द1 म1 मयि तिष्ठति (→मदधिष्ठिता), ग्र3 माया मम हि तिष्ठति

मुवँ b, c मध्ये अधिकम्—

*नाहं प्रेरयिता विप्र परमं योगमाश्रिता ।

२२ ब1 ○ (द्र ११ पा वि), दे8 २२a २३b ○ -a) दे5 शक्तिस्तु ग्र2 शक्तिश्च (→च शक्तिर्), दे1 विपुला (→विपुला) -b) ग्र2 जयत् (→जगत्) -c) ब3 °यणानन्तो, दे1 °यणो देवो (→°यणोऽनन्तो) -d) ब3 इहमेव (→जगन्नाथो)

२३ ब1 ab ⊙ (द्र ११ पा वि), दे8 ab ○ (द्र २२ पा वि) -a) ग्र2 तृतीय या हि मे शक्तिर् -b) दे1 4 विहन्ति, ते1 निहन्त्री (→निहन्ति) -c) दे1 सा तामसी (→तामसी मे) -d) दे1 कालाख्या रुद्ररूपिणी, दे5 द1 ग्र3 म1 कालरुद्रास्यरूपिणी, ते1 कालरुद्रस्वरूपिणी

२०-२३ श्लोकानाम् उडिया पुस्तके पाठ क्रम —

*आस्थाय ब्रह्मणो रूपं मन्मया मयि तिष्ठति ।
अन्या च शक्तिर्विपुला संस्थापयति मे जगद् ॥

तामसी मे समाख्याता कालाख्या रुद्ररूपिणी ॥२३
ध्यानेन मां प्रपश्यन्ति केचिज्ज्ञानेन चापरे ।
अपरे भक्तियोगेन कर्मयोगेन चापरे ॥२४
सर्वेषामेव भक्तानामिष्टः प्रियतरो मम ।
यो हि ज्ञानेन मां नित्यमाराधयति नान्यथा ॥२५
अन्ये च ये त्रयो भक्ता मदाराधनकाङ्क्षिणः ।
तेऽपि मां प्राप्नुवन्त्येव नावर्त्तन्ते च वै पुनः ॥२६
मया ततमिदं कृत्स्नं प्रधानपुरुषात्मकम् ।
मय्येव संस्थितं विश्वं मया संप्रेर्यते जगत् ॥२७
नाहं प्रेरयिता विप्राः परमं योगमाश्रितः ।
प्रेरयामि जगत्कृत्स्नमेतद्यो वेद सोऽमृतः ॥२८
पश्याम्यशेषमेवेदं वर्त्तमानं स्वभावतः ।
करोति कालो भगवान् महायोगेश्वरः स्वयम् ॥२९
योगः संप्रोच्यते योगी माया शास्त्रेषु सूरिभिः ।
योगेश्वरोऽसौ भगवान् महादेवो महान् प्रभुः ॥३०
महत्त्वं सर्वतत्त्वानां परत्वात् परमेष्ठिनः ।
प्रोच्यते भगवान् ब्रह्मा महान् ब्रह्ममयोऽमलः ॥३१
यो मामेवं विजानाति महायोगेश्वरेश्वरम् ।　　वे२४३१

भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मय ।
तृतीया महती शक्तिर्निहन्ति सकलं जगत् ॥
अहं हि सर्वशक्तीनां प्रवर्त्तकनिवर्त्तकः ।
आधारभूतः सर्वेषां धाम न मृतस्य च ॥
एषा सर्वान्तरा शक्तिः करोति विविधं जगत् ।
तामसी मे समाख्याता कालरुद्रस्वरूपिणी ॥
(= २१c-२३b, २०a-२१b, २३cd)

२४ –c) म1 (ये) योगेन (→योगेन)

२५ –b) न1 हरि (→हि), दे3 5 8 9 न1 ते1 द1 म2 म1 उ1 मुवें मुए मुव °तमो (→°तरो) –c) म2 योग- (→यो हि) –d) का1 आधार° (?) (→आराध°)

२६ –a) म2 3 दे3 6 येन मे, द1 ये त्रये, दे2 येत्र +, दे8 मुवें म2 येन ते, मुए मुव हृदये, दे9 वद्वशो, + हृदये, म1 येन वै (→ये त्रयो), दे3 8 भक्तया (→भक्ता), का1 अन्ये च मन्त्र भक्तया च, द1 अन्येत्रापि त्रयो भक्ता, दे5 अन्येत्रं यत्र मे (?), न1 अन्ये तु ये त्रयो भक्ता, ते1 अन्यत्रापि च ये भक्ता –b) य3 मदाधार न ( ) (→मदाराधन ) दे1 5 8 9 मुवें मुए मुव °कारिण (→°काङ्क्षिण ) –c) द1 तेहि म2 अपि (→तेऽपि), दे4 तां (→मां), दे1 अविगरयेव दे8 प्राप्नुवत्येव ते1 प्राप्नुवन्त्येते (→प्राप्नुवन्त्येव) –d) व2 दे4 मा दे8 न (→मा ), य1 ते1 °वतते न1 °वर्तन्त्ये (→°वर्तन्ते)

२७ –a) का1 माया (→मया), ते1 विश्वं (→कृत्स्नं) –c) दे7 9 मुवें मुए चित्त (→विश्वं) –d) म1 माया (→मया), दे9 संपूयते, ते1 मप्राप्यते (→संप्रेर्यते), दे8 वि पूर्वमया मतर्यते जगत्

२८ –a) दे4 8 9 मुवें मुए मुव माश्रित (→माश्रित ), दे1 पर योगं समाश्रित , म2 म1 परा (म1° र) योगमुपाश्रिता (म1° त ) –c) दे1 ऐश्यामि (→प्रेरयामि), दे1 म1 जगत् सर्वं, दे9 तथापीद, + जगद्द्रव्य, ते1 तथा वेद (→जगत्कृत्स्न) –d) दे1 वेत्ति (→वेद), दे8 मस्मृत , दे9 तोमृत , + नस्मृत , न1 सोऽस्मृत (→सोऽमृत )

२९. –a) म2 पश्याश्म° (→पश्याम्य°) –b) य1 दे1 न1 वतमान , म2 वर्समाने (→वर्त्तमान) –c) द1 करोतु (→करोति), य2 काम (→कालो) –d) ते1 महायोगी°, द1 महायोगी°, म2 कर्ता योगी°, उ1 कृतयोगी° (→महायोगे°), य1 दे1 °श्वरेश्वर (दे1 °र ) (→°श्वर स्वयम्)

३० य1 ३०a-३२b ○ (द म ) –a) का1 दे1 5 योगात् दे3 योगात,+योगाद्, दे8 9 न1 मुवें मुए मुव. योऽहं (→योग ), ते1 म प्राच्यते योगे (→संप्रोच्यते योगी) –b) का1 दे1 न1 म2 म1 मया, म2 3 दे2 3 6 मुवें मुए मुव मायी, दे5 मायत, ते1 महा- (→माया), का1 शास्त्रेश्व , म2 म2 शास्त्रे च (→ शास्त्रेषु) ते1 सूचित , मुव सूरभि (→सूरिभि ) –c) का1 द1 म2 म1 उ1 मुवें मुए मुव योगीश्वराश्री, दे3 म1 योगेश्वरेगी, दे8 विश्वेश्वरोसौ, ते1 योगीश्वरोऽय (→योगेश्वरोऽसौ) –d) दे7 8 8 9 ते1 द1 म2 म1 उ1 महा (→महान्), मुवें मुए मुव महायोगेश्वर स्वयम्

३१ न1 ○ (द ३० पा वि ) –a) का1 दे1 6 न1 महत्वात् (→महत्त्व), दे3 5 °भूतानां दे7 8 9 ते1 म2 म1 मुवें मुए °सत्वानां (→°तत्त्वानां) –b) का1 परमत्वात् न1 दे8 मुवें मुए परत्वात्, द1 म2 म1 उ1 परात्म (→परत्वात्), दे1 °मेश्वर , दे5 °मेष्ठिनो (→°मेष्ठिन ) –c) द1 उ1 ब्रह्म (→ब्रह्मा) –d) दे1 4 5 8 9 न1 ते1 द1 म2 उ1 मुवें मुए मुव महा॰ (→महान्), द1 ब्राह्म° (→ब्रह्म°), का1 °मयो मल म2 दे4 °मयो म1 , दे1 °मयोनल (→°मयोऽमल ),

३२ य1 ab ○ (द ३० पा टि ) –a) दे2 4 यो

बं.२४३२ सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥३२
सोऽहं प्रेरयिता देवः परमानन्दमाश्रितः ।
नृत्यामि योगी सततं यस्तद् वेद स वेदवित् ॥३३
इति गुह्यतमं ज्ञानं सर्ववेदेषु निष्ठितम् ।
प्रसन्नचेतसे देयं धार्मिकायाहिताग्नये ॥३४

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) चतुर्थोऽध्यायः ॥४॥

## ५

व्यास उवाच ॥❀
एतावदुक्त्वा भगवान् योगिनां परमेश्वरः ।
ननर्त्त परमं भावमैश्वरं संप्रदर्शयन् ॥१
तं ते ददृशुरीशानं तेजसां परमं निधिम् ।
नृत्यमानं महादेवं विष्णुना गगनेऽमले ॥२
यं विदुर्योगतत्त्वज्ञा योगिनो यतमानसाः ।
तमीशं सर्वभूतानामाकाशे ददृशुः किल ॥३
यस्य मायामयं सर्वं येनेदं प्रेर्यते जगत् ।

मामेव, म1 यो मे पर (→यो मामेव) -b) दे3 ते1 महायोगी°, द1 श्र2 उ1 सर्वयोगी° (→महायोगी°), दे4 महायोगी महेश्वर, म1 सर्वयोगीश्वरेश्वर -c) श्र1 सोविक येन, व3 दे4 5 8 9 न1 सोविकपेन, द1 श्र2 म1 उ1 सोविकल्पित- (→सोऽविकल्पेन)

३३ -a) ते1 नाहं (→सोऽहं), न1 देव, उ1 वेद (→देव) -b) दे8 9 मुव °स्थित (→°माश्रित), दे5 परम पदमाश्रित -c) दे4 5 नृत्यामि- (→नृत्यामि), उ1 योगि (→योगी), व2 3 दे1 प्रेरयामि जगन्मयं -d) दे3 5 8 द1 श्र2 म1 उ1 यस्त(→यस्तद्), दे8 9 न1 मुवं मुए मुव योगवित् (→वेदवित्)

३४ -b) व2 दे1 सर्वं (→सर्व-), ब1 दे1 4 5 8 9 न1 त1 द1 श्र2 म1 मुवं मुए मुव. निश्चित, दे3 निष्ठिता (→निष्ठित) -c) दे1 प्रपन्न° (→प्रसन्न°), दे2 °चेतसो (→°चेतसे), श्र2 उ1 यथा, दे1 नित्य (→देय)

पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

पुराणनाम—त1 दे8 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब1 2 दे2 इति कूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब3 इति कूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासु उत्तरखण्डे, दे3 इति श्रीकूर्मसूपनिषत्सु दे4 5 8 9 मुए इतिश्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, श्र2 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, म1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु, मुवं इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुव इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे अध्यायनाम—त1 व1-3 दे1-4 8 9 न1 श्र2 म1 उ1 मुए. ⊙, ते1 ईश्वरनारायणमहर्षिसंवादे, मुवं ऋषिव्याससंवादे, मुव देवदेवमाहात्म्ये ज्ञानयोगो नाम अध्यायसंख्या—त1 ब1 3 दे2 3 5 8 9 ते1 श्र2 म1 मुए चतुर्थोऽध्यायः, ब2 चतुर्थोऽध्यायः ॥१४॥, दे1 मुवं मुव चतुर्थोऽध्यायः ॥४॥, दे4 द्वितीयोऽध्यायः ॥२॥, न1 त्रिपञ्चाशोऽध्यायः, उ1 चतुर्थोऽध्यायः ॥०॥ श्री ॥०॥

**५**

❀द1 ⊙, दे8 ईश्वर उवाच, दे9 ईश्वर उ, श्र2 म1 उ1 व्यास, मुए सूत उवाच

१ -a) दे1 भगवन (→भगवान्) -d) ते1 श्र2 ऐश्वर्यं (→ऐश्वरं), ब1 ऐश्वर्यं भावदर्शयन्

२ -a) ब3 दे1 3 8 उ1 तत्तं, दे4 ते त, मुव. ये ते (→तं ते) -b) दे1 परमा (→परमं), म1 परम तेजसां निधिं -c) न1 निधि ब्लान (→नृत्यमानं), म1 महेशान (→महादेव) -d) दे5 गमने (→गगने), श्र2 म1 वशे (→[म]मले)

३ -a) दे5 8 मुए मुव, त (→य), म1 नात्र° (→योग°) -b) दे1 सर्वमानसा, द1 योगमानस, श्र2 म1 उ1 यतचेतस (→यतमानसा) -c) दे5 तमेव (→तमीशं), म1 ब्रह्म° (→सर्व°), ते1 देवानां (→भूतानां)

४ दे8 ४a-५d ⊙ -b) ब1 पूर्व°, ब3 प्रोक्ते, दे1 पूर्येते, दे8 9 मुए. मुव प्रियते (→प्रेर्यते) -c) दे1 नृत्यमानं, द1 म1 नृत्यमाने (म1 °न) (→नृत्यमानं) -d)

नृत्यमानः स्वयं विप्रैर्विश्वेशः खलु दृश्यते ॥४
यत् पादपङ्कजं स्मृत्वा पुरुषोऽज्ञानजं भयम् ।
जहाति नृत्यमानं तं भूतेशं ददृशुः किल ॥५
यं विनिद्रा जितश्वासाः शान्ता भक्तिसमन्विताः ।
ज्योतिर्मयं प्रपश्यन्ति स योगी दृश्यते किल ॥६
योऽज्ञानान्मोचयेत् क्षिप्रं प्रसन्नो भक्तवत्सलः ।
तमेव मोचकं रुद्रमाकाशे ददृशुः परम् ॥७
सहस्रशिरसं देवं सहस्रचरणाकृतिम् ।
सहस्रबाहुं जटिलं चन्द्रार्धकृतशेखरम् ॥८
वसानं चर्म वैयाघ्रं शूलासक्तमहाकरम् ।
दण्डपाणिं त्रयीनेत्रं सूर्यसोमाग्निलोचनम् ॥९
ब्रह्माण्डं तेजसा स्वेन सर्वमावृत्य च स्थितम् ।
दंष्ट्राकरालं दुर्धर्षं सूर्यकोटिसमप्रभम् ॥१०
अण्डस्थं चाण्डबाह्यस्थं बाह्यमभ्यन्तरं परम् ।
सृजन्तमनलज्वालं दहन्तमखिलं जगत् ।
नृत्यन्तं ददृशुर्देवं विश्वकर्माणमीश्वरम् ॥११
महादेवं महायोगं देवानामपि दैवतम् ।
पशूनां पतिमीशानं ज्योतिषा ज्योतिरव्ययम् ॥१२
पिनाकिनं विशालाक्षं भेषजं भवरोगिणाम् ।
कालात्मानं कालकालं देवदेवं महेश्वरम् ॥१३ दे.२.५.१३

---

च। ऊ। विप्रैस, च॰ मर्दय (→विश्वेशः); द। च॰ म। ऊ। समदृश्यते (→खलु दृश्यते).

५ –a) च॰ ज्ञात्वा (→स्मृत्वा), दे५ यत्पादपङ्कज-स्मृत्या –b) दे५ पुरुषोऽज्ञानात्परम् –c) ब३ तु (→तं)

अत्र परं दे४ पुस्तके अधिकम्—

'नृत्यमानं तं भगवन्तमाह जगदीश्वरः ।
यं विनिद्रा जितश्वासाः पश्यन्ति ज्ञानचक्षुषा ।
सर्वतः पाणिपादान्तमन्तर्यामी सनातनः ।
सर्वपाणिपादो भगवान् गृहीतो हृदि संस्थितः ।
नास्ति तत्सर्वं जगति भूतं जगत्स्थावरजङ्गमम् ।
पश्ये मामप्रमत्तः कामदं महेश्वरम् ।
मोहं भूत्वाऽपि मत्वा महदपि सदा जगत् ।
विशोकयते यतस्त्वं वीतरागानुपालनगिनि ।
इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु तृतीयोऽध्याय
(=२.२४.२१२०-२३)

६ द। ⊙ (८ न), दे४ a ○ –a) मुथ मुए यंविनिद्रा° (→य विनिद्रा°), दे। °जितश्वासा, दे५ °जितश्वास (→°जितश्वासा) –d) दे। उ देव ददृशु किल.

७ –a) च॰ योऽज्ञान मोचयेत्क्षिप्रं, ब३ योऽज्ञानान्मो-चयेत् क्षिप्रं, दे। योऽज्ञानान्मुच्यते क्षिप्रं, द। यो ज्ञानमुक्तये क्षिप्रं, म। यो ज्ञानमात्रेऽक्षिप्रं, ऊ। यो ज्ञानमुषितात् क्षिप्रं –b) दे४ प्रसन्नो भक्तिवत्सल –c) ब। दे। तमेवं (ब। °व), दे३ ९ मुर्थ मुए मुथ तमेवं (→तमेव), दे३ मुर्थ मुए मोचनं (→मोचकं) –d) ब। दे३ ८ दे। च॰ किल (→परं)

८. दे। ८ c-१० b ⊙, दे॰ b ⊙ –a) दे१० °शिरसं (→°शिरसं), दे२ सहस्र ••••• –b) ब। सहस्रशिरसाकृतिं. –c) का। °बाहुं, द। बाहुं (→°बाहुं)

९ ब३ ९ a-११ d ⊙; दे८. ⊙ (८८ पा वि) –c) दे३ ८ मुए °मात्रं, दे९ °मात्र, + °पाणि (→°पाणिं); दे५ त्रिनेत्र च, दे। त्रिणयनं (→त्रयीनेत्रं) –d) न३ सोम-सूर्याग्निलोचनम्

अत्र परं म। पुस्तके अधिकम्—

अण्डस्थं चाण्डबाह्यस्थं बाह्यमभ्यन्तरं परम् । (=११ab)

१० च। ⊙ (८.६ पा वि), दे८ ab ⊙ (८ पा वि.) –b) दे। ३ ० ९ मुर्थ मुए मुथ °स्थितं, न। स्थितं, ते। संस्थितं, च॰ म। ऊ। स्थितं (→च स्थितम्). –c) ब३ दे२ ० म। °करालं (→°करालं)

११ च। ⊙ (८६ पा वि), दे४ ९ न। द। म। ऊ। मुर्थ मुए मुथ ab ⊙. –a) मा। दे४ °माण्डस्थं (→°बाह्यस्थं), ब३ अण्डस्थ अण्डबाह्यस्थ. –c) मा। दे२.४ दे३ ५ °ज्वाला, न। ते। द। म। °ज्वाला (→°ज्वालं), च॰ सृजन्तमखिलं जगत् –e) दे४ नित्यं तं (→नृत्यन्तं), च॰ देवा (→देवं).

१२ च। ⊙ (८६ पा वि) –a) म। महायोगी (→महायोगं) –b) ते। पति° (→पतिं). –d) मुथ. ज्योतिषां (→ज्योतिषा), म। ज्योतिषो परम पदम्.

१३ च। ⊙ (८६ पा वि) –b) दे२ ३ ० °रोगिणं (दे५ °ण) (→°रोगिणाम्) –c) का। कालात्मानं, च॰ कालात्मानं, दे२ कालात्मानं, दे३ कालोऽत्मानं (→कालात्मानं), का। काल कालं, च॰ कालकालं, दे। कालकालं, दे५ कालवर्णं, दे३ कालकालं, + कालकालं, द। कालकालं, (→कालकालं); ऊ। कालात्मानं कालात्मानं. –d) दे४ विश्वदेवं, च॰ कामदं, द। ऊ। कालकालं (→देवदेवं).

वं.२.५.१४ उमापतिं विरूपाक्षं योगानन्दमयं परम् ।
ज्ञानवैराग्यनिलयं ज्ञानयोगं सनातनम् ॥१४
शाश्वतैश्वर्यविभवं धर्माधारं दुरासदम् ।
महेन्द्रोपेन्द्रनमितं महर्षिगणवन्दितम् ॥१५
आधारं सर्वशक्तीनां महायोगेश्वरेश्वरम् ।
योगिनां परमं ब्रह्म योगिनां योगवन्दितम् ।
योगिनां हृदि तिष्ठन्तं योगमायासमावृतम् ॥१६
क्षणेन जगतो योनिं नारायणमनामयम् ।
ईश्वरेणैकतापन्नमपश्यन् ब्रह्मवादिनः ॥१७
दृष्ट्वा तदैश्वरं रूपं रुद्रनारायणात्मकम् ।
कृतार्थं मेनिरे सन्तः स्वात्मानं ब्रह्मवादिनः ॥१८
सनत्कुमारः सनको भृगुश्च
सनातनश्चैव सनन्दनश्च ।
रुद्रोऽङ्गिरा वामदेवोऽथ शुक्रो
महर्षिरत्रिः कपिलो मरीचिः ॥१९
दृष्ट्वाऽथ रुद्रं जगदीशितारं
तं पद्मनाभाश्रितवामभागम् ।
ध्यात्वा हृदिस्थं प्रणिपत्य मूर्ध्ना
बद्ध्वाञ्जलिं स्वेषु शिरःसु भूयः ॥२०
ओङ्कारमुच्चार्य विलोक्य देव-
मन्तःशरीरे निहितं गुहायाम् ।
समस्तुवन् ब्रह्ममयैर्वचोभि-
रानन्दपूर्णायतमानसास्ते ॥२१

मुनय ऊचुः ।ॐ

त्वामेकमीशं पुरुषं पुराणं
प्राणेश्वरं रुद्रमनन्तयोगम् ।

---

१४ ब1 ⊙ (द्र ६ पा वि) –a) दे8 9 न1 द1 मुवँ मुए विशालाक्ष (→विरूपाक्ष) –b) दे4 द1 य2 उ1 योगानद पर शुभ, ते1 योगानन्द पर शिव –c) न1 °विलय (→°निलय)

१५ ब1 ○ (द्र ६ पा वि) –a) का1 ब2 3 दे2 मुव °विटप, दे4 °निलय (→°विभव). –b) दे1 धर्माकार, दे5 धर्माचार, दे8 धर्माध्यक्ष+धर्माधार, दे9 धर्माध्यक्ष (→धर्माधार)

१६ दे1 4 8 य2 मुवँ मुए abcd ⊙, ब1 cd ⊙ –a) ब1 आराध्य, दे5 आचार-, द1 उ1 आधेय, (→आधार). –b) ते1 महायोगी° (→महायोगे°) –c) ते1 योगानां (→योगिनां), ब3 शरण (→परम), दे3 8 9 गुह्य (→ब्रह्म) –d) का1 दे2 5 8 9 उ1 योगिन (→योगिनां); ब2 दे2,5 6 योगि° (→योग°)

१७ –a) द1 त ततो, य2 म1 ततोऽनु-, उ1 अन्ततो (→क्षणेन), न1 दे1 द1 य2 म1 उ1 जगता (→जगतो), का1 ब3 दे2 योनिर्, दे1 निरय (→योनिं) –b) दे4 °मनौपम (→°मनामय) –c) दे3 8 9 मुवँ मुए मुव °णैक्य मा° (→°णैकता°), दे4 ईश्वरेणैकता माप- –d) य2 पश्यति (→[अ]पश्यन्)

१८ ते1 द1 ○ (द्र स) –a) य2 ईश्वर (→ऐश्वर) –b) का1 ब1-3 दे2-4 6 य2 उ1 मुवँ. मुए मुव रुद्र (→रुद्र-) –d) दे1 स्वात्मनो (→स्वात्मानं)

१९ –a) दे4 भृगुश्चैव सनन्दन, द1 य2 उ1 भृगुश्चैव सनातन –b) ते1 म1 सनन्दनश्चैव सनातनश्च, –c) का1 दे3 8 9 मुवँ मुए मुव. रैभ्यो° (→रुद्रो°), न1 वामदेवश्च (→वामदेवोऽथ) –d) का1 (व1) मरीचि, ब3 मुवँ मुए मारीचि (→मरीचि)

२० –a) दे4 5 दृष्ट्वा च द1 सहास-, य2 सहासु-, उ1 स यास- (→दृष्ट्वाथ), य2 °तान्तर (→°तार) –b) दे1 °नाभ भृत-, द1 °नाभमित, य2 °नाभासित, उ1 °नाभ स्थित-, (→नाभाश्रित-) –d) दे1 4 9 न1 ते1 द1 य2 म1 उ1 मुवँ मुव कृताञ्जलि दे5 9 मुए कृत्वाञ्जलिं (→बद्ध्वाञ्जलिं), दे4 ते स्व- (→स्वेषु), दे1 शिरःसु (→शिरःसु), ब3 दे4 8 स्वभूय, दे5 सभूय (→सु भूय)

२१ –a) द1 स देव, य2 उ1 विचार्य (→विलोक्य) –b) मुवँ मुए मुव °शरीर (→°शरीरे), दे4 निहितं, द1 निहत (→निहितम्) –c) द1 स सस्तुवन्, य2 म1 समस्तुवन् (→समस्तुवन्), म1 ब्रह्ममयो (→ब्रह्ममयैर्) –d) ब1 दे3 8 9 न1 ते1 द1 म1 उ1 मुवँ मुए मुव °हित-, दे1 °द्रुम-, य2 °भिन- (→°यत-), दे5 °पूर्णोत्तर- (→°पूर्णायत-), दे3 8 9 मुवँ मुए मुव °मानसा वै न1 °मानसास्ते, ते1 मानसास्तु द1 य2 म1 उ1 °शोभनास्ते (→°मानसास्ते)

ॐ द1 य2 म1 उ1 ऋषय, न1 ते1 द1 ऋषय ऊचुः

२२ –a) °रूप (→°मीशं) –b) का1 देवम् (→रुद्रम्), द1 य2 म1 उ1 °देव (→°योगम्) –c) ब3 दे1 न1 द1 य2

नमाम सर्वे हृदि सन्निविष्टं
प्रचेतसं ब्रह्ममयं पवित्रम् ॥२२

त्वां पश्यन्ति मुनयो ब्रह्मयोनिं
दान्ताः शान्ता विमलं रुक्मवर्णम्।
ध्यात्वात्मस्थमचलं स्वे शरीरे
कविं परेभ्यः परमं तत्परं च ॥२३

त्वत्तः प्रसूता जगतः प्रसूतिः
सर्वात्मभूस्त्वं परमाणुभूतः।
अणोरणीयान् महतो महीया-
स्त्वामेव सर्वं प्रवदन्ति सन्तः ॥२४

हिरण्यगर्भो जगदन्तरात्मा
त्वत्तोऽधिजातः पुरुषः पुराणः।
संजायमानो भवता विसृष्टो
यथाविधानं सकलं ससर्ज ॥२५

त्वत्तो वेदाः सकलाः संप्रसूता-
स्त्वय्येवान्ते संस्थितिं ते लभन्ते।
पश्यामस्त्वा जगतो हेतुभूतं
नृत्यन्तं स्वे हृदये सन्निविष्टम् ॥२६

त्वयैवेदं भ्राम्यते ब्रह्मचक्रं
मायावी त्वं जगतामेकनाथः।
नमामस्त्वां शरणं सम्प्रपन्ना
योगात्मानं चित्पतिं दिव्यनृत्यम् ॥२७

पश्यामस्त्वां परमाकाशमध्ये
नृत्यन्तं ते महिमानं स्मरामः।

वें २.५ ३७

---

नमामि (→नमाम), का1 सर्वं, दे1 शर्वं (?) (→सर्वे) –d) दे3 8 ते1 °पर (→°मय)

२३ –a) दे1 त्वां नमस्यन्ति, दे6 8 उ1 मुर्वे. मुए मुब पश्यन्ति त्वां (→त्वां पश्यन्ति), दे3 मुनयो विश्वयोनिं दे8 द1 मुनयोऽतिदान्ता (→मुनयो ब्रह्मयोनिं) –b) ब1 दान्त शान्ता, दे1 दान्त शान्त, द1 शान्तात्मना, प्र2 श्रान्ता शान्त-, उ1 शान्तशान्ता (→दान्ताः शान्ता), द1 प्र2 म1 उ1 हृदये रुक्म (उ1 प्र2 °प्य) वर्णं (→विमलं रुक्मवर्णं) –c) दे1 ध्यात्वात्मस्थप्रचलं, दे8 ध्यात्वात्मस्थमचलं, द1 ध्यात्वा हृदिस्थं, मुर्वे मुए ध्यात्वात्मस्थप्रचलं (→ध्यात्वात्मस्थमचलं), प्र2 ते1 स्व, दे6 म, द1 प्र2 म1 उ1 ते (→स्वे) –d) दे5 शरण्यं, प्र2 वरेभ्य (→परेभ्यः), का1 परम पर *, व1 परम परेभ्य, प्र2 दे5 8 9 उ1 मुर्वे मुए मुब परम पर च दे7 परत पर च (→परमं तत्परं च)

अत: परं दे3 पुस्तके अधिकम्—

*त्वत्तः प्रसूता जगतः शान्तविमलं रुक्मवर्णम्।
ध्यात्वात्माथभवत स्वे शरीरेभ्य परमं तत्परं च।
(= २४a, २३bcd)

२४ –a) का1 त्वं च (→त्वत्तः), का1 जगता (→जगतः), दे8 प्रसूता, द1 म1 प्रसूतां, प्र2 प्रदाता (→प्रसूतिः) –b) व9 सर्वात्मसूत्य, दे1 सर्वार्थभूस्त्वं, दे9 सर्वात्मसूस्त्वं, दे3 5 8 म1 मुर्वे मुए मुब सर्वानुभूस्त्वं, दे9 सर्वात्मास्त्वं, +सर्वानुभूस्त्वं, दे8 सर्वात्मसूक्ष्मे, व1 सर्वात्मभूत, उ1 सर्वात्मकस्त्वं (→सर्वात्मभूस्त्वं), व1 2 द1 प्र2 म1 उ1 परमात्मभूत (द1 °त), दे3 परमानुभूति (→परमाणुभूतः)

२५ –b) ब1 2 दे1 4 5 प्र2 त्वत्तोऽभि°, व1 म1 द1 प्र2 त्वत्तोहि, दे8 मुर्वे मुए मुब त्वत्तोऽस्ति, दे3 त्वत्ताहि, + त्वत्तोअस्ति (→त्वत्तोऽधि-), प्र2 पुराण (→पुराणः) –c) का1 दे3 4 5 न1 द1 उ1 स (→सं), व3 दे6 भवता, द1 प्र2 म1 उ1 भगवान् (→भवता), का1 विश्वपोष्टा व1 वे1 [प्र] निसृष्टो दे1 8 9 मुर्वे मुए मुब निसृष्टो, दे3 [प्र] दिसृष्टो (→विसृष्टो) –d) दे1 यथाविधानं (→यथा विधानं) दे1 8 मुर्वे मुए मुब स सर्व, दे1 ससर्जं, + स सर्व (→ससर्ज)

२६ –a) द1 उ1 °भूता (→°सूता) –b) का1 वै (→ते) दे4 लभते परं पदं (→संस्थितिं ते लभन्ते) –c) दे4 व1 पश्यामि (→पश्यामस्), उ1 नृत्यन्ते (→नृत्यन्तं) –d) उ1 हृदि चित्स्वरूप (→हृदये सन्निविष्टं)

२७ –a) दे4 द1 प्र2 म1 उ1 ब्रह्मै° (→त्वयै°), वे1 भ्राम्यते (→भ्राम्यते), व3 विश्व°, दे5 वेद° (→ब्रह्म°), व3 दे1 चक्र (→चक्रं) –b) दे4 मायापतिः, दे5 द1 मायावी त्वा, दे8 मायावी तां प्र2 मायावी त्व (→मायावी त्वं), द1 म1 °नाथ, द1 एव, दे1 मुब °नाथ (→°नाथः) –c) प2 नमामि (→नमाम) –d) का1 योगात्मना, दे4 द1 प्र2 मविलासिं, वे1 एकात्मानं, म1 सविपदिक्तं, उ1 सर्वपतिं (→योगात्मानं), दे1 चिन्मयं तं दिव्यवृत्तम्, दे4 दिव्यवृत्तौ प्रवृत्तं, दे8 मुर्वे मुए नृत्यन्तं दिव्यनृत्यम्, म1 नृत्यन्तं दिव्यरूपम्, द1 प्र2 म1 दिव्यतत्त्वे (द1 °त्व) प्रवृत्तिं (द1 °त) (→चित्पतिं दिव्यनृत्यम्)

२८ –a) व2 दे4 पश्यामि (→पश्यामस्) –b) दे3 5 व2 नृत्यते (→नृत्यन्तं) –d) का1 नुभूय, व1 मन्वभूयात्म-

वं २५.२७　सर्वात्मानं बहुधा सन्निविष्टम्
　　ब्रह्मानन्दमनुभूयानुभूय　　　　॥२८

ॐकारस्ते वाचको मुक्तिबीजं
　　त्वमक्षरं प्रकृतौ गूढरूपम् ।
तत्त्वा सत्यं प्रवदन्तीह सन्तः
　　स्वयंप्रभं भवतो यत्प्रकाशम् ॥२९

स्तुवन्ति त्वा सततं सर्ववेदा
　　नमन्ति त्वामृषयः क्षीणदोषाः ।
शान्तात्मानः सत्यसंधा वरिष्ठं
　　विशन्ति त्वा यतयो ब्रह्मनिष्ठाः ॥३०

एको वेदो बहुशाखो ह्यनन्तस्
　　त्वामेवैकं बोधयत्येकरूपम् ।
वेद्यं त्वां शरणं ये प्रपन्नास्
　　तेषां शान्तिः शाश्वती नेतरेषाम् ॥३१

भवानीशोऽनादिमांस्तेजोराशिर्
　　ब्रह्माविश्वं परमेष्ठी वरिष्ठः ।
स्वात्मानन्दमनुभूयाधिशेते
　　स्वयं ज्योतिरचलो नित्यमुक्तः ॥३२

एको रुद्रस्त्वं करोषीह विश्वं
　　त्वं पालयस्यखिलं विश्वरूपः ।
त्वामेवान्ते निलयं विन्दतीदं
　　नमामस्त्वा शरणं संप्रपन्नाः ॥३३

---

भूय, ब$_2$ म$_1$ अनुभूयानभूय (म$_1$° य), घ$_3$ दे$_1$ अन्वभूयान्वभूय (दे$_1$ °य), दे$_3$ अनुभूयात्मभूय, दे$_5$ न$_1$ द$_1$ य$_3$ उ$_1$ मुब अनुभूयानुभूय, दे$_9$ तै$_1$ मुबॅं चानुभूयानुभूय (→अनुभूयानुभूय)

२९ –a) द$_1$ य$_2$ त्व (→ते) –b) का$_1$ दे$_{2\,3\,6}$ त्वाम् (→त्वम्); व$_2$ नमस्कार (→त्वमक्षर), दे$_1$ °तत्त्व, द$_1$ °रूढ, उ$_1$ दे$_4$ तै$_1$ °रूप (→°रूप), व$_2$ नाधिरूप, य$_2$ गूढरूप (→गूढरूपा) –c) व$_{1\,3}$ दे$_{2\,3\,5}$ त त्वा, वे$_1$** (→तत् त्वा), व$_2$ तत्त्वनस्त्वा, वे$_1$ त त्वां नित्य, य$_2$ तत्त्वातीत, म$_1$ तत्त्वासमस्त (→तत् त्वा सत्य), न$_1$ सवदन्तीह (→प्रवदन्तीह) –d) द$_1$ व$_2$ म$_1$ °प्रभु, दे$_1$ °प्रभो (→°प्रभ), दे$_{1\,6}$ द$_1$ भवता (→भवतो), का$_1$ °यत्प्रकाश्य, दे$_1$ य प्रकाश, दे$_{4\,6}$ यत् स्वरूप, दे$_{8\,0}$ मुबॅं मुए मुय यत्प्रमाणम्, द$_1$ उ$_1$ विश्वरूप, य$_2$ पश्य रूप (→यत्प्रकाश)

३० –a) दे$_4$ तै$_1$ व$_1$ म$_1$ सर्वत, उ$_1$ सर्वदा (→सतत), व$_3$ दे$_1$ उ$_1$ सर्वदेवा, दे$_6$ ब्रह्मवेदा (→सर्ववेदा[ ]) –b) दे$_1$ ऋषय क्षीणपापा, द$_1$ य$_2$ क्षीण (द$_1$ °णि)न सर्वदोषा, म$_1$ सवत सर्ववेदा (→ऋषयः क्षीणदोषाः) –c) दे$_2$ म$_1$ शान्तात्मान, य$_2$ शान्तात्मत (→शान्तात्मानः), दे$_5$ सत्यसन्धा, दे$_{8\,9}$ मुबॅं मुए मुब सत्यसन्ध, म$_1$ सन्निपात (→सत्यसंधा)

३१. दे$_{8\,0}$ मुबॅ. मुए मुब पुस्तकेऽस्य श्लोक ३२ श्लोकानन्तरमागत –a) उ$_1$ देवा (→वेदो), य$_{1\text{-}3}$ दे$_{2\,6}$ म$_1$ बहुशाखा, य$_2$ म$_1$ उ$_1$ महाशाखा, दे$_4$ वृद्धशाखा (→बहुशाखो) –c) द$_5$ उ$_1$ य शरण (→शरणं ये), दे$_{5\,5}$ संप्रपन्ना (→प्रपन्ना).

३२. –a) दे$_4$ भवानीशो, दे$_8$ मुबॅ. मुए मु(दे$_8$ °अ) नो नाथो, वे$_1$ भवानेको (→भवानीशो), दे$_{4\,5}$ द$_1$ य$_3$ म$_1$ तेजराशिर्, दे$_{8\,9}$ मुबॅं मुए मुब विश्वरूप, तै$_1$ चाम्बुराशिर्, उ$_1$ वेदराशि (→तेजोराशिर्) –b) व$_2$ ब्रह्म (→ब्रह्मा), घ$_1$ दे$_{3\text{-}5\,8\,0}$ तै$_1$ द$_1$ य$_2$ म$_1$ उ$_1$ मुबॅ मुए मुब विष्णु, दे$_1$ विश्व (→विश्वं), दे$_5$ य$_2$ म$_1$ वशिष्ठ (→वरिष्ठः) –c) का$_1$ दे$_{3\text{-}4}$ तै$_1$ आत्मा,° दे$_8$ द$_1$ म$_1$ स्वात्मा° (→स्वात्मा°), का$_1$ व$_{2\,3}$ दे$_2$ तै$_1$ नानुभूया-, दे$_1$ मन्वभूया, मुबॅ मुए मुब अनुभूय (→अनुभूया), का$_1$ व$_{2\,5}$ दे$_2$ [म]नुशेते, व$_1$ दे$_1$ श्चाविशेते, दे$_{8\,0}$ म$_1$ मुबॅं मुए मुब [या]विशते (→[धि]शेते), द$_1$ स्वात्मानन्दानुभूयत्वमास्ते, द$_1$ स्वात्मात्म नमनुभूयाविशन्ते, म$_1$ स्वात्मानमनुभूयाविशन्ते, दे$_8$ स्वात्मनं यावामनुभूयाधिशेते –d) म$_1$ उ$_1$ अमलो (→अचलो), मुबॅ मुए मुब अचला नित्यमुक्ता (→अचलो नित्यमुक्तः)

३३ –a) य$_2$ स० (→त्व) –b) व$_1$ त्वां (→त्वं), व$_3$ पालयस्य°, दे$_6$ द$_1$ पालयस्व° (व$_1$ °स्व°) (→पालयस्य°), म$_1$ दे$_{1\,4\,5\,0}$ मुबॅं मुए °रूपम् (→°रूप) –c) म$_1$ त्वामेवाम्ब, न$_1$ त्वामेक ते, द$_1$ त्वय्यथवा ते (→त्वामेवान्ते), का$_1$ व$_2$ तै$_1$ द$_1$ य$_3$ म$_1$ उ$_1$ मुब विलय, दे$_2$ न लय (→निलयं), व$_2$ विदन्तीद, द$_1$ विदन्तीह, य$_2$ विदंसं०, म$_1$ सर्वेनि (→विन्दतीदं) –d) न$_1$ य$_2$ नमामि (→नमामम्), व$_1$ त्वां (→त्वा-).

अत्र पर दे$_{8\,9}$ मुबॅ मुए मुब अधिकम्—

*एको वेदो बहुशाखोऽप्यनन्तः त्वामेवैकं बोधयत्येकरूपम् ।
वेद्यं त्वां येऽशरणं संप्रपन्ना मायामेतां ते तरन्तीह विप्रा ।
　　　　　　　　　　　　　　　　　　　　　　　　(*३१)

त्वामेकमाहुः कविमेकरुद्रं
प्राणं बृहन्तं हरिमग्निमीशम् ।
इन्द्रं मृत्युमनिलं चेकितानं
धातारमादित्यमनेकरूपम् ॥३४

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषोत्तमोऽसि ॥३५

त्वमेव विष्णुश्चतुराननस्त्वं
त्वमेव रुद्रो भगवानधीशः ।
त्वं विश्वनाभिः प्रकृतिः प्रतिष्ठा
सर्वेश्वरस्त्वं परमेश्वरोऽसि ॥३६

त्वामेकमाहुः पुरुषं पुराण-
मादित्यवर्णं तमसः परस्तात् ।
चिन्मात्रमव्यक्तमचिन्त्यरूपं
खं ब्रह्म शून्यं प्रकृतिं निर्गुणं च ॥३७

यदन्तरा सर्वमिदं विभाति
यदव्ययं निर्मलमेकरूपम् ।
किमप्यचिन्त्यं तव रूपमेतत्
तदन्तरा यत्प्रतिभाति तत्त्वम् ॥३८

योगेश्वरं रुद्रमनन्तशक्तिं
परायणं ब्रह्मतनुं पवित्रम् ।
नमाम सर्वे शरणार्थिनस्त्वां
प्रसीद भूताधिपते महेश ॥३९

त्वत्पादपद्मस्मरणादशेष-
संसारबीजं विलयं प्रयाति ।
मनो नियम्य प्रणिधाय कायं
प्रसादयामो वयमेकमीशम् ॥४०

नमो भवायास्तु भवोद्भवाय
कालाय सर्वाय हराय तुभ्यं । मैं २.४.३६

---

३४ -a) का1 परम नाहचन्द्र, व1 कवमश्च रुद्र, व2.3 दे2.3.6 परम च रुद्र, दे1 कवयोऽग्य रुद्र (→कविमेकरुद्रं) -b) व1 प्राण विभृन्त, दे6 प्राण बहन्त, दे8.9 मुवें मुए ब्रह्म (मुवें °ह्म) बृणन्त (→प्राण बृहन्त), दे1.4 पे1 प्र1 हर° (→हरि°), का1 व1-3 वे2.3 हरिमिन्द्रगोण, न1 हविरिन्दुमीश, व1 परिमग्रमोश (→हरिमग्निमीश) -c) व1.3 दे2-3.4 °मनल, प्र2 म1 उ1 °मखिल (→°मनिल), द1 चे शितार प्र1 चेतितार (→चेकितान), का1 इन्द्रभृशमनल चेतिवान, दे4 इन्द्र मन्युर्मलिन चेकिवाम, दे8.9 मुवे मुए रुद्र नित्यमनिल चेकितान -d) म2 दातार (→धातार), ते1 पारावाराद्यादिम स्वेकरूपम

३५ -c) द1 शाश्वतमस्य (→शाश्वतधर्म) -d) दे1 पुरुषोगतो मे (→पुरुषोत्तमोऽसि)

३६ -a) दे8 पुरातन च, न1 चतुरानन न (→चतुराननस्त्वं) -b) का भगवान् ईश, व1-3 दे2-7.8.9 द1 प्र2 भ1 मुवें मुए मुध °धीश (→°नधीश) -c) का1 विष्णुनाभि, दे2.3.6.8.9 विश्वनाभ, मुवें मुए मुब. विश्वनाथ. (→विश्वनाभि), द1 प्रकृति (→प्रकृतिः).

३७ -a) का1 त्व (→त्वा), ते1 ईश (→आहु), दे1 परम, न1 प्र2 पुरुष (→पुरुष) -b) उ1 तपस (→तमस) -c) दे1 तन्मात्र° (→चिन्मात्र°), दे1.8.9 ते1 प2 उ1 मुवें. मुए. मनन्त° (→मचिन्त्य°); द1 °वत्त्वं, दे1 °रूपस् (→°रूपं) -d) मसंद, द3 दे1-3.6 द1 प्र2 म1 उ1 ।थ, दे4 यं (→ख), व1 प्रकृतिर्गुणश्च, दे3.8 द1 प्र2 उ1 मुवे मुए प्रकृतिर्गुणा (दे7 द1 प्र2 °णा)श्च, दे1.5 म1 प्रकृतेर्गुणैश्च, दे4 प्रकृति पुराण दे8 न1 ते1 प्रकृति गुणा (दे9 °णा) च (→प्रकृतिं निर्गुणं च)

३८ -c) दे2 नव° (→नव°), द1 एक°, उ1 ईश (→एतत्) -d) का1 न, दे2*, दे8 या, न1 स- (→यत्), दे1 तदन्तरा सर्वमिद विभाति

३९ -a) ते1 म1 योगी° (→योगे°), का1 व2.3 दे3.4 रुण°, दे3 रूप°, + भद्र°, दे9 रुद्र°, + भद्र° (→रुद्र°) -b) दे5 नारायण, ते1 परायण (→परायण), व2 दे1.6 °तरम (→°तनु), दे1.4.5.8.9 ते1 द1 प्र2 म1 उ1 मुवें मुए मुब पुराण (→पवित्रम्). -c) दे1.4 न1 नमामि (→नमाम). -c) व1 शरणागमन्त, द1 शरणागतार्थिन् (→शरणार्थिनस्त्वां) -d) द1 प2 म1 भूतेश्वरो (→भूताधिपते), दे8 महेश्वर (→महेश)

४० -a) व1-3 दे2.5.6 प्रशेष (→प्रशेष-) -b) म1 दे5 विमल, मुवें मुए मुब विलय (→विलय). -c) दे1 कार्यं (→कायं) -d) म1 प्रिय° (→वय°)

४१ -a) दे4.5-8 ते1 द1 प्र2 म1 उ1 मुवें. मुए. भवायाय, दे9 भवायाय, + भवायस्तु (→भवायास्तु), का1 भयोद्भवाय, दे3 नयोद्भवाय, + भवोद्भवाय, दे1 भवोभयाय (→भवोद्भवाय) -b) म2 भवाय तुभ्य, न1 भवोद्भवाय, द1 प्र2

वॆ २.५.४०

नमोऽस्तु रुद्राय कपर्दिने ते
नमोऽग्नये देव नमः शिवाय ॥४१

ततः स भगवान् देवः कपर्दी वृषवाहनः ।
संहृत्य परमं रूपं प्रकृतिस्थोऽभवद् भवः ॥४२

ते भवं भूतभव्येशं पूर्ववत् समवस्थितम् ।
दृष्ट्वा नारायणं देवं विस्मिता वाक्यमब्रुवन् ॥४३

भगवन् भूतभव्येश गोवृषाङ्कितशासन ।
दृष्ट्वा ते परमं रूपं निर्वृताः स्म सनातन ॥४४

भवत्प्रसादादमले परस्मिन् परमेश्वरे ।
अस्माकं जायते भक्तिस्त्वय्येवाव्यभिचारिणी ॥४५

इदानीं श्रोतुमिच्छामो माहात्म्यं तव शंकर ।
भूयोऽपि तव यन्नित्यं याथात्म्यं परमेष्ठिनः ॥४६

स तेषां वाक्यमाकर्ण्य योगिनां योगसिद्धिदः ।
प्राह गम्भीरया वाचा समालोक्य च माधवम् ॥४७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) पञ्चमोऽध्यायः ॥५॥

---

म1 उ1 नमोऽस्तु तुभ्य (→रुद्राय तुभ्य) –d) ते1 महादेव, द1 प्र2 म1 उ1 नमो देव (→नमोऽग्नये).

मत. परम प्र2 पुस्तके 'सुव' इत्यधिकम्, म1 पुस्तके व्यास' इत्यधिकम्

४२ –a) द1 ते1 प्र2 म1 उ1 ईश, दे4 5 8 9 मुवे मुए मुब प्रीत (→देव) –d) का1 द3 दे2 न1 भवोद्भव, दे1 [भ]भवद्भर, दे3 8 भवोऽभवत्, द1 प्र2 म1 उ1 महेश्वर (→[भ]भवद्भव)

४३ का1 ते1 ४२b ४३a ⊙ (द म) –b) उ1 सगुण° (→भागव°) –d) दे3 न1 द3 मुवें मुए मुब विस्मित (→विस्मिता)

४४ का1 ते1 a ○ (द ४२ पा वि) –a) प्र2 भगवान् (→भगवन्) –b) का1 दे3 °शासन (→°शासन) –d) का1 दे3 5 8 9 प्र2 मुवें मुए मुब निवृताः (→निर्वृताः), ब1 दे1 7 8 सनातन, दे4 8 ते1 द1 प्र2 उ1 परमेश्वर (ते1 °रा, म1° र) (→सनातन)

४५ –a) प्रसादास्त्वले, दे2 प्रसादभगव, म1 प्रभावादमले (→प्रसादादमले) –b) का1 परमेऽस्मिन्, ब1 दे2 7 8 परेऽस्मिन् (→परस्मिन्), दे1 म1 परमेश्वर (→परमेश्वरे) –c) दे1 लभ्यते (→जायते)

४६ –c) ब3 दे3 भव यत्, दे1 न1 चैव य, दे4 8 9 द1 चैव यत्, दे8 तव य, ते1 उ1 ते तव, प्र2 मुवें, मुए मुब चैव यत् म1 वें चय (→तव यत्), का1 चाव्यन्त (→यन्नित्यं) –d) का1 दे2 ते1 प्र3 उ1 याथार्थ्यं, ब2 न1 माहात्म्य दे1 द1 यथार्थं, म1 ध्यातव्य (→याथात्म्य)

४७ –b) प्र2 योगि- (→योग-), म1 °सिद्ध° (→°सिद्धि°) –d) ते1 मानव (→माधव)

पुष्पिका—[च1-3 दे1 6 द1 पुस्तकेषु मध्यायसमाप्तिर्नास्ति]

पुराणनाम—का1 इति श्रीकूर्मपुराणे, दे1 इतिश्री, दे3 इति कूर्मशिवगीतासु, दे4 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे5 8 9 मुए इति श्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति कूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, प्र2 म1 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, मुवें इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे अध्यायनाम—का1 दे2-5 8 9 न1 प्र3 म1 उ1 मुए ⊙, ते1 ईश्वरनारायणमहर्षिसंवादे विश्वरूपस्य दर्शनयोगो नाम, मुवें ऋषिव्याससंवादे, मुब देवदेवनूरूपदर्शनभक्तियोगो नाम. अध्यायसंख्या—दे2 3 ○, का1 चतुर्थोऽध्याय ॥४॥, दे1 मुवें मुब पञ्चमोऽध्याय ॥५॥, दे5 8 9 ते1 प्र2 म1 मुए. पंचमोऽध्याय, म1 पञ्चमोऽध्याय, उ1 पञ्चमोऽध्याय ॥५॥ श्री ॥५॥

# ६

ईश्वर उवाच ।*

शृणुध्वमृषयः सर्वे यथावत् परमेष्ठिनः ।
वक्ष्यामीशस्य माहात्म्यं यत्तद्वेदविदो विदुः ॥१
सर्वलोकैकनिर्माता सर्वलोकैकरक्षिता ।
सर्वलोकैकसंहर्त्ता सर्वात्माऽहं सनातनः ॥२
सर्वेषामेव वस्तूनामन्तर्यामी पिता ह्यहम् ।
मध्ये चान्तः स्थितं सर्वं नाहं सर्वत्र संस्थितः ॥३
भवद्भिरद्भुतं दृष्टं यत्स्वरूपं तु मामकम् ।
ममैषा ह्युपमा विप्रा मायया दर्शिता मया ॥४
सर्वेषामेव भावानामन्तरा समवस्थितः ।
प्रेरयामि जगत् कृत्स्नं क्रियाशक्तिरियं मम ॥५
ययेदं चेष्टते विश्वं तत्स्वभावानुवर्ति च ।
सोऽहं कालो जगत् कृत्स्नं प्रेरयामि कलात्मकम् ॥६
एकांशेन जगत् कृत्स्नं करोमि मुनिपुंगवाः ।
संहराम्येकरूपेण द्विधाऽवस्था ममैव तु ॥७
आदिमध्यान्तनिर्मुक्तो मायातत्त्वप्रवर्त्तकः ।
क्षोभयामि च सर्गादौ प्रधानपुरुषावुभौ ॥८
ताभ्यां संजायते विश्वं संयुक्ताभ्यां परस्परम् ।
महदादिक्रमेणैव मम तेजो विजृम्भते ॥९ वें २.६६

---

६

* द1 ○, दे3 9 ईश्वर इ, प्र2 म1 उ1 ईश्वर.

१ –b) न1 यथात्थ (→यथावत्), का1 वे1-3 दे2 3 8 परमात्मन (→परमेष्ठिन) –c) प्र2 ईशरतु (→ईशस्य), उ1 महात्म्य (→माहात्म्य)

अत परम् म1 b, c मध्ये अधिकम्—

* स तेषा वाक्यमाकर्ण्य योगिना योगसिद्धिद ।
प्राहगम्भीरया वाचा ' (= २.५.४७abc)

२ –b) का1 उ1 °रक्षिआ (उ1 °ता) (→°रक्षिता) –d) दे5 सनातन, प्र2 म1 सदाशिव (→सनातन)

३ म1 ३c-१३d ○ –a) ते1 अपि (→एव), दे1 5 भूताना, ते1 भावाना (→वस्तूना) –b) दे1 यतो ह्यह, दे5 ते1 पितामह (दे1 °ह), दे3 9 मुवें मुए मुब महेश्वर (→पिता ह्यहम्), द1 प्रवर्शमि तथा ह्यह, प्र2 ग्र.तर्यस्थितानामहम् –c) का1 व2 3 दे4 6 ने1 ते1 द1 उ1 मध्येचान्त दे1 प्र2 म1 मध्येवाद (→मध्ये चान्त), दे2 स्थिना, दे6 स्थित, दे9 स्थिता, + स्थित (→स्थित), दे5 विश्व (→सर्वं) –d) दे4 म1 ग्रह, ते1 सोऽह (→नाह), द1 मगोह सर्वसस्थित

४ व1 ○, प्र2 ४a-५b ○ (द्र स), म1 ४c ५b ○ –b) दे3 8 9 द1 म1 उ1 मुवें मुए मुच च (→तु) –c) दे5 ममैषा (→ममैषा), दे1 5 ह्यपरा (→ह्युपमा), ते1 ममैषाप्युपमा विप्रा –d) का1 माया या, दे1 8 9 म1 मुवें मुए मुथ माया मे (→मायया)

५ व1 ○; प्र2 म1, ab ○, दे8 ५d-६c ○ (द्र स) –b) दे4 8 9 मुवें मुए मुथ अन्तर (→अन्तरा), दे1 समवस्थिता (→समवस्थित) –c) दे5 सर्वं (→कृत्स्न) –d) दे9 चेतसा चैतन्नात्मक, + प्रेरयामि कला मम

६ व1 दे9 ○, दे8 abc ○ (द्र ५ पा टि), व3 d ○ –a) का1 यथेद व2 3 दे1 4-8 मुवें मुए मुब ययेद न1 येनेद ते1 ययैव (→ययेद), दे1 वेष्टित, दे6 वेष्टते प्र2 चेष्टितो (→चेष्टते), म1 यतकालवशमेवेद –b) व2 दे1 ते1 मतस्व°, दे5 तत् तद्° न1 यत्स्व° मुवें मुए मुब तद्भ° (→तत्स्व°), व3 -त मुवें मुए मुब मे (→च) –d) का1 क्रियात्मिक, दे2 क्रियात्मक, दे4 5 न1 ते1 द1 प्र2 उ1 बलात्मक (→कलात्मकम्)

अत पर म1 पुस्तके अधिकम्—

* सर्वेषामेवभूतानामन्तरा समवस्थित ।
प्रेरयामि जगत् कृत्स्न क्रिया शक्तिरियं मम । (= ५)

७ व1 ○, व3 a ○ (द्र ६ पा टि) –c) का1 सहरामि, प्र2 सहरेय (→संहरामि), दे6 °रूपो हि (→°रूपेण) –d) दे3 6 8 मुवें मुए स्थिता, दे9 स्थितावस्था, + द्विधावस्था, न1 द्विधावस्था (→द्विधाऽवस्था), व3 प्र2 ममेव (→ममैव)

८ व1 ○ –b) प्र2 माया तत्त्वप्रवर्तका –c) व2 सर्वादौ (→सर्गादौ) –d) दे5 -पुरुषा उभौ, ते1 -पुरुषात्मको (→-पुरुषावुभौ)

९ व1 दे1 ○ –a) म1 तस्या (→ताभ्या), का1 व2 3 दे2 3 6 न1 सर्व (→विश्व) –c) व2 सहसा वि-, व3 सहसादि- (→महदादि-), उ1 -क्रमे चैव (→-क्रमेणैव) –d)

२.६.१० यो हि सर्वजगत्साक्षी कालचक्रप्रवर्त्तकः ।
हिरण्यगर्भो मार्त्तण्डः सोऽपि मद्देहसंभवः ॥१०
तस्मै दिव्यं स्वमैश्वर्यं ज्ञानयोगं सनातनम् ।
दत्तवानात्मजान् वेदान् कल्पादौ चतुरो द्विजाः ॥११
स मन्नियोगतो देवो ब्रह्मा मद्भावभावितः ।
दिव्यं तन्मामकैश्वर्यं सर्वदा वहति स्वयम् ॥१२
स सर्वलोकनिर्माता मन्नियोगेन सर्ववित् ।
भूत्वा चतुर्मुखः सर्गं सृजत्येवात्मसंभवः ॥१३
योऽपि नारायणोऽनन्तो लोकानां प्रभवाव्ययः ।
ममैव परमा मूर्तिः करोति परिपालनम् ॥१४
योऽन्तकः सर्वभूतानां रुद्रः कालात्मकः प्रभुः ।
मदाज्ञयाऽसौ सततं संहरिष्यति मे तनुः ॥१५
हव्यं वहति देवानां कव्यं कव्याशिनामपि ।
पाकं च कुरुते वह्निः सोऽपि मच्छक्तिचोदितः ॥१६
भुक्तमाहारजातं च पचते तदहर्निशम् ।
वैश्वानरोऽग्निर्भगवानीश्वरस्य नियोगतः ॥१७
योऽपि सर्वाम्भसा योनिर्वरुणो देवपुङ्गवः ।
सोऽपि संजीवयेत् कृत्स्नमीशस्यैव नियोगतः ॥१८
योऽन्तस्तिष्ठति भूतानां बहिर्देवः प्रभञ्जनः ।
मदाज्ञयाऽसौ भूतानां शरीराणि बिभर्ति हि ॥१९
योऽपि संजीवनो नृणां देवानाममृताकरः ।
सोमः स मन्नियोगेन चोदितः किल वर्तते ॥२०

---

द1 उ1 महदादि- (→मम तेजो), का1 व2 3 दे3 5-8 म1 ते1 द1 म1 उ1 विजृम्भितम्, दे8 म2 दिवृ मत (दे3 + °ते) (→विजृम्भते)

१० ब1 ○, दे1 ab ⊙ -a) व3 सा हि, ते1 द1 म2 उ1 यासौ (→यो हि), म2 सत्व (→सर्व-), दे5 सर्वगत (→मवजगत्-) -c) म1 मार्तंड, ते1 द1 म1 मार्त्ताण्ड (→मार्तण्ड) -d) म2 मत्तेज- (→मद्देह-)

११ व1 ⊙, दे4 cd ⊙ -a) दे1 तस्मै समस्तमैश्वर्यं, दे5 तस्मै नित्य गमैश्वर्यं, ते1 यत्तस्मै दिव्यमैश्वर्यं, द1 तस्मै दिव्यस्वमैश्वर्यं -b) दे4 म2 उ1 ज्ञान (→ज्ञान-) -c) व3 श्रात्मजानेव, दे8 9 मुवें मुए मुव प्मात्मवान् (दे9 + °जान्) पेदान् (→आत्मजान् वदान्) -d) व2 कर्पादौ, दे1 कन्यादौ (→कल्पादौ), ते1 मनशान् (→चतुरा)

१२ ध1 दे4 ○ -b) उ1 ** व (→मद्भाव-) -c) व3 तमा°, दे8 स्वमा° (→तन्मा°) -d) का1 प गति, व3 हरति दे8 महति, दे8 9 मुवें मुए मुय [म]वहत, ते1 गच्छति (→वहति), द1 गवं वदमिति स्वयम्, दे5 मर्वं वेश्वनिरवयम्

१३ ब1 ○ -a) उ1 * (→स), दे5 ते1 सर्वलोकस्य (ते1 °लोक) निर्माता -b) द1 प2 तन्नियो° (→मन्नियो°) -c) म2 भूत्वा (→भूत्वा), ब3 स्वयं, द1 ते1 उ1 सर्वं, दे4 कोहं (→सर्गं) -d) उ1 सृजत्ये*****

१४. -a) का1 न1 ते1 यो हि, म1 योगी, दे2 6 योऽपि (→योऽपि) दे8 नारायणं (→नारायणो), दे2 °नन्त (→°नन्तो)) -b) व2 3 म1 प्रभवाव्यय, दे3 प्रभुरव्यय, द1 4 8 9 ते1 उ1 मुवें मुए मुव प्रभवोऽव्यय, द1 गतमोऽव्यय, प2 प्र*वोऽव्यय, म1 प्रभवाव्यय (→प्रभवाव्यय) -c) ते1 ममैव, प2 ममैव (→ममैव) दे4 5 8 9 न1 द1 म1 उ1 मुवें मुए मुव च परा (→परमा)

१५ -a) दे3 6 योऽन्तक (→योऽन्तक) -c) का1 मदा°, व3 ममा° (→मदा°). -d) दे4 मनु (→तनु)

१६ -d) का1 सच्छक्ति°, व2 दे1 2 मच्छक्ति° (→मच्छक्ति°), दे8 9 मुवें मुए मुव °नादित (→°चोदित)

१७ का1 ○ -a) ब1 भक्तम्, दे5 भक्तिम (→भुक्तम्), व1-3 दे2 3 5 8 ते1 द1 म2 म1 मत, दे1 4 म1 म (→च) -b) ध1-3 दे1-3 पचत्ये, दे5 पच्यते, दे8 पचते, म1 प्रपच (→पचते), दे5 तयहर् (→तदहर्), दे4 ते1 पच (ते1 पच°) तेन्तरहर्निशम्, द1 म1 पचत्यन्तरहर्निशम्, म2 भास्विनास्तर्हि शम् -ab) उ1 स भुक्तमाहार जात यत् पचते स्वनिशं -d) म1 ईश्वरो मन्नियोगत

१८ का1 ○, दे3 6 ⊙ (८ मं) -a) दे5 योऽपि, म1 यो हि, म2 योऽभि- (→योऽपि) -c) ब1 सर्वमिदं, दे1 सञ्जीवते (→संजीवयेत्) -d) दे1 5 8 9 म1 मुवें मुए मुव ईश्वरस्य, दे4 ईश्वरस्यै (व), द1 ईशस्येव (→ईशस्यैव)

१९ का1 ab ○ -a) म2 निर्हि-र (→निर्दि), दे1 देवानां (→भूतानां) -b) म2 प्रभुर् (→बहिर्), का1 दे1 निरञ्जन (→प्रभञ्जन). -c) म2 मदाज्ञया स भूतानां

२० -a) ब1 2 म1 यो हि, द1 योऽपि (→योऽपि), दे1 संजीवनो (→संजीवनो), म2 योऽपि सञ्जीवनेत्रणां -b) दे1 मजरामर, ते1 मधुरामर, म2 ममृतं कर (→ममृताकर) -c) ब3 सा मद्वि°, दे1 च मन्नि°, ते1 सो मन्नि° (→स मन्नि°)

वं.२.६३० ये च प्रजानां पतयो मरीच्याद्या महर्षयः ।
सृजन्ति विविधं लोकं परस्यैव नियोगतः ॥३०
या च श्रीः सर्वभूतानां ददाति विपुलां श्रियम् ।
पत्नी नारायणस्यासौ वर्त्तते मदनुग्रहात् ॥३१
वाचं ददाति विपुलां या च देवी सरस्वती ।
सापीश्वरनियोगेन चोदिता सम्प्रवर्त्तते ॥३२
याऽशेषपुरुषान् घोरान्नरकात् तारयिष्यति ।
सावित्री संस्मृता देवी देवाज्ञाऽनुविधायिनी ॥३३
पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी ।
याऽपि ध्याता विशेषेण सापि मद्वचनानुगा ॥३४
योऽनन्तमहिमानन्तः शेषोऽशेषामरप्रभुः ।
दधाति शिरसा लोकं सोऽपि देवनियोगतः ॥३५
योऽग्निः संवर्त्तको नित्यं वडवारूपसंस्थितः ।
पिबत्यखिलमम्भोधिमीश्वरस्य नियोगतः ॥३६
ये चतुर्दश लोकेऽस्मिन् मनवः प्रथितौजसः ।
पालयन्ति प्रजाः सर्वास्तेऽपि तस्य नियोगतः ॥३७
आदित्या वसवो रुद्रा मरुतश्च तथाऽश्विनौ ।
अन्याश्च देवताः सर्वा मच्छास्त्रेणैव धिष्ठिता ॥३८
गन्धर्वा गरुडा ऋक्षाः सिद्धाः साध्याश्च चारणाः ।
यक्षरक्षःपिशाचाश्च स्थिताः शास्त्रे स्वयम्भुवः ॥३९

---

–c) ते₁ स्व दासौ रक्षमा हर्ता –d) मा₁ स्वायम्भुर् व₂ ₃ उ₁ दे₄ ₆ स्वयम्भू (→स्वयम्भुर्), दे₁ विधिचोदत, दे₈ ₉ तं₁ मुवं मुए मुब विधिश्चोदित प्र॰ उ₁ विनियोगन (→विधि चोदित), द₁ म₁ स्वयम्भुवनियोगत

३० व₁ ○, वे₁ ○ (र म) –a) दे₁ येऽन (→ये च) –b) व₃ दे₁ ₈ ₉ मरीचाद्या (→मरीच्याद्या) –c) प्र₂ म₁ विद्र (→सृज) –d) न₁ परस्यव (→परस्यैव), द₄ द₁ प्र₂ म₁ परस्य नियमात् (प्र₂ °म) मम उ₁ परस्य नियमात्मन

३१ द₁ ○ –a) दे₄ यावत् स्त्रा, दे₁ ₉ ते₂ या च श्रा (→या च श्री) –b) दे॰ विपुलां, दे₀ प्र₂ विपुल (→विपुलां) –c) म₁ या च (→रत्नी), व₃ द₁ नारायणा° (व₃ ●) (→नारायण°), दे₀ °स्यासौ (→°स्यासौ) –d) तं₁ वर्त्तते॰नो मदाश्रया

३२ –a) दे₂ वाचां (→वाच), दे₄ ददामि (→ददाति), प्र₂ विमलां (→विपुलां) –c) द₄ सोपी° (→सापी°), प्र॰ मा विश्वनरयोगन –d) दे₅ ₀ न₁ प्र॰ म₁ उ₁ पूजिता (द₂ °तान्) द₀ पूजिता +चोदिता द₄ चोदिता, त₁ मुवं मुए मुब गोदिता (→चोदिता), दे₁ मत्प्रवर्त्तति (→सम्प्रवर्त्तते)

३३ व₁ ○ –a) द₁ यावान् (→याऽशे) –b) दे₁ नरकाद् भावयिष्यति, द₄ नरकान्नारयिष्यति, द₅ नरकान् (ग)तारयिष्यति –c) द₂ सावित्री, द₄ सावित्री (→सावित्री) व₃ संस्तुता द₅ सा स्मृता (→संस्मृता), द₃ ₅ न₁ द₄ प्र॰ उ₁ नारि, द₀ मा तु न₁ ₉ म₁ न₁ मुव मुग मुब चारि (→देवी) –d) द₄ तथा न₁ ₁ म₁ मुवं मुग मुब गदाना° (→°ज्ञाऽनु°)

३४ व₁ ab ○ –c) मा₂ न₁ उ₁ याति प्र॰ यादि म₁ योऽपि प्र॰ यापि (→याऽपि) दे₄ न₁ [illegible]

(→ध्याता) –d) व₃ तद् (→मद्), दे °नुगा (→°नुगा)

३५ –a) दे₆ योऽनन्त° (→योऽनन्त°), म₁ योऽन [illegible] अभिज्ञान तम् –b) म₁ (प्र)शेषो (→शेषो), ते₁ [प्र]भुः (→°प्रभु) –c) प्र₂ ददाति (→दधाति) व₁ म₁ शिर (→लोक) –d) व₁ सापि देवो°, न₁ सोपीश्वर°, दे₂ देव° (→सोऽपि देव°)

३६ व₁ ○, दे₄ ○ (र म) –a) व₃ योऽग्नि (→योऽग्नि), दे₁ नावग्निको, प्र₂ नवत्तने (→संवर्त्तको) –b) मा₁ व₂ दे₁ °रूपमास्थित (→°रूपसंस्थित), द₁ मुग, +रूप (→रूप) दे₁ संस्थिता, प्र₂ [illegible] (→संस्थित) –c) वा₁ पिबत्य°, तं₁ विभस्य° (→पिबत्य°), व₃ दे₁ ₁ [illegible] (→मम्भोधिम)

३७ व₁ ○, प्र₂ म₁ cd ○ –b) उ₁ द₂ स्वनियोजस, प्र₂ तु नितौजस, म₁ प्रथितौजस (→प्रथितौजस) –d) दे₁ ₄ न₁ सर्व॰ (→सर्वा)

३८ म₁ ○ –c) मा₂ दे₁ ₄ ५ ६ ७ न₁ प्र॰ मुवं मुग मुब गता (→सर्वा) –d) व₃ ५ दे₁ न₁ मुव विष्ठिता, दे₀ व₁ उ₁ विष्ठिता, दे₄ न₁ प्र₂ स्थिता (→धिष्ठिता), दे₁ ₂ ₉ मुवं मुग शास्त्रणैव विनिर्मिता (दे₄ [illegible]) दे₃ शास्त्रेणैव स्थिता, म₁ [illegible]

३९ व₁ ○ –a) प्र॰ [illegible] दे₁ ते₁ म₁ गरुडा (म₁ °डा) [illegible] दे₃ ₈ ₉ मुवं मुग मुब [illegible], म₁ [illegible] (→[illegible]) –b) दे₄ [illegible] (→[illegible]) –c) [illegible] –d) म₁ वा₁ [illegible] (→[illegible]) [illegible] दे₃ [illegible] मुवं मुग मुब [illegible] (→[illegible]) मा₁ म₁ [illegible], मुवं मुग मुब [illegible] (→स्वयम्भुवः)

कलाकाष्ठानिमेषाश्च मुहूर्त्ता दिवसाः क्षपाः ।
ऋतवः पक्षमासाश्च स्थिताः शास्त्रे प्रजापतेः ॥४०
युगमन्वन्तराण्येव मम तिष्ठन्ति शासने ।
पराश्चैव परार्धाश्च कालभेदास्तथा परे ॥४१
चतुर्विधानि भूतानि स्थावराणि चराणि च ।
नियोगादेव वर्त्तन्ते देवस्य परमात्मनः ॥४२
पातालानि च सर्वाणि भुवनानि च शासनात् ।
ब्रह्माण्डानि च वर्त्तन्ते सर्वाण्येव स्वयंभुवः ॥४३
अतीतान्यप्यसंख्यानि ब्रह्माण्डानि ममाज्ञया ।
प्रवृत्तानि पदार्थौघैः सहितानि समन्ततः ॥४४
ब्रह्माण्डानि भविष्यन्ति सह वस्तुभिरात्मगैः ।
वहिष्यन्ति सदैवाज्ञां परस्य परमात्मनः ॥४५
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
भूतादिरादिप्रकृतिर्नियोगे मम वर्त्तते ॥४६
याऽशेषजगतां योनिर्मोहिनी सर्वदेहिनाम् ।
माया विवर्त्तते नित्यं सापीश्वरनियोगतः ॥४७
यो वै देहभृतां देवः पुरुषः पठ्यते परः ।
आत्माऽसौ वर्त्तते नित्यमीश्वरस्य नियोगतः ॥४८
विधूय मोहकलिलं यया पश्यति तत् पदम् ।
साऽपि विद्या महेशस्य नियोगवशवर्त्तिनी ॥४९ वि.२.६.४६

---

४० य1 दे4 8 9 द1 प2 उ1. ⊙ -a) दे5 °मुहूर्त्ताश्च (→°निमेषाश्च) -b) दे5 निमेषा (→मुहूर्त्ता), न1 दे1 दिवगा (→दिवसा), दे1 क्षणा, दे3 6 क्षया (→क्षपा) -c) का1 ऋत्वई (?), प2 3 दे1-3 5 6 नी1 प1 ऋतवश्च॰ (→ऋतव), का1 व2 दे2 मासपक्षाश्च (→पक्षमासाश्च), तै1 पक्षमासाश्च धात्वश्च -d) तै1 स्मृतौ (→स्थिता), दे1 6 प्रजापति (→प्रजापते)

४१ व1 ○ -a) दे1 9 न1 प2 [ए] च (→एव) -b) दे6 निष्ठन्ति (→तिष्ठन्ति), तै1 ह्यवतिष्ठति शासने -c) न1 परार्धेव, द1 परार्धेव (→परार्धेश्च), दे4 परार्ध्याश्च, द5 परार्द्धेश्च (→परार्धाश्च) -d) द1 -भेदस् (→-भेदास्)

४२ व1 ○ -b) द1 प2 म1 उ1 चराणि स्थावराणि च -c) प2 म1 नियोगेन च वर्त्तन्ते -d) न1 प2 म1 परमष्ठिन (→परमात्मन)

४३ क1 ○ -c) दे8 सर्वाण्यपि, द1 सर्वाणि (→ब्रह्माण्डानि), द1 निवर्तन्ते (→च वर्त्तन्ते) -d) का1 देवस्य परमात्मन, दे4 सर्वस्यैव स्वयम्भुव

४४ व1 ○ -a) दे6 अतीतान्यप्यसंख्यानि -b) का1 प3 दे2 1 6 नी1 तै1 द1 प2 ग1 उ1 मदाज्ञया (→ममाज्ञया) -c) का1 वृत्तानि च, व2 प्रवर्तन्ते (→प्रवृत्तानि), दे2 पदार्थानि, दे4 पदार्थैश्च, म1 पदार्थैर्वैर्, (→पदार्थौघै), तै1 प्रवृत्ता च पदार्थैघैः, -d) दे3 8 9 प1 गहितानि (→सहितानि)

४५ व1 ⊙ -b) दे8 सहात्मगुभिर्, दे2 सुबे सुए॰ सह वात्मभिर्, दे9 सह वात्मभिर्, + सह वस्तुभिर्, म1 वस्तु वस्तुभिर् (→सह वस्तुभिर्), न1 तै1 आत्मगै (→आत्मगै)
-c) दे1 5 तै1 उ1 सुर्वे सुए॰ सुव वरिष्यन्ति, दे4 8 द1 प1 भविष्यन्ति, दे9 वरिष्यन्ति, दे9 वरिष्यन्ति,+भरिष्यन्ति, म1 भविष्यन्ति (→वहिष्यन्ति), का1 व3 दे2 3 6 सदैव° (→सदैव°).
-d) दे1 पर(म)स्य, प2 परया (→परस्य), दे6 परस्पर-समारमन

अत्र परं व1 पुस्तके अधिकम्—'पातालानि च सर्वाणि'
(=४३a)

४६ व1 ⊙ -c) दे5 तै1 भादि, प2 ●● (→भ्रादि॰) प3 दे6 °प्रकृति॰ (→°प्रकृतिर्) -d) व2 परि॰, दे1 6 मनु॰ (→मम), प2 म1 मन्नियोगेन वर्त्तते

४७ व1 ○ -a) म1 यो (→या), व2 जगतो, दे4 जगता (→जगता) -b) दे4 महता, दे6 माहनी (→मोहिनी) -c) न1 द1 प2 उ1 मायानि, तै1 माया हि (→माया वि॰) -d) दे6 माया शूर°, द1 सापीश्वर° (→सापीश्वर°)

४८ व1 ⊙, द1 द2 ⊙ (८ स) -a) का1 प3 दे2 6 य निर्देह°, दे5 प1 यो वै देह° (→यो वै देह°), प2 योऽपि देहभिन्नो देव, प2 यो वै देवभृगुर्देव, -b) का1 प2 म1 उ1 पश्यते, म1 प्रोच्यते (→पठ्यते) -d) का1 व2 3 दे2 3 6 महेश्वर° (→ईश्वरस्य).

४९ का1 cd ⊙ -a) दे1 विहाय (→विधूय) -b) दे4 सदा, द6 प2 मया, तै1 यथा, म1 यतो (→यया); द1 द1 प2 उ2 पश्यन्ति (→पश्यति), दे1 मरत्पदम्, न1 द1 प2 म1 उ1 तत्परं (→तत्पदम्) -c) दे1 विद्यापि, दे3 मापि शक्तिर्, द1 सुप सुए मापि बुद्धिर्, दे9 मापि विद्या, + मापि बुद्धिर्, उ1 द2 मा विद्यापि (→मापि विद्या) -d) दे1 द1 नियोगे (→नियोग॰)

कू.२.६.५० बहुनात्र किमुक्तेन मम शक्त्यात्मकं जगत् ।
मयैव प्रेर्यते कृत्स्नं मय्येव प्रलयं व्रजेत् ॥५०
अहं हि भगवानीशः स्वयं ज्योतिः सनातनः ।
परमात्मा परं ब्रह्म मत्तो ह्यन्यन्न विद्यते ॥५१
इत्येतत् परमं ज्ञानं युष्माकं कथितं मया ।
ज्ञात्वा विमुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥५२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) षष्ठोऽध्यायः ॥६॥

# ७

ईश्वर उवाच ॥

शृणुध्वमृषयः सर्वे प्रभावं परमेष्ठिनः ।
यं ज्ञात्वा पुरुषो मुक्तो न संसारे पतेत् पुनः ॥१
परात् परतरं ब्रह्म शाश्वतं निष्कलं ध्रुवं ।
नित्यानन्दं निर्विकल्पं तद्धाम परमं मम ॥२
अहं ब्रह्मविदां ब्रह्मा स्वयंभूर्विश्वतोमुखः ।
मायाविनामहं देवः पुराणो हरिरव्ययः ॥३
योगिनामस्म्यहं शंभुः स्त्रीणां देवी गिरीन्द्रजा ।

५०. श1 ab ⊙, दे4 द1 म1 उ1 cd ⊙. -b) दे5 मम शक्तिमयात्मकम्, म1 मम भक्त्यात्मकञ्जगत् -c) ब3 मयैव, दे2 मयैव (→मयैव), ब2 मुब भुज्यते, प3 पूज्यते, दे1.8 पूर्यते, ते1 पाल्यते (→प्रेर्यते), ते1 नित्य (→कृत्स्न) -d) दे1 मया च, मुब मयप (?) (→मय्यव), दे1 मया संह्रियते जगत्

५१ से1 ab ⊙ -c) दे1 अहमेव (→परमात्मा), दे8 मुब पर- (→पर)

५२ -a) श1 पदतत् (→इत्येतत्), दे4 द1 प्र2 उ1 -कथित (→परम), दे1 एतत् परतर ज्ञान, म1 इत्येवं ब्रह्मविज्ञान -b) उ1 प्रथित (→कथित) -c) ब2 प्रमुच्यते, उ1 -पि मुच्यते (→विमुच्यते)

पुष्पिका—

पुराणनाम—श1 दे6 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब1-3 दे2 इति कूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु उत्तरखण्डे, दे3 इति कूर्मपुराणे गीतासूपनिषत्सु, दे4 इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु, दे5 इति श्रीकूर्मपुराणे ईश्वरगीता, द8 9 मुए. इति श्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, द1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासु, प्र2 उ1 इति श्रीकूर्मपुराणे उ रभागे ईश्वरगीतासूपनिषत्सु, म1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु, मुवे इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे अध्यायनाम—श1 ब1-3 दे2-4 8 9 न1 द1 प्र2 म1 उ1. ⊙, दे1 मुवे ऋषिव्यासमसंवादे, ते1 ईश्वरनारायणमहर्षिसंवादे सर्वाधिकारनियोगनिरूपणयोगो नाम, मुब परमेश्वरतत्त्वदर्शनज्ञानयोगो नाम अध्यायसंख्या—श1 दे1 पञ्चमोऽध्याय ॥५॥, ब1 3 दे3 3 6 पञ्चमोऽध्याय, ब2 पञ्चमोऽध्याय ॥५॥, दे4 8 9 ते1 द1 प्र2 म1 उ1 मुए मुब षष्ठोऽध्याय, दे5 मुवे षष्ठोऽध्याय ॥६॥ न1 पञ्चपञ्चाशोऽध्याय

७

ॐ दे8 9 ईश्वर उ, द1 प्र2 म1 उ1 ईश्वर

१. -a) ब2 मुनय (→ऋषय) -b) दे1 महात्म्य (→प्रभाव) -c) ब2 3 दे1 ते1 प्र2 उ1 यत् (→यं), दे1 मुक्ता, दे8 मुक्तो (→मुक्तो). -d) दे4 संसार, न1 द1 संसार- (→संसारे).

२ -a) दे1 परे° (→पर°). -b) दे1 8 9 न1 द1 प्र2 म1 उ1 मुवे मुए. मुब ध्रुवमव्ययम्, दे5 ते1 परम ध्रुवं (→निष्कलं ध्रुवं), श1 निष्कलं शाश्वतं ध्रुवम् -c) उ1 निर्विकार (→निर्विकल्प)

३. -a) दे4 न1 म1 ब्रह्म (→ब्रह्मा). -b) श1 स्वायम्भुर् (→स्वयम्भुर्), ब2 विश्वभावन (→विश्वतोमुख). -c) श1 अय (→अहं), दे8 मायाविनामपी देव, न1 द1 उ1 मायावी(द1 °वि)ना महादेव, -d) श1 दे1 पुराणी (→पुराणो), ते1 पुराणोऽहमिहाव्यय.

४. -a) म1 दे1.3 ते1 द1 योगिनामस्म्यह, दे1 यो योगिनामह, दे8 योगिना माम्यह (→योगिनामस्म्यह) -b)

आदित्यानामहं विष्णुर्वसूनामस्मि पावकः ॥४
रुद्राणां शंकरश्चाहं गरुडः पततामहम् ।
ऐरावतो गजेन्द्राणां रामः शस्त्रभृतामहम् ॥५
ऋषीणां च वसिष्ठोऽहं देवानां च शतक्रतुः ।
शिल्पिनां विश्वकर्माऽहं प्रह्लादोऽस्म्यमरद्विषाम् ॥६
मुनीनामप्यहं व्यासो गणानां च विनायकः ।
वीराणां वीरभद्रोऽहं सिद्धानां कपिलो मुनिः ॥७
पर्वतानामहं मेरुर्नक्षत्राणां च चन्द्रमाः ।
वज्रं प्रहरणानां च व्रतानां सत्यमस्म्यहम् ॥८
अनन्तो भोगिनां देवः सेनानीनां च पावकिः ।
आश्रमाणां च गार्हस्थ्यमीश्वराणां महेश्वरः ॥९
महाकल्पश्च कल्पानां युगानां कृतमस्म्यहम् ।
कुबेरः सर्वयक्षाणां गणेशानां च वीरकः ॥१०
प्रजापतीनां दक्षोऽहं निर्ऋतिः सर्वरक्षसाम् ।
वायुर्बलवतामस्मि द्वीपानां पुष्करोऽस्म्यहम् ॥११
मृगेन्द्राणां च सिंहोऽहं यन्त्राणां धनुरेव च ।
वेदानां सामवेदोऽहं यजुषां शतरुद्रियम् ॥१२
सावित्री सर्वजप्यानां गुह्यानां प्रणवोऽस्म्यहम् ।
सूक्तानां पौरुषं सूक्तं ज्येष्ठसाम च सामसु ॥१३
सर्ववेदार्थविदुषां मनुः स्वायंभुवोऽस्म्यहम् ।
ब्रह्मावर्तस्तु देशानां क्षेत्राणामविमुक्तकम् ॥१४ वे २.७.१४

---

दे6 देवा, ते1 देव (→देवो), व1 दे6 गिरीन्द्राणा, ते1 गिरि प्रजा (→गिरीन्द्राणा).

५ दे6, ५b-६c ⊙ -a) व1 वीराणा वीरभद्रोह -b) का1 गरुड (→गरुड), ग्र2 पतगा° (→पतता°) -c) दे1 द1 उ1 ऐराशत (→ऐरावतो), व3 गजेन्द्राणा (→गजेन्द्राणां) -d) का1 ब1 दे4 5 म1 मुब मुए शस्त्रभृता° (→शस्त्रभृता°).

६ दे6 abc ⊙, -a) दे1 तु (→च) -b) दे5 पुरंदर (→शतक्रतु) -c) का1 ब1 शिल्पीना (→शिल्पिनां) -d) दे1 3 4 9 मुबे. मुए मुब प्रह्लाद सुरविद्विषाम्, द1 ग्र2 म1 उ1 प्रह्लादश्च (ग्र2 °श्च) सुरद्विषा, दे4 प्रह्लादस्तु सुरद्विषा, दे6 प्रह्लादो स्मरद्विषां, न1 प्रह्लादोस्मि रविद्विषा, ते1 प्रह्लादस्तु सुरद्विषा.

७ दे4 ७ अध्यायस्य ८ श्लोकादारभ्य ८ अध्यायस्य ४ श्लोक यावत् ○, का1 ७c-८d ○, -a) ग्र2 महो (→मह) -b) का1 सत्यमस्म्यह, म1 च विनायक (→च विनायक) -c) दे4 °भद्राम, द1 ग्र2 म1 व1 °भद्रोस्मि (→°भद्रोऽहं) -d) दे4 मत्तज्ञा ह्यभवंपुरा

तस्य पर ते1 अधिकम्—

२१ *ब्रह्मचर्याश्रमाद्वाप्यश्वस्थानां वृक्षाणां मन्वरोस्म्यहम्

८. का1 दे4 ○ -a) दे1 2 क1 ते1 महा- (→मह) -c) दे6 प्रहरणेना (→प्रहरणानां) -d) दे5 सत्यमप्यह, ते1 सत्यमस्म्यहं (→सत्यमस्म्यह)

९ दे1 ○, द1 ग्र2 ८a १३b ○, म1 ab○, का1 व1 3 दे3 6 म1 मुवर्तेषु ९cd, १० ab पर्याप्तयोरव्यत्यास -a) उ1 योगिना (→भोगिना), द6 देवा, न1 वाह उ1 देव (→देव) -b) का1 पावक, उ1 पावकी (→पावकि) -c) का1 आश्रमाना (→आश्रमाणा), दे1 3 9 न1 ते1 म1 उ1 मुबे मुए गृहस्थोऽह, दे6 स्वगार्हस्था (→च गार्हस्थ)

१० दे4 ○, द1 ग्र2 ○ (द्र ६ पा वि) -a) मुब °कल्पश्च (→°कल्पश्च), दे6 कल्याणा, उ1 कृशाणां (→कल्पाना) -b) दे1 कृतमेव च, दे5 कृतमप्यह, न1 कृतमस्यहम्, उ1 मप्यह कृतम् (→कृतमस्म्यहम्) -c) व1 **णा (→°क्षाणा), दे5 *** भार्यमक्षाणा -d) दे1 गणेशाना विनायक, दे8 9 मुबे मुए मुब गणानाञ्चैव वीरध

१० श्लोकानन्तर न1 अधिकम्—

३० *इन्द्रियाणां मनश्चाहं स्रोतसां च जाह्नवी

११ दे4 ○, द1 ग्र2 ○ (द्र ६ पा वि), म1 cd ○ -b) न1 निर्ऋति (→निर्ऋति), उ1 यक्ष°(→सर्व°) -c) दे5 नास्मि (→मस्मि) -d) ते1 उ1 विमानाना च पुष्पकम्

१२ दे4 ○, द1 ग्र2 ⊙ (द्र ६ पा वि), द1 १२ १३b ○ (द्र स) -a) दे6 मृगेन्द्राणा (→मृगेन्द्राणां) -b) व1 म1 शस्त्राणा, व2 यन्त्रूना, उ1 शस्त्राणा (→यन्त्राणाम्) -d) व1 यजुषा (→यजुषा), दे6 °यस्मि, उ1 °रुद्रक (→°रुद्रियम्)

१३ दे4 ○, दे1 द1 ग्र2 ab ⊙, व1 १३a-१४d ○ -c) दे1 परम, ग्र2 पुरुष (→पौरुष) -d) का1 दे2 5 त1 द1 ग ज्येष्ठ, न1 ज्येष्ठ (→ज्येष्ठ-)

१४ दे4 व1 ⊙ -a) व1 °वेदानु° (→°वेदार्थ°), का1 सर्वार्थविदुषा चैव -b) दे1 मत्र, न1 ग्र2 मनु-, द1

वें.२.७.१५ विद्यानामात्मविद्याहं ज्ञानानामैश्वरं परम् ।
भूतानामस्म्यहं व्योम सत्त्वानां मृत्युरेव च ॥१५
पाशानामस्म्यहं माया कालः कलयतामहम् ।
गतीनां मुक्तिरेवाहं परेषां परमेश्वरः ॥१६
यच्चान्यदपि लोकेऽस्मिन् सत्त्वं तेजोबलाधिकम् ।
तत्सर्वं प्रतिजानीध्वं मम तेजोविजृम्भितम् ॥१७
आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्तिनः ।
तेषां पतिरहं देवः स्मृतः पशुपतिर्बुधैः ॥१८
मायापाशेन बध्नामि पशूनेतान् स्वलीलया ।
मामेव मोचकं प्राहुः पशूनां वेदवादिनः ॥१९
मायापाशेन बद्धानां मोचकोऽन्यो न विद्यते ।
मामृते परमात्मानं भूताधिपतिमव्ययम् ॥२०

चतुर्विंशतितत्त्वानि माया कर्म गुणा इति ।
एते पाशाः पशुपतेः क्लेशाश्च पशुबन्धनाः ॥२१
मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः ।
एताः प्रकृतयस्त्वष्टौ विकाराश्च तथापरे ॥२२
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् ।
पायूपस्थं करौ पादौ वाक् चैव दशमी मता ॥२३
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि तु ॥२४
चतुर्विंशकमव्यक्तं प्रधानं गुणलक्षणम् ।
अनादिमध्यनिधनं कारणं जगतः परम् ॥२५
सत्त्वं रजस्तमश्चेति गुणत्रयमुदाहृतम् ।
साम्यावस्थितिमेतेषामव्यक्तं प्रकृतिं विदुः ॥२६

---

मुनि- (→मनु) -c) ब२ ब्रह्मावर्तेश्च, दे१ ब्रह्मावर्तस्तु, दे३ महावर्तस्तु, द१ ब्रह्मावर्तोस्तु (→ब्रह्मावर्तस्तु)

१५ दे४ ⊙ -a) व१ विद्यानां मातु विद्याहं (?) -b) दे३ ईश्वर, दे९ ईश्वर, +ईश्वर (→ऐश्वर), का१ व३ दे१२ तै१ पर (→परम्). -c) ब२ दे५ द१ उ१ भूम्यह (→अस्म्यहं). -d) का१ दे२५ वानाना, व१-३ दे१,३,६,८ द१ प२ म१ उ१ मुद्रे. मुए. मुब. सत्त्वानां, दे० जातानां, +नत्वानां (→सत्त्वानां), का१ भूमि°, दे१ भूर्ति°, प्र२ मृद्दु° (→मृत्यु°).

१६. दे४, ⊙. -a) दे५ पाशानामभ्यहं, तै१ पाशानामस्त्वहं, द१ उ१ शास्त्राणां (द१ °नां) मप्यहं (→पाशानामस्म्यहं) -b) न१ कालयतां°, दे१ कलयितां° (→कलयतां°). -c) व३ दे० प२ गीतानां, द१ गनानां, म१ गुर्वीनां (→गतीनां).

१७. दे४, ⊙. -b) तै१ सर्वं (→सत्त्वं); म१ °बलाधिक, तै१ °बलोधिकम् (→°बलाधिकम्) -d) का१ व१-२ दे४ °विजृम्भतं (का१ प३ °न), दे३ °विजृम्भितं, +°विजृम्भण, प२ °विनिर्जित, द१ उ१ °विनिर्मितं (→°विजृम्भितम्).

१८. दे१, ⊙. -a) ब२ भास्वानां, म१ आत्मानं, प२ उ१ आत्मना (→आत्मानः); ब२ प्रसवः, ब३ मगव. (?) (→पशव) -c) दे५ देवा (→देव)

१९. दे४ ⊙. -b) दे१ पशूनेतांश्च, तै१ पशून् सत्स्वेन, द१ पशूनेतान्न (→पशूनेतान् स्व-). -c) प२ मामेव मोचक [illegible]. -d) प२ ब्रह्म° (→वेद°).

२०. दे४ ⊙; तै१ cd ⊙ -a) द१ ••• (→बद्धानां); तै१ पाशेन बद्धानां. -b) दे४ मोचकोऽन्योऽन्य- (→मोचकोऽन्यो न). -c) ब१ ममृतं, दे१ मां मृते (→मामृते).

२१ दे४ ⊙. -c) बै१ गुणायते (→गुणा इति); दे१ एते पाश, दे० एतेपाशा (?), प्र३ एता. पाशा (→एते पाशाः) -d) प२ क्लेशाश्च, दे१ क्लेशाश्च-, दे४ क्लेशाश्च-, तै१ क्लेशास्त्व, प्र२ विलेशा, म१ क्लेशास्तु (→क्लेशाश्च), प२-३ °बन्धनात्, द१ °बधिन (→°बन्धनाः)

२२ दे४ ⊙ -a) व१ खानिलानि (→खानिलाग्नि-), ब१ °जलानि च, दे१ °जलादिभू (→°जलानि भूः), प२ खानिलो जलमग्नि भूः. -c) दे१ एते पशुपतेरष्टौ. -d) का१ विकाराश्च, दे१ विकाराश्च- (→विकाराश्च)

२३ दे४ ⊙ -a) प१ न१ द१ प२ उ१ श्रोत्र- (→श्रोत्रं), ब१ चक्षुषं (→चक्षुषी). -b) द१ चैवाथ, प्र२ उ१ चैनच्च, म१ पंच च (→चैव तु), दे४ पश्चिमं, प्र२ पञ्चक, म१ पञ्चम (→पञ्चमम्). -c) दे१,२,६ म१ तै१ द१ प२ म१ उ१ पायूपस्थौ (→पायूपस्थं). -d) ब१ वाक्चैव, दे० वाक्चैव (→वाक् चैव), का१ प२ दे१,२ स्मृता (दे१ °ता), ब३ मता, दे३,४ तै१ द१ प२ तथा (→मता).

२४ दे४ ⊙. -a) प१,३ दे१,३,८ म१ द१ प१ शब्द- (→शब्दः); न१ द१ प२ स्पर्शं च (→स्पर्शश्च), दे३ मुद्रे. मुए. रूपश्च (→रूपं च). -c) द१ प२ म१ उ१ येतानि (→एतानि). -d) प१,३ प२ प्राकृतानि (→प्राकृतानि). दे१,६,७ मुद्रे. मुए. मुब. च (→तु)

२५ दे४ ⊙; तै१ ab ⊙. -a) का१ व१-२ दे१,४ चतुर्विंशानि (→चतुर्विंशकम्). -b) प२,३ दे१,३,६ द१ प२ म१ उ१ प्रधान- (→प्रधानं).

२६ तै१ दे१ ⊙. -a) दे३ तमश्चैव, प१ तम चैव (→तमश्चेति) -c) दे१ साम्यावस्थितमेतेषां, द२ म१ साम्या-

सत्त्वं ज्ञानं तमोऽज्ञानं रजो मिश्रमुदाहृतम् ।
गुणानां बुद्धिवैषम्याद् वैषम्यं कवयो विदुः ॥२७
धर्माधर्माविति प्रोक्तौ पाशौ द्वौ बन्धसंज्ञितौ ।
मय्यर्पितानि कर्माणि निबन्धाय विमुक्तये ॥२८
अविद्यामस्मितां रागं द्वेषं चाभिनिवेशकम् ।
क्लेशाख्यानचलान् प्राहुः पाशानात्मनिबन्धनान् ॥२९
एतेषामेव पाशानां माया कारणमुच्यते ।
मूलप्रकृतिरव्यक्ता सा शक्तिर्मयि तिष्ठति ॥३०
स एव मूलप्रकृतिः प्रधानं पुरुषोऽपि च ।
विकारा महदादीनि देवदेवः सनातनः ॥३१
स एव बन्धः स च बन्धकर्ता
स एव पाशः पशवः स एव ।
स वेद सर्वं न च तस्य वेत्ता
तमाहुरग्र्यं पुरुषं पुराणम् ॥३२ बे.२७३२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) सप्तमोऽध्यायः ॥७॥

---

मस्थिरगोतेषा, म२ गमाधिरियनसंतेगा, उ१ गमाश्यानमेतेषा -d) व२ न१ मुवें. मुए. मुब मव्यक्ता, दे१ प्रधान, दे७ ९ मव्यक्त- (→मव्यक्त), द१ प्रकृत (→प्रकृति)

२७ दे१ ⊙. -a) दे२ द१ मत्व- (→सत्त्व), दे१ तथा (→तमो) -b) व१ रजोऽथ, दे७ मुवें. मुए मुब राजस स-, दे१ राजमिश्र, + राजस स-, द१ रजोमिश्र (→रजो मिश्र) -c) व१ -वैषम्य (→वैषम्याद्) -d) य१ महेष, व३ दे१ वैषम्य (→वैषम्य)

२८ दे१ ⊙, म२ २८b-२९c ⊙ -a) व१ °धर्म- मिति, म२ °धर्मविधि- (→°धर्माविति), व१ प्रोक्त, म२ कथितौ (→प्रोक्तौ) -b) व१ पाशौ, वे१ पाशा (→पाशौ), द१ बन्धन°, व१ दे१ ५ ८ ९ द१ उ१ मुवें मुए मुब द्वौ कर्म°, दे३ ८ द्वौ ब्रह्म°, न१ म१ द्वौ धर्म°, तै१ • धर्म° (→द्वौ बन्ध°)

२९ दे१ ⊙, म२ abc ⊙ (द्र २८ पा टि). -a) व१ ३ दे१ ५ अविद्यामस्मित, ब१ अविद्या गन्धित, दे७ अविद्या समित, द१ अविद्या परमय, म१ अविद्यामस्मितो (→अविद्यामस्मिता), न१ द१ राग- (→राग) -b) क१ उ१ वाणि, व३ न१ चानि (→चाभि-), म२ दे३ ८ द१ मुवें मुए मुब °निबन्धनम् (→ निवेशकम्) -c) दे७ क्लेशाख्यान्समानाप्राहु, दे८ [illegible] प्राहु, द१ क्लेशाख्यानचलाप्राहु, + क्लेशाख्या- [illegible] प्राहु, न१ [illegible] प्राहु, ती१ [illegible] प्राहु, द१ [illegible] प्राहु, मुवें मुए मुब [illegible] प्राहु -d) ब१ पाशाना [illegible] (→पाशानात्म), द१ निबन्धान्, द८ ९ व२ म१ उ१ °निबन्धनान् (→ निबन्धनान्)

३०. द१ ⊙ -a) दे१ पा • ना (→पाशाना) -b) म१ मया (→माया), उ१ 'करण' (→कारण) -c) म१ दे१ अव्यक्त, ते१ अव्यक्तो (→अव्यक्ता) -d) ना१ द१ शक्तिर्मयि च तिष्ठति

३१ दे१ ⊙; ते१ cd ⊙. -a) न१ °प्रकृति, म२ °प्रकृति (→°प्रकृति). -b) दे५ प्रधान, दे७ प्रधान- (→प्रधान), दे८ पुरुषोऽपि वा (→पुरुषोऽपि च) -c) दे१ विकारात् (→विकारा)

३२ दे१ ⊙ -a) दे७ बन्ध° (→बन्ध°), दे५ °कर्ता, + °कर्तृम् (→°कर्ता) -b) व१-३ दे३.५.८ ते१ पाशा. (दे७ °शा), म२ पाश (→पाश), का१ पुरुष स एव, द१ पशव स्वयं, दे२ पशव स एव, दे८.९ मुवें मुए. मुब पशुरूप एव, द१ पशवस्स एव च (→पशव स एव) -c) न१ ते१ व१ म२ उ१ एव (→वेद), का१ स च सर्ववेत्ता (→न च तस्य वेत्ता). -d) दे८ ९ मुवें मुए मुब घाग्र्य (→अग्र्य) -cd) म२ स वेद सर्वं न च बन्धकर्ता [illegible] तमाहुरग्र्यं पुरुषं पुराण

पुष्पिका— [दे१ द१ पुष्पिकाऽध्यायसमाप्तिर्नास्ति]

पुराणनाम—का१ दे१ न१ इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, व१ ३ दे२ ३ इति कू(दे२ कौ)र्मपुराणे ईश्वरगीतासूपनिषत्सु, म२ दे३ ४ ५ मुए इति श्रीकूर्मपुराणे ईश्वरगीतासु, द१ इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु मु(?)क्तलाभे, न१ इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, म२ म१ न१ इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, मुब इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब इति [illegible] उपरिभागे [illegible] ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे. अध्यायनाम—का१ व१-३ दे१-३ ५ ७ न१ म२ म१ उ१ मुए ⊙, दे४ ईश्वरनारायणमहर्षिसंवादे विभूतियोगो नाम, मुवें. ऋषिव्यासवादे, मुब. विभूतियोगो

# ८

ईश्वर उवाच ।*

वे.२९१ अन्यद् गुह्यतमं ज्ञानं वक्ष्ये ब्राह्मणपुंगवाः ।
येनासौ तरते जन्तुर्घोरं संसारसागरम् ॥१
अहं ब्रह्ममयः शान्तः शाश्वतो निर्मलोऽव्ययः ।
एकाकी भगवानुक्तः केवलः परमेश्वरः ॥२
मम योनिर्महद् ब्रह्म तत्र गर्भं दधाम्यहम् ।
मूलं मायाभिधानं तु ततो जातमिदं जगत् ॥३
प्रधानं पुरुषो ह्यात्मा महान् भूतादिरेव च ।
तन्मात्राणि महाभूतानीन्द्रियाणि च जज्ञिरे ॥४
ततोऽण्डमभवद्धैमं सूर्यकोटिसमप्रभम् ।
तस्मिन् जज्ञे महाब्रह्मा मच्छक्त्या चोपबृंहितः ॥५
ये चान्ये बहवो जीवा मन्मयाः सर्व एव ते ।
न मां पश्यन्ति पितरं मायया मम मोहिताः ॥६
याश्च योनिषु सर्वासु संभवन्ति हि मूर्तयः ।
तासां माया परा योनिर्मामेव पितरं विदुः ॥७

---

नाम अध्यायसंख्या—का1 दे1 8 षष्ठोऽध्याय ॥६॥, ब1 3 दे9 3 षष्ठोऽध्याय, ब2 षष्ठोऽध्याय ॥२६॥, दे5 8 9 तै1 प्र2 म1 मुए सप्तमोऽध्याय, न1 षट्पञ्चाशोऽध्याय, उ1 सप्तमोऽध्याय ॥ ७ ॥, मुवें मुब सप्तमोऽध्याय ॥७॥

८

* दे4 द1 ○, दे3 9 ईश्वर उ, म1 श्रीईश्वर उवाच, प्र2 म1 उ1 ईश्वर

१ दे4 ○ –b) दे1 वक्ष्येह द्विजपुंगवा –c) तै1 येनासौ, द1 येनास्मं, प्र2 येनसौ, उ1 येनाशु (→येनासौ), दे8 भवत (→तरते)

२ दे4 ⊙ –a) ब2 स्वयं, दे8 9 मुवें मुए मुब मयं (→अहं), दे3 9 मुवें मुए ब्रह्मतिम, न1 ब्रह्माण्यय (→ब्रह्ममय) –b) दे2 निर्गुणो (→निर्मलो) –c) तै1 एषास (→एकाकी), दे5 शुद्ध, न1 तै1 मुक्त, द1 प्र2 उ1 दृष्ट (→उक्त) –d) न1 द1 केवल (→केवलः)

३ दे4 ○ –a) तै1 प्र2 म1 ब्रह्मा (→ब्रह्म) –c) ब1 दे5 न1 तै1 मूल, म1 मूलो (→मूलं), का1 मूलमायाभिधानं तु, ब2 न2 [म]भिधान तत्, ब2 दे9 [म]भिधानं, दे3 8 [प]भिधानं प, दे8 मुवें मुए मुब [म]भिधान त. म1 [प]भिधान यत् (→[म]भिधानं तु) –d) ब1 स्वतो (→ततो)

४ दे4 ○ –a) का1 प्रधान- (→प्रधानं) –b) ब1 2 दे1 5 6 न1 महत्, दे8 तै1 द1 प्र2 मुवें मुए मुब महद्, दे8 महाद्, + महद्, म1 बृहद् (→महान्), प्र2 भूतादिर् (→भूतादिर्) –c) दे8 9 म1 तै1 प्र2 म1 उ1 मुवें मुए मत्तो (→महा), न1 भूत्वा (→भूतान्), प्र2 तन्मात्राणि मनोभूतान् –d) का1 वजिरे (→जज्ञिरे) –cd) द1 तत्-मात्रा मनो भूतानेंद्रियाणि च जज्ञिरे.

५ –a) ब1 तदण्ड, म1 तदण्ड (→ततोऽण्ड), मुवें मुए मुब अर्क° (→सूर्य°) –c) दे4 यज्ञे (→जज्ञे), ब1 3 दे2 3 5 6 न1 ब1 मुब महान्, दे9 स्वयं, + महा, म1 स्वयं (→महा) –d) न1 म1 उ1 °बृंहित (→°बृंहितः), का1 दे2 मम शक्त्युपबृंहितः, ब2 3 महा ब्रह्मा (ब2 महच्छक्त्यु) पबृंहित, दे5 मम रूपोपबृंहित

६ दे1 ab ○ –b) का1 मानसा, ब1 दे5 द1 प्र2 उ1 तन्मया (?), ब2 दे3 4 8 9 मुवें मुए मुब तन्मया, ब3 दे6 न1 मन्मया (?) (→मन्मया). –d) दे1 2 मोहिता (→मोहिताः), तै1 मोहिता मम मायया

७ –a) दे1 8 9 मुवें मुए यासु (→याश्च) दे1 योनिषु (→योनिषु), दे8 9 मुवें मुए ता सर्वा (→सर्वासु) –b) दे1 4 5 8 9 न1 तै1 द1 म1 उ1 मुवें मुए सम्भवन्तीह प्र2 समजन्तीह (→संभवन्ति हि) –c) का1 दे2 तेषां माया परा योनिर्, ब2 मुब तासां माया परा योनि, दे1 तासां परा योनि, दे3 8 मुवें मुए तां मातरं परां योनिं, दे1 प्र2 तासां (प्र2 °सां) मायामयीमूर्ति, दे9 तासां माया परा योनि, + तां मातरं परां योनिं, तै1 द1 उ1 तासां प्रत्यग्दर्शीमूर्ति –d) दे1 द1 प्र2 उ1 निमये, तै1 तामेव (→मामेव)

यो मामेवं विजानाति बीजिनं पितरं प्रभुम् ।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥८

ईशानः सर्वविद्यानां भूतानां परमेश्वरः ।
ओङ्कारमूर्तिर्भगवानहं ब्रह्मा प्रजापतिः ॥९

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥१०

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥११

विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् ।
प्रधानविनियोगज्ञः परं ब्रह्माधिगच्छति ॥१२

सर्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विदित्वा
षडाहुरङ्गानि महेश्वरस्य ॥१३

तन्मात्राणि मन आत्मा च तानि
सूक्ष्माण्याहुः सप्त तत्त्वात्मकानि ।
या सा हेतुः प्रकृतिः सा प्रधानं
बन्धः प्रोक्तो विनियोगोऽपि तेन ॥१४

या सा शक्तिः प्रकृतौ लीनरूपा
वेदेषूक्ता कारणं ब्रह्मयोनिः ।
तस्या एकः परमेष्ठी परस्ता-
न्महेश्वरः पुरुषः सत्यरूपः ॥१५

ब्रह्मा योगी परमात्मा महीयान्
व्योमव्यापी वेदवेद्यः पुराणः ।　　कू.२.८.१६

८ –a) व3 मामेक (→मामेवं), दे4 द1 विजानति (→विजानाति) –b) का1 विजनं, दे1 3 बीजित, न1 विजित, ते1 विभिन्न (→बीजिन), प्र2 विन्दु (→प्रभुम्) –c) व1 दे8 मुवं. मुए भुव स धीर, दे9 स धीर, +स धीर (→स धीर) –d) दे1 उप° (→अधि°)

९ –d] दे4 ब्रह्म (→ब्रह्मा)

१० –b) प्र2 स्थित त (→तिष्ठन्तं) –c) व3 दे8 सु° (→स्व°), ते1 विनश्यतोऽविनश्यन्त, प्र2 विनश्य स विनश्यन्ति –d) प्र2 पश्यसि (→पश्यति), दे6 स य पति (→स पश्यति)

११ –a) का1 दे4 ते1 म1 समा, प्र2 सा मा (→समं), का1 पश्यन्, व2 3 दे5 6 ते1 द1 म1 उ1 पश्यति, दे3 पश्यन्ति (→पश्यन् हि) –b) का1 साम° (→सम°) –c) दे1 * (→न), ते1 स लीनस्त्वात्मनात्मान, प्र2 न विनसात्मनात्मान –d) प्र2 यान्ति (→याति), का1 व1 3 दे2 6 पर पदम् (→परां गतिम्)

१२ –a) का1 एग°, दे1 4 5 ते1 द1 प्र2 म1 उ1 सर्व° (→सप्त°) –c) दे8 प्रधाने, द1 प्र2 उ1 प्रणाना, म1 प्राश्निना (→प्रधान), प्र2 °योगता, म1 °योगज्ञ (→°योगज्ञ), दे1 प्रधानविषयो यज्ञ –d) दे8 ब्रह्मादि° (→ब्रह्माधि°)

१३ –a) दे1 प सर्वता (→सर्वज्ञता), न1 द1 प्र2 म1 °बोप (→°बोध), का1 सर्वज्ञता अहिमनादिबोध –b) दे1 रास्यमता, दे8 9 मुवं मुए भुव स्वच्छन्दता (→स्वतन्त्रता), प्र2 ***, म1 निर्मल° (→नित्यम°), न1 मकलुप्त° (→मलुप्त°) –c) व1 3 दे1 3 5 6 °शक्ति च (→°शक्तिश्च), म1 विभोर् (→विभोर्), दे8 विधिज्ञा, +विदित्वा, ते1 विधिज्ञा, द1 म1 विधिज्ञा, प्र2 विपज्ञा (?) (→विदित्वा), दे4 ***** पच विधो विधिज्ञा

१४ –a) न1 तन्मात्राणि, द1 इन्द्रियाणि (→तन्मात्राणि), ते1 मन एवात्मा (→मन आत्मा), प्र2 तन्मात्राणि मनसा धारितानि –b) का1 व1-3 दे1-6 न1 ते1 द1 प्र2 म1 उ1 सर्व- (→सप्त) –c) का1 दे3 यस्या, द1 स्वभावा, प्र2 स्वाहा (→या सा), न1 हेति (→हेतु), प्र2 प्रकृतिस्था (→प्रकृति सा), उ1 सा तस्य हेतु प्रकृति प्रधानं –d) का1 व2 3 दे2 3 8 द1 बद्ध (→बन्ध), व2 (च) प्रोक्तो, व3 प्रोक्त, दे1 द1 प्रोक्ता, ते1 प्रागो (→प्रोक्तो), दे9 मुवं मुए विनयेना°, दे8 विनियोगो°, +विनयेना° (→विनियोगो°)

१५ ते1 cd ○ –a) दे8 न1 या या (→या सा), व2 प्रकृतिर् (→प्रकृतौ), व2 3 नील° (→लीन°) –b) का1 वेदे युक्ता (→वेदेषूक्ता), द1 प्र2 यानि, म1 चेति, उ1 यान्ति (→योनि) –c) व3 दे1 तस्य, दे6 यस्या (→तस्या), न1 एकाकी (→एक), व1 3 दे8 8 9 प्र2 उ1 मुवं मुए भुव. पुरस्तात् (→परस्तात्) –d) भुव माहेश्वर (→महेश्वर), दे5 8 द1 मुवं भुव दे1 परम (→पुरुष), का1 सत्यरूप, द1 शक्तिरूप, न1 विश्वरूप (→सत्यरूप); म1 महेश्वर शश्वरूप पुरस्य

१६ न1 १६-१७ ○ (द स) –a) व2 3 दे1 ब्रह्म-योगी (व2 °नि) ते1 **** (→ब्रह्मा योगी) –b) का1 दे2 यो व्योमरूपी (→व्योमव्यापी), व3 पुराण, दे1 परात्मा (→पुराण) –c) का1 व1 2 दे2 3 6 8 9 द1 प्र2 उ1 मुवं.

[409]

नै.२८.१६ एको रुद्रो मृत्युरव्यक्तमेकं
बीजं विश्वं देव एकः स एव ॥१६
तमेवैकं प्राहुरन्येऽप्यनेकं
त्वेकात्मानं केचिदन्यत्तथाहुः ।
अणोरणीयान् महतोऽसौ महीयान्
महादेवः प्रोच्यते वेदविद्भिः ॥१७
एवं हि यो वेद गुहाशयं परं
प्रभुं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं
स बुद्धिमान् बुद्धिमतीत्य तिष्ठति॥१८

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) अष्टमोऽध्यायः ॥८॥

---

मुए मुव मृत्युम (→मृत्युर्), शे1 ते1 अव्यक्त- (→अव्यक्त), ते1 एक (→एकं), दे1 एको रुद्रं भरवर व्यक्त ** –d) ब2 देवा, दे3 9 वेद (→देव), द1 अ2 उ1 एक (→एव), दे6 अस्मानदमेक एक स एव

१७ न1 ○ (इ १६ पा वि) –a) ब2 तमेवैरय, दे1 मामेवैकं, दे6 तवैरेक, शे1 तमेवैत, द1 ममैवैक (→तमेवैकं), ब2 अन्योन्यमेव, दे5 अन्येपनेक, अ2 अन्येप्य-नेकः (→अन्येऽप्यनेकं) –b) ब1 लोकात्मान, दे1 तमेवात्मान, दे4 शे1 अ2 म1 एवात्मान, दे5 8 9 मुवँ मुए मुव त्वामेवात्मा (→त्वेकात्मानं), द1 अ2 उ1 किंचिद् (→केचिद्), ब2 दे1 अन्ये तदाहु, ब3 दे3 5 अन्य तथाहु, दे3 4 द1 अ2 म1 उ1 अन्ये तथाहु, दे8 9 मुवँ मुए मुव अन्य तमाहु (→अन्यत् तथाहु) –c) ब2 दे4 8 9 ते1 द1 अ2 म1 उ1 मुवँ मुए मुव महतो (→महतोऽसौ) –d) दे1 4 8 9 ते1 द1 अ2 म1 उ1 मुवँ मुए मुव विश्वरूप (→वेदविद्भि)

१८ –a) अ2 एवन्त, ब3 एव * (→एवं हि) –ab) दे6 एव यो वेद गुहाशयस्त्व पुराणमेकं पुरुष विश्वरूपम् –c) दे5 न1 बुद्धिमतो (न1 °त) (→बुद्धिमतां), न1 परागत-, अ3 पुरातन (→परां गतिं) –d) ब2 स बुद्धिमतां, दे6 सद्बुद्धिमान, दे9 सुबुद्धिमान, ते1 स बुध्यते (→स बुद्धिमान्), का1 बुद्धिमता तरिष्ठ, ते1 बुद्धिमतिश्च तिष्ठति (→बुद्धिमतीत्य तिष्ठति)

पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

पुराणनाम—का1 दे3 6 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, अ1 इति कौर्मे ईश्वरगीता, ब2 3 दे2 इति कू(दे2 कौ)र्मे पुराणे ईश्वरगीतासूपनिषत्सु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु उत्तरखंडे, दे4 5 8 9 मुए इति श्रीकूर्मपुराणे ईश्वरगीतासु, शे1 मुवँ इति श्रीकूर्मपुराणे उपरिभागे (मुवँ उत्तरार्द्धे) ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, अ2 म1 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, मुव इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे

अध्यायनाम—का1 ब1-3 दे1 8 9 न1 अ2 म1 उ1 मुए ○, शे1 ईश्वरनारायणमहर्षिसंवादे, मुवँ ऋषिव्यासंवादे, मुव सप्तारक्षारनतारकगुह्यतमज्ञानयोगो नाम

अध्यायसंख्या—का1 दे1 सप्तमोऽध्याय ॥७॥, ब1 3 दे3 4 सप्तमोऽध्यायः, ब2 सप्तमाध्याय ॥ ५७ ॥, दे4 8 9 शे1 अ2 उ1 मुए मुव अष्टमोऽध्याय, दे5 मुवँ अष्टमोऽध्याय ॥ ८ ॥, न1 समर्चाशाध्याय

# १

ऋषय ऊचुः ।*
निष्कलो निर्मलो नित्यो निष्क्रियः परमेश्वरः ।
तन्नो वद महादेव विश्वरूप्य कथं भवान् ॥१

ईश्वर उवाच ।*
नाहं विश्वो न विश्व च मामृते विद्यते द्विजा ।
मायानिमित्तमत्रास्ति सा चात्मानमपाश्रिता ॥२
अनादिनिधना शक्तिर्मायाऽव्यक्तसमाश्रया ।
तन्निमित्त प्रपञ्चोऽयमव्यक्तादभवत् खलु ॥३
अव्यक्त कारण प्राहुरानन्दं ज्योतिरक्षरम् ।
अहमेव परं ब्रह्म मत्तो ह्यन्यन्न विद्यते ॥४
तस्मान्मे विश्वरूपत्वं निश्चितं ब्रह्मवादिभिः ।
एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम् ॥५
अहं तत् परम ब्रह्म परमात्मा सनातन ।
अकारणं द्विजा. प्रोक्तो न दोषो ह्यात्मनस्तथा ॥६
अनन्ता शक्तयोऽव्यक्ते मायाद्या. संस्थिता ध्रुवा. ।
तस्मिन् दिवि स्थितं नित्यमव्यक्त भाति केवलम् ॥७
याभिस्तल्लक्ष्यते भिन्नमभिन्न तु स्वभावतः ।
एकया मम सायुज्यमनादिनिधन ध्रुवम् ॥८

कू. २१८

---

१

* दे4 द1 ○, दे1 ऋप*ऊचु, दे8 ऋषयो ऊचु, त1 ईश्वर उवाच, + ऋषय ऊचु, म2 मुनय, म1 उ1 ऋषय

१ दे1 ○ –a) दे3 निरीहो + नि कलो (→निष्कलो) –b) दे8 नि कल (→निष्क्रिय) –c) दे8 मुए मुव ततो, दे9 ततो + तन्नो (→तन्नो), दे8 देव, द1 वैद (→वद), द1 म2 म1 उ1 महाभाग (→महादेव) –d) का1 उ1 विश्वरूप, दे5 विश्व ** (→विश्वरूप)

* दे8 9 ईश्वर उ, द1 म2 म1 उ1 ईश्वर

२ –a) म2 विश्वे (→विश्वो) –c) का1 व2 द॰ ते1 द1 मुवें मुए मुव °र्निमित्तमात्रास्ति (ते1 °स्ते) (→°निमित्तमत्रास्ति) –b) का1 प2 3 दे3 0 चास्माक मुवें मुए मुव चात्मानि (→चात्मान), दे4 मय्याश्रिता दे8 9 म2 मुवें मुए मुव मयाश्रिता न1 त1 द1 उपाश्रिता (→पाश्रिता)

३ –a) न1 शक्ति- (→शक्तिर्) –b) दे8 9 उ1 मुवें मुए मुव व्यक्ति° (→[म]व्यक्त°) व1 दे2 °श्रिया (म2 °या) म2 °श्रिता म2 °श्रिता- (→°श्रया), ते1 मम माया दुरत्यया –c) व3 दे4 तन्निमित्त द1 म2 उ1 तन्नियोगाद्व (→तन्निमित्त) –d) दे3 9 मुवें मुए मुव ह्यभवन् (→ह्यभवन्), दे1 किन (→खलु) म1 मव्यक्तामवि तत्खलु

४ का1 ४d ६a ○ (द ग) –a) द1 मव्यक्त- (→मव्यक्त) –b) दे4 ते1 मानन्द (→मानन्द) –c) दे1 म2 उ1 अपमेय (→अहमेव) म1 दे2 बह्मन (→ब्रह्म) –d) दे4 न1 द1 ह्यन्य (→ह्यन्यद्), दे3 5 विद्यते न हि (→विद्यते)

५ का1 ○ (द ४ पा वि) –a) न1 तस्मा नो (→तस्मान्मे), दे6 °रूप त्व (→°रूपत्व) –c) व2 3 दे2 3 5 8 एकत्वेन (→एकत्वे च), व2 3 दे3 3 5 6 पृथक्त्वेन (→पृथक्त्वे च) –d) दे4 ते1 द1 म2 उ1 प्रमाणम (→निदर्शनम)

६ का1 ३ ○ (द ४ पा वि) –a) व2 तु, दे4 मत् (→तत्) –c) का1 अकारणादिदं, ते1 अकारण द्विज, म2 म1 अकारणाद् द्विजा (→अकारण द्विजा), व3 मुवें मुए मुव प्रोक्ता द1 म2 उ1 प्रोक्त (→प्रोक्ता) –d) का1 दे3 6 दोषा (→दोषो), ते1 तदा (→तथा)

७ द॰ ७b ८d ○ (द ग) –a) व1 दे3 6 सुलभा (→अनन्ता) थ॰ [ग]व्यक्त, दे1 व2 उ1 [म]व्यक्ते, दे8 9 मुवें मुए मुव (ग)व्यक्ता न1 (ग)व्यक्त (→[ग]व्यक्ते), दे4 मायान्त्वा- दे5 मायाद्या दे8 9 मुवें मुए मुव मायया (→मायाद्या) न1 म2 ध्रुव (→ध्रुवा), दे1 मद्दाद्या स्थिता ध्रुवा –c) द1 दिरव (→दिवि) द1 तस्मिन्स्थित नित्यमज, ते1 तस्मिन्नधिष्ठित नित्य

८ प2 ○ (द ७ पा वि) –a) द1 प, द8 म1 तं, दे4 द1 उ1 म (→मम) दे8 9 मुव मुए भ(प1 या1)भिन्न पश्यते भिन्न त1 यदभिन्न मदृश्यते भिन्न –b) दे4 द1 म1 तत् त1 प (→तु), व1 3 मुव यभिन्नम् (→अभिन्न), दे8 9 मुवें मुए ब्रह्म व्यक्त गतानश –c) त1 एकया, उ1 एकधा (→एकया), दे3 10 मुवें मुए मुव एकया मायया युक्तं, दे1 एकया मम सायुज्य, + एकया मायया युक्त

पुंसोऽभूदन्यया भूतिरन्यया तत्तिरोहितम् ।
अनादिमध्यं तिष्ठन्तं युज्यतेऽविद्यया किल ॥९

तदेतत् परमं व्यक्तं प्रभामण्डलमण्डितम् ।
तदक्षरं परं ज्योतिस्तद् विष्णोः परमं पदम् ॥१०

तत्र सर्वमिदं प्रोतमोतं चैवाखिलं जगत् ।
तदेव च जगत् कृत्स्नं तद् विज्ञाय विमुच्यते ॥११

यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् बिभेति न कुतश्चन ॥१२

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तद् विज्ञाय परिमुच्येत विद्वान्
नित्यानन्दी भवति ब्रह्मभूतः ॥१३

यस्मात् परं नापरमस्ति किञ्चित्
यज्ज्योतिषां ज्योतिरेकं दिविस्थम् ।
तदेवात्मानं मन्यमानोऽथ विद्वा-
नात्मानन्दी भवति ब्रह्मभूतः ॥१४

तदव्ययं कलिलं गूढदेहं
ब्रह्मानन्दममृतं विश्वधाम ।
वदन्त्येवं ब्राह्मणा ब्रह्मनिष्ठा
यत्र गत्वा न निवर्त्तेत भूयः ॥१५

---

९ –a) दे1 4 पुसो भुदन्ययो(दे4 °यो)द्भूतिर्, दे5 पुसोऽभूदव्ययोद्भूतिर्, + पुसोऽभूदव्ययोद्भूतिर, दे8 या सा भूमि महाभूतिर्, दे8 9 मुबँ मुए मुब, पुसोऽन्याभूद्यथाभूतिर्, न1 द1 प्र2 उ1 पुसोऽभूदव्ययोद् (प्र2 °यो) भूतिर्, तै1 या सोऽभूदव्याद्भूतिर् –b) दे10 अनाया, द1 प2 उ1 अन्यथा (→अन्यया), दे1 त (→तत्) –c) का1 व3 दे1 2 4 °मध्ये (व3 दे4 °ध्य-), द1 उ1 °मध्या (→°मध्य), व1 अनादिनिष्ठ मध्य तु, दे5 तै1 अनादिमध्यनिधन, न1 म1 मुव अनादिमध्यनिष्ठ तद् –d) दे1 प्र2 त्यज्यते, दे8 9 मुबँ मुए मुब चेष्टते, न1 वाध्यते, तै1 म1 व्यज्यते, द1 त्यजते (→युज्यते), व1 विद्यते (→-विद्यया), व2 तद् विज्ञाय प्रमुच्यते

१० –a) दे4 यदेव (→तदेतत्) –a) दे1 8 9 मुबँ, मुए मुब परमव्यक्त, द1 परम दिव्य (→परमं व्यक्तं) –c) द1 प्र2 उ1 तदह परम ज्योतिर्

११ –a) न1 यत्र (→तत्र), द1 प्रोक्त (→प्रोत) –c) दे1 8 9 प्र2 म1 मुबँ मुए मुब तदेवेद दे4 तत्रैव च, द1 तमेवेद (→तदेव च) –d) दे3 6 एतद् विज्ञाय मुच्यते

अत्र पर दे1 अधिकम्—

* 'य सर्वगो बुद्धिरतादिशेष
 गतप्रज्ञा नित्यमलुप्तशक्ति ।
अत तापिक च विभोर्विदित्वा ।
 पदावुदन्नानि महेश्वरस्य ॥
तत्सर्वाणि यत्र भ्रान्त्या च तानि
 भूतमात्राद् सर्वत्र भासमानानि ।
या सा हेतु प्रकृति सा प्रधान
 सत्र प्रोक्ता विविधैर्योगिभिरपि सत ॥
या सा शक्ति प्रज्ञा नीलरूपा ।
 वेदैभूता कारण ब्रह्मयोनिः ।
तस्य एव परमेष्ठी परस्तात्
 महेश्वर परमतत्त्वरूप ॥
ब्रह्मा योगी परमात्मा महीयान्
 व्योमव्यापी वेदवेद्य परात्मा ।

(= ८ १३-१६ b)

१२ –d) का1 व2 3 दे2 3 6 न बिभेति कदाचन, व1 बिभेति च कदाचन, दे4 5 न1 तै1 द1 प्र2 म1 न बिभेति कुतश्चन

१३ –a) व2 ***, दे5 न1 पुराण (→महान्त) –b) दे8 मुबँ मुए पुरुष, दे2 तमस, + पुरुष (→तमस), दे8 9 व1 मुबँ मुए पुरस्तात् (→परस्तात्) –c) व2 3 मुबँ मुए मुब त (→तद्), दे1 प्र2 परिमुच्यते, दे8 वि • मुच्यते, तै1 पर मुच्यते (→परिमुच्येत) –d) दे1 5 द1 प्र2 उ1 °भूय (→°भूत)

१४ दे1 5 ⊙, दे4 १४d १६c ○ –a) व1 दे1 तै1 तस्मात्, म1 मुबँ मुए अस्मात् (→यस्मात्), दे6 वापर°, दे1 नावर°, उ1 नोपर° (→नापर°), म1 यस्मा-त्परं नापरमस्ति किञ्चित्, तै1 तस्मात्परस्मादपरमस्ति किञ्चित् –b) का1 व2 3 दे2 3 6 दिविष्ठ, प1 विविष्ट (→दिविस्थं) तै1 यज्ज्योतिरैव परम दिवि तिष्ठति –c) दे1 मन्यमानोऽपि (→मन्यमानोऽथ), दे1 धीर (→विद्वान्)

१५ दे1 ○ (द १४ या दि ) –a) प1 दे3 तदात्मकं दे1 तमव्ययं, दे3 8 9 तदव्ययं, मुबँ मुए तदव्ययं (→तदव्ययं) का1 कलिज, दे1 कपिलं (→कलिलं), दे1 °देय (→°देहं) –b दे3 6 मुबँ मुए °धामा (→°धाम) –c) दे1 वदन्त्येवं (→वदन्त्येवं) –d) म1 तै1 निवर्तन्ति (→निवर्त्तेत)

हिरण्मये परमाकाशतत्त्वे
यदर्चिषि प्रविभातीव तेजः ।
तद्विज्ञाने परिपश्यन्ति धीरा
विभ्राजमानं विमलं व्योम धाम ॥१६

ततः परं परिपश्यन्ति धीरा
आत्मन्यात्मानमनुभूयानुभूय ।
स्वयंप्रभः परमेष्ठी महीयान्
ब्रह्मानन्दी भगवानीश एषः ॥१७

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
तमेवैकं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥१८

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् न तस्मादन्यदिष्यते ॥१९

इत्येतदैश्वरं ज्ञानमुक्तं वो मुनिपुंगवाः ।
गोपनीयं विशेषेण योगिनामपि दुर्लभम् ॥२० बँ २.९.२०

इति श्रीकूर्मपुराणे षट्साहस्र्या संहितायामुपरिविभागे (ईश्वरगीतासु) नवमोऽध्याय ॥ ९॥

---

१६ न1 म2 O; दे4 abc O, तै1 d O –a) दे2 तत्त्व (→तत्त्वे), का1 हिरण्मय परमेकोऽघतत्व, दे1 हिरण्मय ब्रह्माकाशतत्वे –b) फा1 यदर्चिमि तै1 यज्ज्योतिषि (→यदर्चिषि), पा1 प्रविभाति *, व2 प्रविभातीह द1 उ1 प्रतिभातीव, तै1 म1 प्रतिभातीह (→प्रविभातीव), दे8 9 मुवॅ मुए मुव यद्वै दिवि विप्रतिभातीव तेज –c) व2 उ1 तद् विज्ञान दे1 तद् विज्ञान-, दे2 8 9 तद् विज्ञानेन (→तद् विज्ञाने) –d) व3 विराज° (→विभ्राज°), दे1 विपुल (→विमल)

१७ न1 O, तै1 a O –a) द1 प्र० उ1 ततस्तत (अतत पर), पा1 व3 बे1 यत्पश्यन्ति, व1 म1 यत्परिपश्यन्ति, व2 तत् परिपश्यन्ति, दे1 यत्प्रपश्यन्ति (→परिपश्यन्ति), दे6 तत्पर यत्पश्यन्ति धीरा –b) व3 दे5 प्र3 म1 उ1 °यानुभूय, दे8 9 मुवॅ मुए मुव °य साक्षात् (→°यानुभूय), तै1 आत्मन्यनु-भूयानुभूय –c) फा1 व1 3 दे2 6 स्वय प्रभ, दे4 स्वय **, द1 स्वय प्रभु (→स्वयंप्रभः) दे4 तै1 परमात्मा (→परमेष्ठी), द1 प्र2 म1 उ1 °मात्मा महात्मा (→°मेष्ठी महीयान्) –d) प्र2 ईश (→°नन्दी), दे5 एव, प्र2 (एक) एप (→एष) दे3 भवानीश (→भगवानीश)

१८ –a) व3 भूत तै1 रुद्र (→देव) –c) दे4 स्व (→त), व3 त्वमेकं यें दे1 मम चैक प्र2 तामवेक (→मेवैक), फा1 बे2 3 6 यन, व1 दे4 द1 येन, दे1 ये तु (→येऽनु) –d) उ1 मुक्ति (→शान्ति)

१९ –a) दे3 8 9 मुवॅ मुए मुव सर्वेन्द्रिय° (→सर्वानन°), दे8 °ग्रीवा, द1 प्र2 °ग्रीव- (→°ग्रीव) –b) व1 °शय, तै1 °लय (→°शय) –c) व2 3 *, दे5 8 9 तै1 द1 प्र2 उ1 मुवॅ, मुए मुव स (→च) –d) व2 तस्मादन्यद्विशिष्यते, दे3 8 9 मुवॅ मुए मुव तस्मादन्यत्र विद्यते

अत पर न1 पुस्तके अधिकम्—

स्वयप्रभ* परमेष्ठी महीया ब्रह्मानन्दी भगवानीश एप ।
(= १७d)

२० –a) दे8 9 ईश्वर (→ऐश्वर) –b) फा1 उक्त यत्, व1 3 दे2 3 5 6 मुक्तवे तै1 उक्त हे, म1 उक्त वै (→उक्तं वो) –c) दे4 °नीयो (→°नीय), म2 प्रयत्नेन (→विशेषेण)

पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

पुराणनाम—का1 दे4 न1 म1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु व1 इति कौर्मे ईश्वरगीतासूपनिषत्सु, व2 दे6 इति*मपुराणे ईश्वरगीतासूपनिषत्सु, व3 दे2 3 इति कू (दे2 कौ)र्मपुराणे ईश्वरगीतासूपनिषत्सु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु उत्तरखण्डे, दे5 मुवॅ इति श्रीकूर्मउत्तरार्द्धे ईश्वर गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, दे8 9 मुए इति श्रीईश्वरगीतासु, तै1 इति श्रीकूर्मपुराणे उपरिभागे कूर्मपुराणे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे प्र2 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वर-गीतासूपनिषत्सु, मुव इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे

अध्यायनाम—का1 व1 3 द1 6 8-9 न1 प्र2 म1 उ1 मुए O, तै1 ईश्वरनारायणमहर्षिसंवादे ईश्वरस्य विश्वरूपस्य-योगो नाम, मुवॅ महर्षिनारदसंवादे, मुव निर्गुणब्रह्मणो विश्वरूपकारणज्ञानयोगो नाम

अध्यायसंख्या—का1 दे1 अष्टमोऽध्याय ॥८॥ व1 3 दे2 3 6 अष्टमोऽध्याय, व2 अष्टमोऽध्याय ॥४८॥, दे4 8 9 तै1 प्र2 म1 मुए मुव नवमोऽध्याय, दे5 मुवॅ नवमोऽध्याय ॥९॥, न1 अष्ट (सप्त) पञ्चाशोऽध्याय, उ1 नवमोऽध्याय* ॥४९॥

# १०

ईश्वर उवाच ।*

वे २।१०।१ अलिङ्गमेकमव्यक्तं लिङ्गं ब्रह्मेति निश्चितम् ।
स्वयंज्योतिः परं तत्त्वं परे व्योम्नि व्यवस्थितम् ॥१
अव्यक्तं कारणं यत्तदक्षरं परमं पदम् ।
निर्गुणं शुद्धविज्ञानं तद् वै पश्यन्ति सूरयः ॥२
तन्निष्ठाः शान्तसंकल्पा नित्यं तद्भावभाविताः ।
पश्यन्ति तत् परं ब्रह्म यत्तल्लिङ्गमिति श्रुतिः ॥३
अन्यथा नहि मां द्रष्टुं शक्यं वै मुनिपुंगवाः ।
नहि तद् विद्यते ज्ञानं यतस्तज्ज्ञायते परम् ॥४
एतत्तत्परमं ज्ञानं केवलं कवयो विदुः ।
अज्ञानमितरत् सर्वं यस्मान्मायामयं जगत् ॥५
यज्ज्ञानं निर्मलं सूक्ष्मं निर्विकल्पं यदव्ययम् ।
ममात्मासौ तदेवेदमिति प्राहुर्विपश्चितः ॥६
येऽप्यनेकं प्रपश्यन्ति तेऽपि पश्यन्ति तत्परम् ।
आश्रिताः परमां निष्ठां बुद्ध्वैकं तत्त्वमव्ययम् ॥७
ये पुनः परमं तत्त्वमेकं वानेकमीश्वरम् ।
भक्त्या मां संप्रपश्यन्ति विज्ञेयास्ते तदात्मकाः ॥८

१०

* द1 ○, दे1 ईश्वर * वाच, दे8 9 ईश्वर उ, प्र2 म1 उ1 ईश्वर

१. –a) द1 एव (→एकं), म1 मुबँ मुए मुब. अव्यक्त- (→अव्यक्त) –c) द1 पर तर, म2 उ1 परतर, (→पर तत्त्व) –d) व2 दे3 8 म1 पर, दे4 8 मुबँ मुए पूर्वं, दे9 परे + पूर्वं प्र2 पर- (→परे)

२ –a) व3 दे4 अव्यक्त- (→अव्यक्त), द1 परम (→कारण), न1 यत् तम् म1 तद्द (→यत्तद्) –c) दे8 9 मुबँ मुए सिद्धि° (→शुद्ध°) –d) दे2 3 6 त वै, द1 प्र2 उ1 सदा (→तद्वै), दे3 6 पश्यति (→पश्यन्ति), दे2 4 6 सूरय (→सूरय ), दे9 ते1 तद् विपश्यन्ति सूरय

३ –a) का1 तन्निष्ठा सत्य°, दे4 मन्निष्ठा शान्त°, दे8 तन्निष्ठ शान्त°, ते1 व1 तन्निष्ठा शान्ति°, मुबँ मुए मुब तन्निष्ठ स्वान्त° (→तन्निष्ठा शान्त°) –c) द1 प्र2 ग1पर, उ1 मत्पर (त) (→तत्पर), दे1 म1 श्रुत (→श्रुति ).

४ –a) दे1 नैव (→नहि) –b) न1 म1 शक्य यो, ते1 भक्ष्यते, प्र2 शक्यो वै (→शक्य वै), दे2 °पुंगव (→°पुंगवा ) –d) का1 न1 ते1 म1 यतद्, व2 यतस्, दे1 8 9 मुबँ मुए मुब. येन (→यतस्), न1 यै जायते, म1 स जायते (→ज्ज्ञायते), ते1 पदम् (→परम्)

५ –a) व2 एते तत्, दे4 5 ते1 द1 प्र2 म1 उ1 इत्येतत्- (प्र2 °त) (→एतत् तत्), दे8 9 मुबँ. मुए. ध्यानं (→ज्ञान), –c) का1 व2 3 दे8 9 द1 प्र2 मुबँ मुए मुब अज्ञान (→अज्ञान), का1 प्र2 मुबँ. मुए मुब -तिमिरं, व2 3 दे3 6 9 -तिमिर-, दे1 6 इतिर-, दे4 इतरान, दे5 ते1 इतिरत्, द1 प्र2 तिमिरात् (प्र2 °रत्) (→इतरत्), व2 3 दे1 3 5 6 8 9 न1 मुबँ मुए मुब ज्ञान (→सर्वं) –d) दे5 न1 तस्मात् (→यस्मान्), दे1 तस्मादेतन्मय जगत्, दे1 ते1 द1 प्र2 उ1 विज्ञानमिति मे मति

६ –a) व2 3 दे3 तदज्ञान, दे9 तदज्ञान, + यद् ज्ञान, ते1 य[द]ज्ञान (→यज्ज्ञान), दे1 4 5 8 9 न1 ते1 द1 प्र2 म1 उ1 मुबँ मुए मुब शुद्ध (→सूक्ष्म) –b) दे1 4 5 8 9 न1 ते1 द1 प्र3 म1 उ1 मुबँ मुए मुब. निरञ्जनम् (→यदव्ययम्). –c) दे9 ममात्मयत्, ते1 महात्मानो, द1 अशौ * सौ, प्र2 ममात्मान, उ1 ममात्मासौ (→ममात्मासौ), दे8 9 मुबँ मुए. तदेवेन, द1 तदेवेद (→तदेवेद) –d) दे1 विनिश्चितं ते1 विनिश्चितम्, प्र2 मनीषिण (→विपश्चित )

७ का1 ७c-१७a ○ –a) ते1 यथदेक (→येऽप्यनेकं), म1 विपश्यन्ति (→प्रपश्यन्ति) –b) दे8 मुबँ मुए मुब तत्पर परम पदम् दे8 तत्पर परम पदम्, + तेपि पश्यन्ति तदिदम् –c) दे4 न1 आश्रितां (→आश्रिता ), द1 प्र2 उ1 परमां (→परमां) –d) व2 दे8 म1 मुबँ मुए मुब बुद्धैकं (→बुद्ध्वैकं)

८ का1 ○ –b) दे1 एकश्चानेकम्, दे5 एक श्चानेक, न1 म1 एक चानेक- (→एक वानेक), प्र2 एकत्वानेकमीश्वरः –c) दे8 मुए भक्ता (→भक्त्या), दे8 संप्रपश्यते, + संप्रपश्यन्ति (→संप्रपश्यन्ति) –d) न1 विज्ञायास्तो (→विज्ञेयास्ते), प्र2 न1 म1 मदात्मका (→तदात्मका)

साक्षादेव प्रपश्यन्ति स्वात्मानं परमेश्वरम् ।
नित्यानन्दं निर्विकल्पं सत्यरूपमिति स्थितिः ॥९

भजन्ते परमानन्दं सर्वगं यत्तदात्मकम् ।
स्वात्मन्यवस्थिताः शान्ताः परेऽव्यक्ते परस्य तु ॥१०

एषा विमुक्तिः परमा मम सायुज्यमुत्तमम् ।
निर्वाणं ब्रह्मणा चैक्यं कैवल्यं कवयो विदुः ॥११

तस्मादनादिमध्यान्तं वस्त्वेकं परमं शिवम् ।
स ईश्वरो महादेवस्तं विज्ञाय विमुच्यते ॥१२

न तत्र सूर्यः प्रविभातीह चन्द्रो
न नक्षत्राणि तपनो नोत विद्युत् ।
तद्भासेदमखिलं भाति नित्यं
तन्नित्यभासमचलं सद्विभाति ॥१३

नित्योदितं संविदा निर्विकल्पं
शुद्धं बृहन्तं परमं यद्विभाति ।
अत्रान्तरं ब्रह्मविदोऽथ नित्यं
पश्यन्ति तत्त्वमचलं यत् स ईशः ॥१४

नित्यानन्दममृतं सत्यरूपं
शुद्धं वदन्ति पुरुषं सर्ववेदाः । वे २१०१५

९ का1 ○ –a) व2 दे3 8 9 ग्र2 मुवँ मुए मुब साक्षादेव, न1 साक्षादेन (→साक्षादेव) –b) दे1 ग्रात्मान (→स्वात्मान) –c) दे3 6 निरानन्द (→नित्यानन्द) –d) दे1 मत्य तप, दे3 6 नित्यरूप, ते1 सत स्वरूप (→सत्यरूप), दे5 स्थित, ग्र2 स्थिति, म1 श्रुति (→स्थिति)

१० का1 ○ –a) दे1 भजते, दे6 ते1 गजन्ति (→भजन्ते) –b) दे5 सर्वत्र (→सर्वग), व2 3 दे2 3 6 9 यत् सदात्मक, दे8 मुवँ मुए मुब जगदात्मकम्, ते1 उत्तदात्मकम् (→यत्तदात्मकम्) –c) दे2 3 6 मात्म° (→स्वात्म°), ते1 एव (→°यव) –d) दे1 पर- (→परे), दे8 मुवँ मुए मुब °व्यक्ता, दे9 °व्यक्त, न1 °व्यक्तो (→°व्यक्ते) ते1 परेस्य (→परस्य)

११ का1 ○ –a) दे8 विद्या, ते1 म1 एषा, द1 ग्र2 येषा उ1 येषा (→एषा), म1 विमुक्ति (→विमुक्तिः), ग्र2 म1 परमा (→परमा) –b) व2 मया (→मम), ग्र2 उत्तमा (→उत्तम) –c) दे1 निर्वाण- (→निर्वाण), दे1 ब्रह्मणोरैक्य, दे8 ब्रह्मणोर्थैक्य-, न1 ब्रह्मणा चैक्य ते1 ब्रह्मणा चैव द1 ब्रह्मणो ह्यैक्य, ग्र2 ब्रह्मणास्त्वैक्य (→ब्रह्मणा चैक्य) –d) दे8 कैवल्य- (→कैवल्य)

१२ का1 ○ –b) व3 वास्त्वक, द1 वस्त्वेक ग्र2 उ1 यस्त्वेक (→वस्त्वेक), व2 3 दे1 3–9 ते1 द1 उ1 मुब परम शिव (→परमं शिवम्) –c) दे1 ईश्वरोऽथ महादेवस –d) व2 3 दे1 8 म1 तद्विज्ञाय (→तं विज्ञाय), दे4 न1 मुवँ मुए, मुब प्रमुच्यते, दे5 स मुच्यते (→विमुच्यते)

१३ का1 ⊙ –a) ते1 • (→न), दे1 8 म1 द1 उ1 मुवँ मुए प्रतिभातीह दे4 5 ते1 ग्र2 म1 मुब प्रतिभाति• (→प्रविभातीह) –b) दे5 8 ते1 म1 मुवँ मुए • (→न), दे8 मुवँ मुए नक्षत्राणां (→नक्षत्राणि), व2 3 तपनोऽथ विद्युत्, दे3 तपनो विद्युत्, दे4 नापनयो न विद्युत्, दे6 तपनो विद्युतस्, दे8 मुवँ मुए गणो नोत विद्युत, दे9 तपनोत विद्युत्, न1 न भनो नोत विद्युत ते1 तपनो नोपि विद्युत्, द1 तपनो नाह विद्युत्, म1 ज्वलनो नोत विद्युत् (→तपनो नोत विद्युत्) –c) दे3 तद्भासैव, दे4 उ1 तद्भासे (नै) व, दे6 • ह्यसेद, दे8 9 मुवँ मुए तद्भासित ते1 तद्भावेनैत, द1 भद्भासेनेद, ग्र2 सद्भावेनेद, म1 • भासा वेद (→तद्भासेद), दे8 9 मुवँ मुए ह्यखिल, म1 सस्थित (→अखिल) ते1 ••, द1 ग्र2 उ1 (वि)भाति (→भाति), दे1 3 5 8 9 न1 म1 मुवँ मुए मुब विश्व, ग्र2 मध्य (→नित्य) –d) दे1 तन्निमसि, दे3 6 सनित्यभास, दे5 नित्येमाव, दे8 9 मुवँ मुए सतीवभास, न1 द1 ग्र2 उ1 नित्याभास (→तन्नित्यभास), दे3 4 8 9 मुब मुए मुव ममल, दे5 मचल दे8 ममा(?)ल (→मचल) दे9 सद्विमेति दे8 9 न1 उ1 मुवँ मुए तद्विभाति (→सद्विभाति), ते1 तद्भानमखिल ••• विभाति

१४ का1 ○, दे1 द1 ग्र2 म1 उ1 ab ○ –a) दे1 सत्योदित दे4 नित्योदित, दे8 9 मुवँ मुए विश्वोदित (→नित्योदित), व2 2 मुदित, दे2 3 5 9 निःकल्प, दे4 सदिति, न1 ••• मुवँ मुए मुब निष्कल (→संविदा) –b) व2 3 शुभ्र (→शुद्ध), व2 3 निशान्त, दे1 3–5 8 9 न1 मुवँ मुए मुब बृहत (→बृहन्त) –c) दे4 तमोत्तर, दे5 न1 दे1 मुवँ मुए मुब मत्रान्तरे, द1 ग्र2 उ1 तमान्तर (→अत्रान्तर), दे4 °विदोऽथ, न1 °विद्याय, उ1 °विदाथ (→°विदोऽथ) –d) दे4 यदिरल, दे5 चमल, दे8 यचल (→मचल), ग्र2 यस्, म1 यं (→यत्)

१५ का1 ○ –a) म1 अत्र त (→अमृत), द1 ग्र2 म1 उ1 नित्यरूप (→सत्यरूप) –b) दे6 °विदा (→°वेदा) –c) दे0 ममोभिति, दे8 मुवँ मुए मुब प्राणानिति, दे9 प्राणानिति, +तमोभिति (→तमोभिति), ते1 प्रणव वासितार, द1 प्रणवेनी-

वे.३.१०.१५ तमोमिति प्रणवेनेशितारं
ध्यायन्ति वेदार्थविनिश्चितार्थाः ॥१५
न भूमिरापो न मनो न वह्निः
प्राणोऽनिलो गगनं नोत बुद्धिः ।
न चेतनोऽन्यत् परमाकाशमध्ये
विभाति देवः शिव एव केवलः ॥१६
इत्येतदुक्तं परमं रहस्यं
ज्ञानामृतं सर्ववेदेषु गूढम् ।
जानाति योगी विजनेऽथ देशे
युञ्जीत योगं प्रयतो ह्यजस्रम् ॥१७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) दशमोऽध्यायः ॥१०॥

---

शितार, मुवें मुए प्रणविनेशितार (→प्रणवेनेशितार) –d) दे4 म1 वेदात° (→वेदार्थ°), व3 °विपश्चितार्था, दे5 6 °विनिश्चितार्थं (दे8 °र्थं) (→°विनिश्चितार्था), दे8 9 मुवें मुए मुव ध्यायन्ति वेदैरिति (दे9+वेदान्तवि) निश्चितार्था

१६ का1 ⊙. –a) दे1 बुद्धि, न1 न च, म1 वायु(रग्नि) (→वह्नि), ते1 न भूमिरापो न च वह्निरस्ति –d) न1 म1 प्राणानिलो, द1 प्रभाननो, ग्र2 न वानिलो (→प्राणोऽनिलो), ग्र2 गगनो (→गगन), व2 ग्र3 न*, व3 नोभ्य, दे1 द1 नो न, दे3 जोल, दे6 तोभ, म1 तेन (→नोत), दे1 वह्नि (→बुद्धि), ते1 न चानिलो भेस्ति न चाम्बर च, उ1 प्रभातिलोके गगन न बुद्धि –c) व2 न चेतनोन्य, दे1 न चान्योन्यत्*, दे2 न चैतनोन्यत, दे4 न मेतनो य, द1 न चैतन्नै*, ग्र2 न चैतन्ये*, उ1 न चेतन्यो* (→न चेतनोऽन्यत्) –d) दे8 न1 मुवें मुए एक (→एव)

ते1 पुस्तके b चरणानन्तरमधिकम्—
31 * एव विदित्वा परमात्मरूप
गुहाशय निष्कलमद्वितीयम् ।
समस्तसाक्षि सदसद्विहीन
प्रयाति शुद्ध परमात्मरूपम् ॥

१७ ते1 ○, का1 a ○ –b) का1 ज्ञानामृते, दे1 ज्ञानेद्वित दे0 9 मुवें मुए ज्ञानन्चेद (→ज्ञानामृत), दे1 3-5 8 9 न1 द1 ग्र1 म1 उ1 गीतम् (→गूढम्) –c) न1 ज्ञात्वा च म1 ज्ञानेन (→जानाति), द1 ग्र2 उ1 विजने च देशे, दे1 4 म1 विजन (म1 °ने) प्रदेशे, दे8 9 विजन च देव (दे9 °शे) (→विजनेऽथ देशे) –d) न1 युन्जीय (→युञ्जीत), द1 योगो, ग्र3 योगे (→योग), दे6 परम, ग्र2 प्रयते (→प्रयतो), दे3 ह्यजस्रं, दे0 दुर्लभ, द1 ग्र2 उ1 ह्यजेय (द1 °य) (→ह्यजस्रम्)

अत परं दे6 पुस्तके अधिकम्—
येनात्मान प्रपश्यन्तो यतो यतोह्यनस्त
पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

पुराणनाम—का1 दे4 8 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ग्र2 3 इति कूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे1 ग्र2 म1 उ1 इति श्रीकूर्मपुराणे उत्तरभागे (दे1 °र्द्धे) ईश्वरगीतासूपनिषत्सु, दे5 8 9 मुए इति श्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति श्रीकूर्मपुराणे उपरिविभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुवें इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुव इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमदीश्वरभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे अध्यायनाम—का1 व2 3 दे1-6 8 9 न1 ग्र2 म1 उ1 मुए ○, ते1 ईश्वरनारायणमहर्षिसंवादे, मुवें ऋषिनारदसंवादे, मुव विज्ञानयोगो नाम अध्यायसंख्या—का1 नवमोऽध्यायः ॥९॥, ग्र3 नवमोऽध्यायः ॥५९॥, व3 दे2 3 6 नवमोऽध्याय, दे8 9 ते1 ग्र2 म1 उ1 मुए मुव दशमोऽध्याय, दे5 मुवें दशमोऽध्याय ॥१०॥, म1 महापाशोऽध्याय

ईश्वर उवाच ।*

अतः परं प्रवक्ष्यामि योगं परमदुर्लभम् ।
येनात्मानं प्रपश्यन्ति भानुमन्तमिवेश्वरम् ॥१

योगाग्निर्दहति क्षिप्रमशेषं पापपञ्जरम् ।
प्रसन्नं जायते ज्ञानं साक्षान्निर्वाणसिद्धिदम् ॥२

योगात्संजायते ज्ञानं ज्ञानाद् योगः प्रवर्त्तते ।
योगज्ञानाभियुक्तस्य प्रसीदति महेश्वरः ॥३

एककालं द्विकालं वा त्रिकालं नित्यमेव वा ।
ये युञ्जतीह मद्योगं ते विज्ञेया महेश्वराः ॥४

योगस्तु द्विविधो ज्ञेयो ह्यभावः प्रथमो मतः ।
अपरस्तु महायोगः सर्वयोगोत्तमोत्तमः ॥५

शून्यं सर्वनिराभासं स्वरूपं यत्र चिन्त्यते ।
अभावयोगः स प्रोक्तो येनात्मानं प्रपश्यति ॥६

यत्र पश्यति चात्मानं नित्यानन्दं निरञ्जनम् ।
मयैक्यं स महायोगो भाषितः परमेश्वरः ॥७

ये चान्ये योगिनां योगाः श्रूयन्ते ग्रन्थविस्तरे ।
सर्वे ते ब्रह्मयोगस्य कलां नार्हन्ति षोडशीम् ॥८ ग्र.२११.८

११

* द1 ○, ग्र2 म1 उ1 ईश्वर, दे9 ईश्वर उ, न1 ईश्वरोवाच, ते1 ॥श्रीम॥ ईश्वर उवाच

१ –a) द1 प्रवेक्ष्यामि (→प्रवक्ष्यामि) –c) ब1 प्रपश्यन्ति, दे4 प्रपद्यति (→प्रपश्यन्ति) –d) दे1 इवापर, दे6 इविश्वर, न1 ते1 महेश्वरम् (→इवेश्वरम्)

२ दे3 9 ते1 २d-३a ⊙ (इ श) –a) दे1 योगोग्निर् (→योगाग्निर्), दे4 5 8 9 ते1 द1 ग्र3 म1 उ1 मुवं मुए मुव दहते (→दहति), न1 योगो निर्दहते क्षिप्र –c) दे3 6 प्रसन्न (→प्रसन्नं)

३ दे8 9 ते1 a ○ (इ २ पा वि), द1 ३b-७a ○ –a) ग्र2 योगास् (→योगात्), ब1 सस्थापयेत् (→संजायते) –b) दे5 योग, न1 यीग (→योग) –c) दे6 -ज्ञानाभियुक्तस्य, म1 ज्ञानाभिमुक्तस्य, ग्र2 -ज्ञानाग्निगुक्तस्य, म1 -ज्ञानाभियुक्तस्य (→-ज्ञानाभियुक्तस्य) –d) दे1 म शंकर, दे1 महेश्वरा (→महेश्वर)

४ दे5 द1 ⊙ –a) न1 त्रिकाल (→द्विकाल) –b) ग्र1 ग्र1 दे1 4 0 उ1 मुवं मुए मुव च (→वा) –c) का1 दे3 9 उ1 मुवं मुए मुव ये युञ्जन्ति महायोग (उ1 °गाव), ब1 ये युञ्जीह* मयोग, दे1 य युञ्जते महादेव, ते1 ग्र3 म1 ये युञ्जन्ति महायोगं –d) का1 ते विज्ञेयो, म1 विज्ञायास्ते, ते1 ते विज्ञाय (→ते विज्ञेया), का1 दे1 0 महेश्वरः (→महेश्वराः)

५ द1 ⊙ (इ ३ पा वि) –a) दे4 5 8 9 ते1 उ1 प्रथमो, न1 विविधो (→द्विविधो), ग्र2 ज्ञेय (→ज्ञेयो); ब2 योगस्तद्विधो ज्ञेयो –b) दे2 म्वभावा (→ह्यभाव), दे4 6 ग्र3 म1 परमो (→प्रथमो), दे1 म(त)त (→मतः), दे5 ह्यभावो द्विजसत्तमा –c) दे0 मनुकासुनकायोग, दे9 अभावयोग सप्रोक्त +मनुकासुनकायोग

६ द1 ○ (इ ३ पा वि) –a) का1 ब2 दे1 2 4 9 न1 उ1 सर्व (→सर्व-), का1 दे2 इवाभास, ब3 इवात्माभ, ते1 -निराभान (→निराभास) –b) न1 स्वरूप येन (→स्वरूप यत्र), दे3 उ1 विद्यते (→चिन्त्यते) –c) ब3 स प्राप्तो, दे4 स प्रोक्ते, न1 स प्रोक्त, ते1 सप्रोक्तो (→स प्रोक्तो) –d) दे2 येनात्मन, दे8 येनात्मान (→येनात्मानं), दे0 प्र (स) पश्यति (→प्रपश्यति)

७ द1 a ⊙ (इ ३ पा वि) –a) ब1 ग्र2 उ1 यत्र (→यत्र), का1 दे1 ते1 ग्र3 उ1 पश्यन्ति, दे2 *श्यति (→पश्यति) –c) म1 मयैक ब2 3 दे6 मयैक, दे1 मम स, दे2 गयैका, दे5 गयीव (?), न1 मायक, द1 स्वर्चैक्य (→मयैक्य), का1 द1 महायोगा, ब1 महायोग, दे3 म1 मुवं मुए मुव मयायोगो, दे8 मयायोगो दे9 महायोगो, +मयायोगो (→महायोगो) –d) म1 भावित (→भाषित); दे1 5 8 9 मुवं मुए मुव परम स्वय, न1 परम स्वय, ते1 परमेश्वरात्, म1 परमेश्वर (→परमेश्वर)

८ –a) दे2 दान्ये (→चान्ये) दे8 ग्र2 म1 योगा, द1 यागात (→योगा) –b) दे8 द1 श्रूयते (→श्रूयन्ते), ब1 मह-, दे5 म1 ग्रन्थ-, न1 ब्रह्म-, ते1 गूढ-, +ग्रन्थ-, द1 गध- (→ग्रन्थ-), दे7 -विस्तरात्, दे8 -विस्तरा, ते1 म1 -विस्तरे-

वें.२।११.६ यत्र साक्षात् प्रपश्यन्ति विमुक्ता विश्वमीश्वरम् ।
सर्वेषामेव योगानां स योगः परमो मतः ॥९
सहस्रशोऽथ शतशो ये चेश्वरबहिष्कृताः ।
न ते पश्यन्ति मामेकं योगिनो यतमानसाः ॥१०
प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा ।
समाधिश्च मुनिश्रेष्ठा यमो नियम आसनम् ॥११
मय्येकचित्ततायोगो वृत्त्यन्तरनिरोधतः ।
तत्साधनान्यष्टधा तु युष्माकं कथितानि तु ॥१२
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः संक्षेपतः प्रोक्ताश्चित्तशुद्धिप्रदा नृणाम् ॥१३
कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्तं त्वहिंसा परमर्षिभिः ॥१४
अहिंसायाः परो धर्मो नास्त्यहिंसा परं सुखम् ।
विधिना या भवेद्धिंसा त्वहिंसैव प्रकीर्तिता ॥१५
सत्येन सर्वमाप्नोति सत्ये सर्वं प्रतिष्ठितम् ।
यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिः ॥१६
परद्रव्यापहरणं चौर्याद् वाऽथ बलेन वा ।
स्तेयं तस्यानाचरणादस्तेयं धर्मसाधनम् ॥१७

---

(→ विस्तरे) -c) म1 ज्ञान° (→ब्रह्म°) -d) म2 काला (→कला), दे6 नार्हति षोडशी (→नार्हन्ति षोडशीम्)

९ -a) द1 म2 उ1 ये च, दे1 यश (→यत्र), व3 प्रपश्यन्ति, दे1 प्रविश्यन्ति, उ1 पर ब्रह्म, +प्रपश्यन्ति (→प्रपश्यन्ति) -b) द1 विमुक्तयो, म2 विमुक्तैर्, उ1 विमुक्तये (→विमुक्ता), द1 ईश्वर (→ईश्वरम्) -d) दे2 न1 सयोग (→स योग), दे1 परम स्मृत (→परमो मत)

१० -a) व2 सहस्रशो या, व3 सहस्रशो *, म2 सहस्रशोऽथ, उ1 सहस्रशोऽन्ये (→सहस्रशोऽथ), दे1 2 5 8 9 तै1 द1 म1 मुद्रे मुए मुव बहुशो, दे6 भेदेन (→शतशो) -b) दे4 योगेश्वर° (→ये चेश्वर°), दे4 °कृत, दे8 °कृत (→°कृता) -c) दे8 9 नैते (→न ते), दे4 मामेव (→मामेक) -d) च1 मत, तै1 हित-, उ1 यत्र (→यत-), दे6 °मानस (→°मानसा)

११ -c) दे8 समाधिश्च +समाधिना, दे9 समाधिना (→समाधिश्च) -d) उ1 थासन (→आसन), दे8 9 मुद्रे मुए मुव यमश्च नियमासने

अत्र परम् दे1 अधिकम्—
कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा । ( = १४ad)

१२ का1 १२cd-१३ab ○ -a) दे1 ये च के, म2 मत्यक, उ1 इत्येव (→मय्येक), ना1 द1 °चितता, दे8 °चित्तया, दे8 9 °चित्तता, म2 उ1 °चित्तता° (→°चित्तता°), दे1 योगं (→योगो) -b) व2 दे4 5 9 द1 म2 उ1 मुव मुए, प्रत्यन्तर-, दे0 वृ(प्र)त्यन्तर-, दे1 प्रोत्यन्तर (→वृत्त्यन्तर-), व3 -निरोधत, द1 म2 उ1 -निरोधन, दे8 9 मुद्रे मुए निरोधत (→-निरोधत), दे1 वृत्यनर निरोद्धत, दे2 वृत्त्येतर निरोधन, दे3 6 वृत्त्यन्तरनिरोधन, दे5 म1 वृत्त्यन्तरनिरोधक -c) दे4 द1 म2 म1 तत् साधनान्यष्टतस्तु, दे8 9 मुद्रे मुए तत्साधनानि चाष्टानि, उ1 तत् साधनान्यथा तात -d) व1-3 दे3 4 6 न1 वै (→तु), तै1 कथित मया (→कथितानि तु)

१३ का1 ab ○ (द्र १२ पा टि) -c) दे8 यम (→यमा), म2 सक्षेपिता (→संक्षेपत), का1 प्रोक्तश्च चित्तता या सा

१४ द1 १४-१७ ○ (द्र स) -a) का1 कर्मणो (→कर्मणा), दे2 ** (→वाचा) -c) म2 उ1 °वृत्तिदं (→°जनन), का1 न1 दे1 4 8 9 न1 तै1 म2 म1 उ1 मुद्रे मुए मुव प्रोक्त (→प्रोक्तं) -d) व1 त्व हिंसा, दे8 त्व हिं सा (→त्वहिंसा)

१५ द1 ○ (द्र १४ पा टि), म2 उ1 cd ○ -a) दे1 8 9 अहिंसया (→अहिंसाया) -b) दे1 नास्त्यहिंसा, न1 नास्त्यहिंसात् (→नास्त्यहिंसा), म2 परमतोष, उ1 पर तप, (→परं सुखम्) -c) तै1 यो (→या), दे4 कृता हिंसा (→भवेद्धिंसा) -d) का1 दे2 5 तै1 म1 सा (दे5 स) त्वहिंसैव, दे4 न हिंसास्तैव दे8 यस्त्वेहिंसात्व- (→त्वहिंसैव प्र-)

१६ द1 ○ (द्र १४ पा टि) -b) व3 सत्यधर्म, दे8 9 सर्वं सत्ये (→सत्ये सर्वं) -c) दे2 य*र्थ, दे3 यथात्मा, दे6 यथात्म- (→यथार्थ-) -d) का1 सत्ये (→सत्य)

१७ द1 ○ (द्र. १४ पा टि) -a) न1 परद्रव्या° (→परद्रव्या°), न1 °हरणम् (→°हरण) -b) दे1 मुद्रे मुए मुव यच, दे9 यापि, + याप्य- (→वाथ), तै1 बलेन (→बलेन), दे5 च (→वा), दे6 चौर्यादाद्यथवा न वा -c) व3 स्तेय तस्य, दे9 स्तेयस्तस्या-, न1 स्तेया तस्या-, तै1 स्तेय स्तस्या (→स्तेयं तस्या) -c) व1 °चरण, तै1 °चरण म2 म1 उ1 °चरणां (→°चरणात्), -d) व1 धर्म° (→धर्म°)

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥१८
द्रव्याणामप्यनादानमापद्यपि यथेच्छया ।
अपरिग्रह इत्याहुस्तं प्रयत्नेन पालयेत् ॥१९
तपःस्वाध्यायसंतोषाः शौचमीश्वरपूजनम् ।
समासान्नियमाः प्रोक्ता योगसिद्धिप्रदायिनः ॥२०
उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ॥२१
वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः ।
सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥२२
स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः ।
उत्तरोत्तरवैशिष्ट्यं प्राहुर्वेदार्थवेदिनः ॥२३
यः शब्दबोधजननः परेषां शृण्वतां स्फुटम् ।
स्वाध्यायो वाचिकः प्रोक्त उपांशोरथ लक्षणम् ॥२४
ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकः ।
उपांशुरेष निर्दिष्टः साहस्रो वाचिकाज्जपः ॥२५
यत्पदाक्षरसङ्गत्या परिस्पन्दनवर्जितम् ।
चिन्तनं सर्वशब्दानां मानसं तं जपं विदुः ॥२६
यदृच्छालाभतो नित्यमलं पुंसो भवेदिति ।
या धीस्तामृषयः प्राहुः संतोषं सुखलक्षणम् ॥२७ ॑ २.११.२७

---

१८ -a) दे3 6 सर्वभूतेषु (→सर्वावस्थासु) -c) का1 ब3 मैथुन, दे6 मैथुना(?) (→मैथुन-), न1 °त्यागो (→°त्याग)

१९ -b) का1 ब1 दे1 4 8 न1 द1 मुवे मुए मुव तथेच्छया, दे9 य (त)थेच्छया (→यथेच्छया). -c) का1 दे5 8 0 मुवे मुए मुव °यह (→°ग्रह[ ]) -d) दे1 5 8 9 तत् (→तं), द1 ते य यत्नेन (→तं प्रयत्नेन), दे5 चालयेत, म1 वर्जयेत् (→पालयत्)

२० -a) का1 उ1 मुवे मुए -सन्तोषो, ब3 म1 सन्तोषा, दे1 4 5 8 9 ते1 सन्तोष, न1 ग्र2 सन्तोष (→-संतोषा) -b) का1 ऐश्वर्य°, दे1 9 ऐश्वर° (→ईश्वर°) -c) ब1 दे1 नियमा (→नियमा), ते1 प्रोक्ता (→प्रोक्ता) -d) न1 °शिद्धि, दे8 °शिद्ध (→°सिद्धि). ते1 ग्र2 °प्रदायका (→°प्रदायिन)

२१ -a) दे4 °प्रकारादि, न1 °परा केचित् (→°पराकादि) -b) दे1 कृच्छ्रचान्द्रा *** भि -d) दे9 -मुत्तमम् (→उत्तमम्), का1 तपसा वपमुत्तमम

२२ -a) दे2 वेभ्य त° (→वेदान्त°), का1 ब3 दे8 9 °रुद्रीय (→°रुद्रीय-) -b) ब1 उ1 जप बुध, ब3 जप बुधा, दे1 जप बुधी, न1 जपेद्बुध (→जपं बुधा) -c) का1 °शक्तिकर, दे1 8 9 मुवे मुए मुव °सिद्धिकर, दे4 °शुद्धिपर (→°शुद्धिकर), म1 सर्वशुद्धिकर पुंसा,+चित्तशुद्धिकर पुंसा -d) ब3 दे8 स्वाध्याय (→स्वाध्याय)

२३ -a) दे2 स्वाध्यायेष (→स्वाध्यायस्य), उ1 भेदा,+भेदो (→भेदा) -b) ते1 वाचको° (→वाचिको°), दे4 °मानस (→°मानसा), दे8 वाचिकोंशुपा मानसा -c) दे1 °वैशिष्ट्या, दे4 °वैशिष्ट, दे5 मुए °वैशिष्ट्य, म1 °वैपम्य, (→°वैशिष्ट्य) -d) दे3 न1 ते1 ग्र2 म1 °वादिन (→°वेदिन), दे8 °भेदानुवादिन (→°वेदार्थवेदिन)

२४ -a) दे1 न शब्द-, ते1 द1 यशब्दो (→य शब्द-), दे2 -जनना, दे4 द1 जनक, न1 -जनन (→-जनन), ग्र2 म1 गृह्यतो (°ह्णाति) यो विभागेन, उ1 उच्चैर्जपो वाचिक स्यात् -b) म1 स्वय (→स्फुटम्) -c) दे3 वाचिक, ग्र1 ग्र2 वाचक (→वाचिक) -d) ग्र2 उपांशोर् (→उपांशोर्)

२५ ते1 २५b–२६a ⊙ -a) दे8 द1 ओष्ठयो (→ओष्ठयो), ब1 स्पर्श° (→स्पन्द°) -b) ग्र2 उ1 परस्या-दान, म1 परस्यावर (→परस्याशब्द-), दे1 8 9 म1 -बोधक, दे8 -बोभक (→ बोधक) -c) दे2 उपांशुरेषे, द1 उपांशुरधि-, ग्र2 उपांशोरथ उ1 उपांशुरद (→उपांशुरेष), उ1 निर्दिष्ट (→निर्दिष्ट[ ]) -d) ब3 सहस्र-, दे1 मुवे. मुए सान्वसो दे1 0 द1 ग्र2 उ1 सहस्रो (→साहस्रो), का1 वाचिकोज्जप, ब3 वाचिको जप, दे1 8 9 मुवे मुए वाचिकाज्जपात्, दे2 वाचिकान्तय, दे3 वाचकाज्जय, दे4 वाचिका जप, दे6 वाचका जप न1 वाचका जपात्, द1 ग्र2 उ1 वाचिकात्पर, म1 वाचका परा (→वाचकाज्जप)

२६ ते1 a ⊙ (द्र २५ पा टि) -b) का1 ब1 3 दे2 3 8 °विवर्जित, ग्र2 °नवर्जिता (→°नवर्जितम्) -c) दे4 ते1 द1 ग्र2 म1 उ1 °वर्णाना, दे8 °सर्वाना (→°शब्दाना) -d) दे1 5 8 0 ते1 द1 ग्र2 म1 उ1 तज्जप विदु, न1 परिचक्षते (→तं जप विदु)

२७ -a) दे1 4 यदिच्छा° (→यदृच्छा°); उ1 °· पदो (→°लाभतो), मुवे मुए वित्त (→नित्य) -b) दे5 पुंसा (→पुंसो), दे2 भवेदिति, दे4 द1 उ1 भवेद्यदा, ते1 भवेद्यदि, ग्र2 म1 लभेद्यदा (म1 °त) (→भवेदिति) -c) का1 तमेव,

वं. २.११.२८ बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तमाः ।
मृज्जलाभ्यां स्मृतं बाह्यं मनः शुद्धिरथान्तरम् ॥२८
स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्मभिः ।
सुनिश्चला शिवे भक्तिरेतदीश्वरपूजनम् ॥२९
यमाः सनियमाः प्रोक्ताः प्राणायामं निबोधत ।
प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ॥३०
उत्तमाधममध्यत्वात् त्रिधायं प्रतिपादितः ।
स एव द्विविधः प्रोक्तः सगर्भोऽगर्भ एव च ॥३१

मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रिकः ।
मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्रिकोत्तमः ॥३२
अस्वेदकम्पनोत्थानजनकत्वं यथाक्रमम् ।
मन्दमध्यममुख्यानामानन्दादुत्तमोत्तमः ॥३३
सगर्भमाहुः सजपमगर्भं विजपं बुधाः ।
एतद् वै योगिनामुक्तं प्राणायामस्य लक्षणम् ॥३४
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥३५

---

ब1 या धीया, य2 3 दे1 6 या चेष्टा, दे3 8 0 मुर्वे मुए मुब प्रासस्य, दे5 या निष्ठा, ता1 यमस्था (→या धीरता) -d) म1 प्र2 सन्तोप (→सन्तोष)

२८ -a) ब2 3 दे2 उ1 बाह्यमभ्यन्तर, दे1 बाह्यागाभ्यतर, प्र2 माह्यमाभ्यन्तर(?) (→बाह्यमाभ्यन्तर) -b) न1 प्रोक्ता, उ1 प्रोक्तो (→प्रोक्त), दे5 द्विजातय, दे6 द्विजातरा (→द्विजोत्तमा) -c) दे4 जलभ्यां मृद्, द1 मृज्जालाभ्य (→मृज्जलाभ्यां), द1 प्र2 म1 उ1 कृता (→स्मृत) -d) न1 नम (→मन), दे3 6 शुद्धिम, दे1 म1 शुद्धिस् (→शुद्धिर्), दे1 म1 तथान्तरम् (→अथान्तरम्)

२९ -a) दे6 सुति, द1 स्मिति (→स्तुति-), दे3 °पूजार्था, द1 °पूजार्थो, प्र2 °पूजाय(?), म1 °पूजा च, उ1 °पूजाभे (→°पूजाभिर्) -b) पा1 कर्मकायभि, ब1 वाल-कर्भभि (→कायकर्मभि) -c) दे8 9 सुनिश्चिला (→सुनिश्चला), दे5 भवेद्, ते1 [श्र]मले (→शिवे) -d) का1 दे1 8 मुर्वे मुए मुब ईशस्य (→ईश्वर-)

३० दे1 cd ○ -a) ब3 दे6 यमा सनियमा, दे1 4 8 9 ते1 द1 प्र2 म1 उ1 मुर्वे मुए मुब यमाश्च नियमा, दे5 नियमाश्च यमा (→यमाः स नियमा), का1 यमश्च नियम प्रोक्त -b) का1 प्राणायाम- ब1 प्राणायामं, म1 प्राणायाप (→प्राणायाम), दे1 निवोधत, दे6 निवोधता (→निबोधत) -c) का1 दे6 प्राण स्वदेह यो, दे8 9 म1 प्राणस्वदेहजो (म1 °ज), ते1 प्राणास्वदेहतो, प्र2 प्राणस्य देहजो, म1 प्राणश्च देहजो (→प्राण स्वदेहजो) -a) दे3 तत् निरा(रो)धनं, दे5 म1 तद् निबोधन, दे6 8 स निबोधन, द1 तद् निरोधन (→तत् निरोधनम्), दे8 प्राणायामस्य निग्रह (→प्राणायामस्तन्निबोधन(?))

३१. -a) का1 °गर्भ श, दे2 °मध्यादा, ते1 °मध्य(द)त्वात् (→°मध्यत्वात्) -b) ब3 त्रिधाग (?), दे3 त्रिविध, प्र2 त्रिधाग, म1 दपाम (→त्रिधाऽय) -c) का1 दे1 मुर्वे मुए स (→प), ब2 द्वि • ध (→द्विविध)

३२ -b) का1 ब1 दे1 2 6 8 9 न1 ते1 द1 प्र2 म1 मुर्वे मुए मुब मात्रक, दे1 मात्रका (→मात्रिक) -c) ते1 मध्यमप्राण°, प्र2 मध्य प्रणव° (→मध्यम प्राण°), का1 ब1 दे2 °सम्बोध, ते1 °सशोध (→°संरोध) -d) का1 दे3 षड्विंशत् (→षट्त्रिंशत्), ब2 3 दे3 मुर्वे मुए मुब मात्रिकोत्तक (दे3 °म), ते1 मात्रविंशम, द1 प्र2 मात्रकोत्तम (→मात्रिकोत्तम)

अतः पर दे1 अधिकम्—सगर्भोऽगर्भ एव च । (= ३१d)

३३ -a) दे1 8 मुर्वे मुए य, दे9 प्र + र (→प्र), दे4 °कम्पनोत्थान, दे8 °कम्पनोत्थान, प्र2 °कम्पोत्थान म1 °कम्पोत्थान, मुर्वे मुए °कम्पनोच्छ्वास (→°कम्पनोत्थान) -b) दे1 ज • मत्व, दे6 -जनकत्वे, प्र2 -जनकत्वा, मुर्वे मुए -जनकत्व (→-जनकत्व) -c) का1 मदमध्यमसुख्यान, दे1 8 मुर्वे मुए मधामदश्च (दे1 °श्च) मनुष्याणा, प्र2 मद मध्यम मुख्यानां -d) ब1 आनन्दादुत्तमोमत, दे1 आनन्दाच्चो •• मोत्तम, उ1 आनन्दा उत्तमोत्तम, दे4 8 ते1 द1 उ1 आन दाच्चोत्तमोत्तम, न1 आनदात्मोत्तमोत्तम, प्र2 आनन्द मोत्तमोत्तम, म1 आनन्दादुत्तमोत्तम

३४ -a) दे1 गुरुकाश्चेहितयोग, दे6 9 मुर्वे मुए गुरुकाश्च हितं योग -b) का1 दे2 3 5 8 अगर्भ विजय बुध, ब1 दे1 8 मुर्वे मुए गगर्भविजयबुधा, दे4 मगर्भवजपबुध, दे9 सगर्भमजप बुधा -c) ब3 हि (→वै), दे1 8 9 मुर्वे मुए मुब प्राहु (→उक्त)

३५ -a) का1 सव्याहृति, दे2 सव्याहृति, म1 उ1 सव्याहृतीं (→सव्याहृति); दे5 सप्रणवा (→सप्रणवां) -c) का1 त्रिजपेत, म1 त्रि पठेत् (→त्रिर्जपेत्), ब1 मायतप्राण, ब3 दे8 मायत प्राण, दे1 म1 ते1 उ1 मायत प्राण, दे1

वे.२.२३.७८ दाहः कार्यो यथान्यायं सपिण्डैः श्रद्धयाऽन्वितैः ॥७८
सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।
दशाहं बान्धवैः सार्धं सर्वे चैवार्द्रवाससः ॥७९
पिण्डं प्रतिदिनं दद्युः सायं प्रातर्यथाविधि ।
प्रेताय च गृहद्वारि चतुर्थे भोजयेद् द्विजान् ॥८०
द्वितीयेऽहनि कर्तव्यं क्षुरकर्म सबान्धवैः ।
चतुर्थे बान्धवैः सर्वैरस्थ्नां सञ्चयनं भवेत् ।
पूर्वं तु भोजयेद् विप्रानयुग्मान् श्रद्धया शुचीन् ॥८१
पञ्चमे नवमे चैव तथैवैकादशेऽहनि ।
अयुग्मान् भोजयेद् विप्रान् नवश्राद्धं तु तद्विदुः ॥८२
एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः ।
द्वादशे वाऽथ कर्तव्यमनिन्द्ये त्वथवाऽहनि ।
एकं पवित्रमेकोऽर्घ्यः पिण्डपात्रं तथैव च ॥८३
एवं मृताह्नि कर्तव्यं प्रतिमासं तु वत्सरम् ।
सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः ॥८४
कुर्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमाः ।
प्रेतार्थं पितृपात्रेषु पात्रमासेचयेत् ततः ॥८५
ये समाना इति द्वाभ्यां पिण्डानप्येवमेव हि ।
सपिण्डीकरणं श्राद्धं देवपूर्वं विधीयते ॥८६
पितॄनावाहयेत् तत्र पुनः प्रेतं च निर्दिशेत् ।
ये सपिण्डीकृताः प्रेता न तेषां स्यात् पृथक्क्रियाः ।
यस्तु कुर्यात् पृथक् पिण्डं पितृहा सोऽभिजायते ॥८७

---

(→पलाशांस्तु) –b) दे$_{10}$ प्रतिकृत (→प्रतिकृतिं), दे$_{3}$ कृत्वाथ विप्रकृतिं पुन –c) वे$_{1}$ ग्र$_{2}$ उ$_{1}$ दाह कार्यं, म$_{1}$ देह कार्यं (→दाह कार्यो) –d) उ$_{1}$ °यान्वित (→°यान्वितैः), ते$_{1}$ सपिण्डैः श्रद्धयान्वित .

७९ व$_{1}$ ⊙, दे$_{4}$ ab O –a) का$_{1}$ प्रसिञ्चन्त्यु दे$_{1\ 8-10}$ मुवें मुए मुब प्रसिञ्चेदु- (→प्रसिञ्च न्त्यु-), वे$_{1}$ उ$_{1}$ सकृत्प्रसिञ्चन्नुदक –b) का$_{1}$ ब$_{2\ 3}$ दे$_{1\ 8\ 9\ 10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें मुए मुब वाग्यत (→वाग्यता) –c) ब$_{2\ 3}$ दे$_{1\ 8\ 10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें मुए मुब बान्धवा, दे$_{4}$ ते$_{1}$ ब्राह्मणा (→बान्धवैः), का$_{1}$ दे$_{1\ 4\ 8\ 10}$ मुवें मुए मुब श्राद्ध (→सार्धं), दे$_{3}$ दशाहं वायवा ना (हृं) दं –d) दे$_{1\ 8\ 10}$ मुवें मुए सर्वे चैव मुरायता , ग्र$_{2}$ सर्वे **** सस

८० व$_{1}$ O –a) म$_{1}$ उ$_{1}$ दद्यात् (→दद्युः) –b) ब$_{3}$ दे$_{1\ 2\ 8\ 10}$ उ$_{1}$ °विधि (→°विधि) –c) ब$_{2}$ दे$_{3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ तु (→च), ते$_{1}$ प्रेतायाश्चह चापि –d) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ चतुरो (→चतुर्थे)

८१ ब$_{1}$O –b) का$_{1}$ दे$_{2}$ प्रेत , ग्र$_{2}$ क्षौर (→क्षुर-), का$_{1}$ ब$_{3}$ दे$_{2\ 3}$ सु-, दे$_{8}$ न$_{1}$ स्व , उ$_{1}$ स (→स ) उ$_{1}$ सार्धं (→सर्वैर), दे$_{3}$ सर्वैरस्थ्ना सञ्चयन, द$_{1}$ सर्वैरार्थानि सञ्चयते, ग्र$_{2}$ सर्वैरस्थीनि सञ्चयते, म$_{1}$ सर्वे स्थान सञ्चयने –d) का$_{1}$ अस्थ्न , व$_{1}$ दे$_{10}$ वे$_{1}$ अस्थि (→अस्थ्नां), उ$_{1}$ तथा (→भवेत्), द$_{1}$ ग्र$_{2}$ म$_{1}$ ज्ञातिरेव भवेत्तथा –e) दे$_{1\ 8\ 10}$ मुवें मुए मुब पूर्वां प्रयुञ्जेद्विप्रान् –f) का$_{1}$ ब$_{2\ 3}$ दे$_{1\ 8\ 10}$ मुवें मुए मुब युग्मान् मुश्रद्धया सुचीन्, दे$_{4}$ युग्मान् सुश्रद्धया सुधी

उ$_{1}$ पुस्तके d चरणानन्तरमधिकम्—

४४ * सर्वैरस्थीनि सञ्चयते ज्ञातिरेव भवेत्तथा ।

८२ व$_{1}$ O –b) का$_{1}$ ते$_{1}$ तथा चै° (→तथैवै°) –c) दे$_{1\ 3\ 4\ 8-10}$ मुवें मुए मुब युग्माश्च (→अयुग्मान्) –d) दे$_{1\ 8\ 10}$ मुवें मुए मुब तद् द्विजा, दे$_{8}$ तत्त्वविद् (→तद् विदु)

८३ व$_{1}$ O, दे$_{1}$ ef O –c) का$_{1}$ चाथ, वे$_{1\ 8\ 10}$ मुवें मुए मुब वाह्नि, दे$_{3}$ उ$_{1}$ (न)हनि, दे$_{4}$ नाथ (→वाथ), वे$_{1}$ द्वादशेनाथ कर्तव्य –d) दे$_{1}$ प्रतिमासं तु वत्सर, दे$_{10}$ मुवें मुए मुब नवमेऽप्यथवाहनि –e) ते$_{1}$ द$_{1}$ उ$_{1}$ एकादर्श (→एकोऽर्घ्यं) –f) दे$_{8\ 9}$ °पात, उ$_{1}$ ते$_{1}$ ग्र$_{2}$ °मात्र (→°पात्र)

८४ व$_{1}$ O, दे$_{1}$ ab O –a) दे$_{3\ 4}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मृतेह्नि (→मृताह्नि) –c) ब$_{2}$ कार्यं, बे$_{3}$ श्राद्ध (→प्रोक्तं) –d) ब$_{3}$ संवत्सरेऽपि वा (→संवत्सरे पुन )

८५ व$_{1}$ O –b) व$_{1}$ व$_{1}$ ग्र$_{2}$ द्विजोत्तम (→द्विजोत्तमा) –c) का$_{1}$ दे$_{1}$ मुवें मुए प्रेतार्थं, ब$_{2}$ ते$_{1}$ उ$_{1}$ प्रेतार्घ्यं (ब$_{2}$ ग्र$_{2}$ °र्घं), दे$_{8}$ प्रेतार्था द$_{1}$ प्रेतास्य, मुब प्रेतान्न (→प्रेतार्थं) –d) दे$_{10}$ मासे मासे प्रयत्नत

८६ व$_{1}$ O –b) वे$_{1}$ पिण्डाना चैवमेव हि –d) दे$_{3\ 4}$ उ$_{1}$ दैव° (→देव°)

८७ व$_{1}$ O –b) दे$_{1\ 9}$ मुवें मुए मुब दि, दे$_{8}$ न (→च) –d) का$_{1}$ च (→स्यात्), दे$_{1\ 8-10}$ मुवें मुए न तेषां स्यु प्रतिक्रिया-, ते$_{1}$ एतेषा स्यात् पृथक् तथा –e) दे$_{4}$ श्राद्ध (→पिण्ड) –f) दे$_{4}$ पितृघ्न (→पितृहा), ग्र$_{2}$ म$_{1}$ स्त्वमि (→सोऽभि)

मृते पितरि वै पुत्रः पिण्डमब्दं समाचरेत् ।
दद्याच्चान्नं सोदकुम्भं प्रत्यहं प्रेतधर्मतः ॥८८
पार्वणेन विधानेन सांवत्सरिकमिष्यते ।
प्रतिसंवत्सरं कार्यं विधिरेष सनातनः ॥८९
मातापित्रोः सुतैः कार्यं पिण्डदानादिकं च यत् ।
पत्नी कुर्यात् सुताभावे पत्न्यभावे सहोदरः ॥९०
अनेनैव विधानेन जीवन् वा श्राद्धमाचरेत् ।
कृत्वा दानादिकं सर्वं श्रद्धायुक्तः समाहितः ॥९१
एष वः कथितः सम्यग् गृहस्थानां क्रियाविधिः ।
स्त्रीणां तु भर्तृशुश्रूषा धर्मो नान्य इहेष्यते ॥९२
स्वधर्मपरमो नित्यमीश्वरार्पितमानसः ।
प्राप्नोति तत् परं स्थानं यदुक्तं वेदवादिभिः ॥९३ वं.२.२३.८७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे त्रयोविंशोऽध्याय ॥२३॥

---

८८ व1 ⊙ -b) दे3 समारभेत् (→समाचरेत्), दे1 मुवं मुए पिण्डानब्द समावसेत्, दे4 पिण्डमन्न समर्पयत्, दे8-10 पिण्डमब्द समाविशेत्, न1 उ1 पिण्डमर्घं समापयेत् द1 प्र2 म1 पिण्डशब्द (द1 °ब्द) समाविशेत् -c) का1 व2 दे2 6 म1 दद्यादन्न (→दद्याच्चान्न), ते1 चोद° (→सोद°) -d) प2 दे3 4 प्रेत्य, द1 श्रत° (→प्रेत°)

८९ व1 ab ○ -a) ते1 पार्वणेन विधानेन, +पार्वणेन विधाना ते -c) दे4 पितृ (→प्रति-), व2 3 दे2 6 °सवत्सरे, दे10 °सावत्सरिक (→°संवत्सर), दे1 8 10 मुवं मुए मुव कुर्याद् (→कार्यं). -d) व3 दे1 6 9 उ1 विधिरेष, दे3 विधिनेष (→विधिरेष)

९० -b) का1 व2 3 दे3 6 पुन (→च यत्) दे3 द1 प्र3 म1 उ1 पिण्डदानादि (द1 °नि) कि (प्र2 म1 कं) च न -d) व1 दे1 4 8-10 द1 प्र2 म1 उ1 मुवं मुए मुव तु सोदर (→सहोदर)

९१ दे1 3 4 8 10 द1 प्र2 म1 उ1 ○ -b) मुवं मुए मुव जीवश्राद्ध समाचरेत् -c) का1 द1 दे2 6 न1 ते1 दाहादिक, व2 दशाहिक, व3 वधा(हा)दिक (→दानादिक), ते1 सर्वं, +कर्म (→सर्वं) -d) व3 श्राद्ध°, ते1 श्राद्ध°,+ यद्धा° (→श्रद्धा°)

९२ -b) द1 प्र2 म1 उ1 यथाविधि (→क्रियाविधि) -c) दे1 8 9 मुवं मुए भर्तृंषु दे10 तु भर्तृषु (→तु भर्तृ-) -d) व1 3 दे10 मुवं. इहोच्यते (→इहेष्यते), ते1 धर्मो नान्यदिहेष्यते

९३ -a) दे1 8 10 मुवं मुए मुव -परमा, दे3 न1 ते1 -परमा (→-परमो), व1 द1 स्वधर्मोपरतो नित्य, द1 प्र2 उ1 य स्वधर्मपरो नित्य -b) दे1 3 8-10 न1 ते1 मुवं मुए मुव °मानसा, म1 °चेतन (→°मानस) -c) व2 द1 प्र2 म1 उ1 प्राप्नोति परम स्थान दे1 3 4 10 ते1 मुवं, मुए मुव प्राप्नुवन्ति पर स्थान

पुष्पिका—

पुराणनाम—का1 इति श्रीकौर्मपुराणे उपरिभागे, व1 इति कौर्मे उपरिभागे, व2 इति कूर्मपुराणे, व3 दे2 इति कू (दे2 कौ) र्मपुराणे उपरिभागे दे1 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, दे3 इति श्रीकूर्मपुराणे व्यासगीतासु, दे4 6 द1 इति श्रीकूर्मपुराणे, दे8 10 ते1 उ1 इति श्रीकूर्मपुराणे उपरि (उ1 उत्तर) भागे व्यासगीतासु न1 इति श्रीकौर्मे, प्र2 म1 इति श्रीकूर्मपुराणे उपरि (म1 उत्तर) भागे व्यासगीतासूपनिषत्सु, मुवं इति श्रीकूर्मपुराणे उत्तरार्धे व्यासगीतासु, मुए इति श्रीकूर्मपुराणे उपविभागे व्यासगीतासु, मुव इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्याया अध्यायनाम—का1 व1 3 दे2-4 6 न1 ते1 म1 ○, दे1 8-10 मुवं मुए श्राद्धकल्पे, द1 अशौचप्रकरण नाम, प्र2 आशौचप्रकरणे, उ1 शौचप्रकरणे, मुव अशौचविधिर्नाम अध्यायसंख्या—व2 दे8 ○, का1 द्वाविंशोऽध्याय ॥२२॥, व1 3 दे2 ते1 द्वाविंशोऽध्याय, दे1 त्रयोविंशतितमोऽध्याय ॥२३॥, दे3 8 10 त्रयोविंशतितमोऽध्यायः, दे4 द1 प्र2 म1 उ1 मुए त्रयोविंशोऽध्याय, न1 त्रिसप्ततितमोऽध्याय, मुवं मुव त्रयोविंशोऽध्याय ॥२३॥

# २४

व्यास उवाच ।*

वं.२.२४१ अग्निहोत्रं तु जुहुयादाद्यन्तेऽहर्निशोः सदा ।
दर्शेन चैव पक्षान्ते पौर्णमासेन चैव हि ॥१

शस्यान्ते नवशस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः ।
पशुना त्वयनस्यान्ते समान्ते सौमिकैर्मखैः ॥२

नानिष्ट्वा नवसस्येष्ट्या पशुना वाऽग्निमान् द्विजः ।
नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥३

नवेनान्नेन चानिष्ट्वा पशुहव्येन चाग्नयः ।
प्राणानेवात्तुमिच्छन्ति नवान्नामिषगृद्धिनः ॥४

सावित्रान् शान्तिहोमांश्च कुर्यात् पर्वसु नित्यशः ।
पितॄंश्चैवाष्टकास्वर्च्चेन् नित्यमन्वष्टकासु च ॥५

---

## २४

* व1 सूत उवाच, दे9 व्यास उ., दे10 श्रीवेदव्यास उवाच, न1 वे1 ग्र3 उ1 व्यास, द1 म1 श्रीव्यास

१. न1 1d-2a ○ –a) व2 च, दे1 * (→तु), दे3 अग्निहोत्र द्विजो नित्य –b) व1 न1 आद्यन्ते धुतिशो सदा, दे1 8-10 मुवे मुए मुव साय प्रातर्यथाविधि(दे1 10 °धि), दे3 जुहुयादध्वरै सदा, ते1 द1 म1 व1 आदित्येऽभ्युदिते सदा, ग्र2 आदित्ये उदिते सति –c) व1 दर्शने (→दर्शेन), दे5 चार्ध- (→चैव), दे3 मासाते (→तस्यान्ते), दे1 8 10 मुवे मुए. दर्शे चैव हि तस्यान्ते, न1 *** व हि तस्यान्ते, ते1 दर्शे चैव तु पक्षान्ते, द1 दर्शे चैव हि सस्यान्ते, ग्र2 उ1 दर्शे नैव हि सन्ध्यान्ते, म1 दर्शेनैव हि सस्यान्ते –d) दे1 8-10 व1 म1 उ1 मुवे मुए नव सस्ये तथैव च, ग्र2 न च सव्ये तथैव च

अत पर ते1 पुस्तके अधिकम्—

45 * दर्शे नैव हि सस्यान्ते नव सस्ये तथैव च ।
सम्यग्विधानमिष्ट्वा च दीयते च द्विजोत्तमैः ।

२. ते1 ab ⊙, दे3 cd ○, न1 a ⊙ –a) दे6 सस्यान्ते (→शस्यान्ते), का1 °सस्ये स्यात्, व1 °शस्येष्ट्य, व2 °सस्ये *, दे2 3 °सस्यष्टा (→°शस्येष्ट्या), दे1 9 इष्ट्वा चैव यथा न्याय, दे8 10 मुवे मुए इष्ट्वा चैव य(दि10 °न) थान्याय, द1 ग्र2 म1 उ1 सम्यग् विधानमिष्ट्वा तु (ग्र3 °ष्ट्व, म1 तु, उ1 °ना) –b) का1 दे1 8 9 मुवे मुए ऋत्वन्ते च, व1 तदर्द्धन्ते, व3 अयस्त्वन्ते, दे2 ऋत्वते (ध्या)स, दे6 तथोर्द्धन्ते, दे10 करव दाचे, म1 अयनन्ते, द1 ग्र2 उ1 ऋत्वन्ते वै, म1 ऋत्वन्त वै (→थर्त्वन्ते), का1 व1 दे3 द्विजोत्तमै, म1 द्विजाध्वरै (→द्वि-जोऽध्वरै) –c) व3 पशूना, दे2 न1 पशुनाम् (दे2 °न) उ1 पशूना (→पशुना), दे3 त्वय° (→त्वय°), ग्र2 पशुनात्वयनस्साथें

–d) का1 समाप्ते, दे1 8 9 समते, दे10 समन्ते, द1 ग्र2 म1 उ1 सोमान्ते (→समान्ते), वे1 सौमिकैर्, दे8 मुवे मुए. सोऽग्निकैर्, दे10 शौनकैर्, ते1 कामिकैर्, द1 सोमकैर्, म1 मुव सोमिकैर्, उ1 शौमिकैर् (→सौमिकैर्), द1 मुखैः (→मखै)

३. दे3 ab ⊙ –a) का1 नानिष्टा, व2 * * *, दे10 न नाष्ट्वा, न1 ना इष्ट्वा, ग्र2 नानिष्ट्व (→नानिष्ट्वा), का1 दे1 °सस्येष्ट्य (दे1 °ष्टा), दे6 उ1 °सस्येष्टा (उ1 °पा), मुए मुव °शस्येष्ट्वा (→°सस्येष्ट्या), ते1 अग्नि दृष्ट्वा घने स्पृष्ट्वा –b) म1 ते1 पशूना (→पशुना), का1 व2 ते1 चाग्निमान्, न1 आग्निवान् (→वाग्निमान्), व1 द्विजान्, दे6 ते1 व2 द्विजा (→द्विज) –c) व2 3 दे1-3 6 8-10 मुवे मुए मुव न चाद्यम, ते1 स वान्न(→म वान्न), मुवे अद्यन्(?) (→अद्यान्), ग्र2 मांसा (→मांस), दे3 च (→वा) –d) व1 वे1 न1 जिजीविषु (→जिजीविषु)

४. –a) दे9 न (श)वेतान्नेन, द1 उ1 न नेनान्नेन (उ1 *), ग्र2 नवानान्नेन (→नवेनान्नेन), का1 वानिष्ट्वा, व1 दे1 6 8-10 न1 ते1 ग्र3 मुवे मुए मुव चानिष्ट्वा, व2 3 वानिष्टा, दे2 चानिष्टा, द1 म1 वानिष्ट्वा (→चानिष्ट्वा) –b) ते1 पशु (→पशु), वे3 -यागेन, ते1 हव्यैव (→हव्येन), दे10 चाग्नये, न1 चाग्नय, द1 ग्र2 म1 उ1 साग्नय (→चाग्नय) –c) का1 प्राणानेवात, दे1 न1 ते1 द1 प्राणानेवातु (ते1 °न), म1 प्राणिनो * तु, उ1 प्राणान्नेवातु (→प्राणानेवात्तु) –d) ग्र3 आमिष- (→आमिष-), वे6 °गृद्धिना (→°गृद्धिन), ते1 नरान् आमिष गृद्धिन, द1 न1 चान्नामिषगर्धिन

५. दे3 ab ○ –a) का1 साविञ्यान्, व2 सावित्रीन्, दे2 साविञ्यान् दे8-10 सवित्रान्, द1 ग्र2 म1 सावित्र, उ1 सावित्री- (→सावित्रान्), व1 सावित्रीश्चान्तिहोमांश्च, ते1 सावित्रीशान्तिहोमश्च –b) व2 पर्वणि (→पर्वसु), दे10 निश्चय

धर्मः परो ... वच्यते ।
यामिह दर्शितो गृहस्थाश्रमवासिनाम् ॥६
त्वयादम्यवानम्याद् योऽग्नीन् नाधातुमिच्छति ।
त या न यजेन म याति नरकान् बहून् ॥७
मेत्रमन्धतामिस्र महारौरवरौरवौ ।
भीपाकं वैतरणीमसिपत्रवनं तथा ॥८
यांश्च नरकान् घोरान् संप्राप्नोति सुदुर्मतिः ।
त्यजातां कुले विप्रः शूद्रयोनौ च जायते ॥९
स्मात् सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः ।
आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् ॥१०
अग्निहोत्रात् परो धर्मो द्विजानां नेह विद्यते ।
तस्मादाराधयेन्नित्यमग्निहोत्रेण शाश्वतम् ॥११
यश्चाधायाग्निमालस्यान्न यष्टुं देवमिच्छति ।
सोऽसौ मूढो न संभाष्यः किं पुनर्नास्तिको जनः ॥१२
यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं चापि विद्येत स सोमं पातुमर्हति ॥१३
एष वै ... सोमः प्रथम इष्यते ।
... ... ... ॥१४ वै.२.२४.१४

कं.१.२४।१३ न सोमयागादधिको महेशाराधने क्रतुः ।
समो वा विद्यते तस्मात् सोमेनाभ्यर्चयेत् परम् ॥१५
पितामहेन विप्राणामादावभिहितः शुभः ।
धर्मो विमुक्तये साक्षाच्छ्रौतः स्मार्त्तो द्विधा पुनः ॥१६
श्रौतस्त्रेताग्निसंबन्धात् स्मार्त्तः पूर्वं मयोदितः ।
श्रेयस्करतमः श्रौतस्तस्माच्छ्रौतं समाचरेत् ॥१७
उभावभिहितौ धर्मौ वेदादेव विनिःसृतौ ।
शिष्टाचारस्तृतीयः स्याच्छ्रुतिस्मृत्योरलाभतः ॥१८
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणाः प्रोक्ता नित्यमात्मगुणान्विताः ॥१९
तेषामभिमतो यः स्याच्चेतसा नित्यमेव हि ।
स धर्मः कथितः सद्भिर्नान्येषामिति धारणा ॥२०
पुराणं धर्मशास्त्रं च वेदानामुपबृंहणम् ।
एकस्माद् ब्रह्मविज्ञानं धर्मज्ञानं तथैकतः ॥२१
धर्मं जिज्ञासमानानां तत्प्रमाणतरं स्मृतम् ।
धर्मशास्त्रं पुराणं तद् ब्रह्मज्ञाने परा प्रमा ॥२२

---

१५ दे1 3 8 10 द1 प्र2 म1 उ1 मुए ○ –a) दे3 °योगाद (→°यागाद) –b) न1 क्रतु (→क्रतु), मुवें महेश्वराधनात्तत –c) व1 सोमो वा, मुवें न सोमो (→समो वा), ते1 यस्मात् (→तस्मात्) –d) ब3 यगेना°, न1 सोमेना°, ते1 सम्यग° (→सोमेना°)

१६ व1 १६a-२०d ○ –a) द1 प्र2 पितामह नु, म1 पितामहान (→पितामहेन), दे10 विप्रेणा (→विप्राणा) –b) न1 शुभा (→शुभ), का1 मादौ हि विहित शुभ, दे1 8 10 मुवें मुए श्रादाय विहित पशु, दे3 तदा च विहित पशु, वे1 विवादरहित पशु, द1 मायया ते हित पशु, प्र2 उ1 पूज्य एव सदा(उ1 *)गति, म1 ग्रादावते हित पशु –d) दे6 10 ते1 द1 प्र2 म1 उ1 श्रौत- (→श्रौत), दे1 8 10 न1 मुवें मुए भवेत् पुन (→द्विधा पुन)

१७ म1 ○ –a) व2 3 दे2.6 °सम्बन्ध, न1 उ1 °सबन्ध, द1 °सबधा (→°सम्बन्धात्) –b) दे10 तस्मात् न1 उ1 स्मातं (→स्मार्तं), का1 दे6 प्र2 पूर्व (→पूर्वं), दे6 उ1 मयोदित (→मयोदित) –c) का1 प्र2 म1 तम (→तम), न1 व1 प्र2 श्रौत (→श्रौतस), दे1 ****** श्रौतस्, दे3 श्रेयस्करो भवेच्छ्रौतस्, ते1 श्रयस्करमत श्रौत –d) व1 पौत (→श्रौत).

१८ व1 ○ –a) व2 3 दे1 3 8-10 ते1 मुवें मुए मुव अपि (→अभि), दे10 हितो, म1 हित (→हितौ), दे6 उभावविहितो धम्मौ –b) दे1 8 9 म1 मुवें मुए वेद वेद, दे3 वेदस्मृति-, दे10 वेददेव, म1 वेदावेद (→वेदादेव-), दे2 विनिसृतो, दे3 -प्रमाणको, ते1 विनिस्सृतौ, म1 विनिश्रुतौ (→विनि सृतौ) –c) का1 शिष्टचार- (→शिष्टाचारस्), ते1 शिष्टाचार मुतो यस्मात् –d) दे1 8 10 ते1 मुव मुए ममावत. (→भलाभत)

१९. व1 ○ –a) दे1 3 8 9 व1 प्र2 म1 उ1 मुवें. मुए मुव गर्मेणाधि-, ते1 धर्म धाधि- (→धर्मेणाभि-), दे10 -गतो, म1 कृते (→गतो), वे3 ते1 यत्तु (→यैस्तु). –b) उ1 °वृहण (→°बृंहण), म1 वेदत परिबृंहणम् –c) दे10 न (→ते) दे3 मृष्टा न1 शिष्ट (→शिष्टा), दे1 2 6 9 10 ते1 द1 प्र2 म1 मुए मुव ब्राह्मणा उ1 ब्रह्मणा (→ब्राह्मणा), व2 3 दे2 6 प्रोक्ता, दे1 3 8 10 द1 प्र2 म1 उ1 मुए मुव -ज्ञेया, न1 प्रोक्त, ते1 -ज्ञेया (→प्रोक्ता) –d) द1 नित्यमाना, प्र2 नीयमाना (→नित्यमात्म-)

२० व1 दे1 3 8-10 द1 प्र2 म1 उ1 ○ –a) ते1 अधि°,+अभि° (→अभि°), व2 °हितो (→°मतो), दे6 यस्या, न1 ते1 यस्मात् (→य स्यात्). –b) न1 चेतसो (→चेतसा) –c) व3 धर्म (→धर्मं) –d) दे6 धारणा (→धारणा)

२१ –a) व3 दे3 द1 उ1 पुराण- (→पुराण), व1 सर्व-, दे9 धर्मं (→धर्म-), दे1 3 8-10 ते1 द1 प्र2 मुवें मुए मुव °शास्त्राणि, म1 °शास्त्राणि (→°शास्त्रं च) –c) दे3 एकतो, न1 एतस्मात् (→एकस्मात्) –d) ते1 कर्म° (→धर्म°) दे1 8 10 [ए]व च (→[ए]कत), उ1 धर्मविज्ञान-मेव च

२२ –a) का1 धर्मजिज्ञा-, व1 धर्मज्ञान, उ1 धर्मविज्ञा- (→धर्म जिज्ञा-), दे10 धर्मज्ञानसमासानां –b) का1 दे2 ते1 प्रमाणा व2 द1 प्र2 म1 प्रमाण (→प्रमाण-), न2 द1 प्र2 म1 उ1 पर (→तर) –c) प्र2 दे6 °शास्त्र (→°शास्त्रं), व3 पुराणन्तु दे1 3 8 10 ते1 द1 प्र2 म1 उ1 पुराणानि, दे6 प्रमाण तु (→पुराण तद्) –d) दे3 द1 धर्मे° (→ब्रह्म°), व1 दे0 मुव. °ज्ञान-, न1 °ज्ञानो (→°ज्ञाने), व1 परा परा, व3 परा श्रमा, दे1 8 10 मुवें मुए -परा प्रमम, दे2 परो प्रमा, दे3 स्वयं स्मृता, दे0 परा पुमान्, न1 परो मत, द1 परा प्रमा, प्र2 वर प्रभा, मुव. परायणा (→परा प्रमा), म1 श्रोतस्मार्त्त यथा प्रमा

नान्यतो जायते धर्मो ब्रह्मविद्या च वैदिकी । तस्माद् धर्मं पुराणं च श्रद्धातव्यं द्विजातिभिः ॥२३

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे चतुर्विंशोऽध्यायः ॥२४॥

# २५

व्यास उवाच ।❀

एष वोऽभिहितः कृत्स्नो गृहस्थाश्रमवासिनः ।
द्विजातेः परमो धर्मो वर्त्तनानि निबोधत ॥१

द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः ।
अध्यापनं याजनं च पूर्वस्याहुः प्रतिग्रहम् ।

कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम् ॥२

कृषेरभावाद् वाणिज्यं तदभावात् कुसीदकम् ।
आपत्कल्पो ह्ययं ज्ञेयः पूर्वोक्तो मुख्य इष्यते ॥३ वे २.२५.३

२३ –a) दे3 10 नान्यते, दे8 ते1 नान्यत्र, उ1 नान्यथो (→नान्यतो), दे3 म1 ज1 जायते, दे10 न1 जायतो, द1 ब2 ज्ञानतो (→जायते) –b) मुवें, मुए ब्राह्मी° (→ब्रह्म°), दे8 °विद्यश्च (→°विद्या च), व1 वैदिक (→वैदिकी) –c) द1 प्र2 म1 उ1 तथा (→तस्माद्), ब1 2 दे3 न1 द1 उ1 धर्म-, ब3 दे6 म1 धर्मं (→धर्मं) –d) दे1 3 8 10 न1 ते1 द1 प्र2 उ1 मुवें मुए मुव मनीषिभि (→द्विजातिभि).

पुष्पिका—

पुराणनाम—का1 दे8 इति श्रीकू(का1 कौ)र्मपुराणे उपरि-भागे, ब1 इति कौर्मे उपरिभागे, ब2 दे3 इति कूर्मपुराणे ब3 दे2 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, दे1 8 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, दे1 10 ते1 द1 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, ग1 इति श्रीकौर्मे, प्र2 म1 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीता सूपनिषत्सु, उ1 श्री इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुए इति श्री कूर्मपुराणे उपरिविभागे व्यासगीतासु, मुव इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां अध्यायनाम—का1 ब1-3 दे1 3 6 8 10 न1 ते1 द1 प्र2 ग1 उ1 मुए ⊙, मुवें द्विजातीनामग्निहो-त्रादिकर्मनिरूपणं नाम, मुव अग्निहोत्रादिनियमो नाम अध्यायसंख्या—ब2 दे8 ⊙, का1 त्रयोविंशोऽध्याय ॥२३॥, ब1 3 दे2 ते1 त्रयोविंशोऽध्याय, दे1 मुवें. मुव चतुर्विंशोऽध्याय ॥२४॥, दे3 6-10 द1 प्र2 म1 उ1 मुए चतुर्विंशोऽध्याय, न1 चतुःसप्ततितमोऽध्याय

२५

❀ दे3 ⊙, दे3 व्यास उ.; न1 ते1 प्र2 उ1 व्यास; द1 म1 श्रीव्यास.

१ –a) ब1 एष वो विहित, दे2 एष वो जाति मत, दे3 *** भिहित, दे10 एष वोऽभिहृत (→एष वोऽभिहित), न1 एष वेदवन कृत्स्नो –b) म1 °वासिना (→°वासिन). –c) ब1 दे4 द्विजाते, दे10 द्विजातो (→द्विजाते), ब1 परतो (→परमो) –d) का1 ब1 प्र2 म1 वर्त्तमान ब2 वर्तते त, दे3 6 द1 उ1 वर्तमानान् दे10 वर्त्तमाना, म1 वक्ष्यमाणा (→वर्त्तनानि), का1 निबोधतम् ब1 दे2 4 निबोधत (→निबोधत)

२ –a) दे4 त्रिविधश्च, ते1 द्विविधश्च (→द्विविधस्तु), उ1 गृहे (→गृही), दे4 9 ज्ञेया (→ज्ञेय) –c) दे1 ध्यापन (→अध्यापन) –d) उ1 प्रतिग्रह (→प्रतिग्रहम्) –e) का1 दे2 कुशीद, ब3 कुशीद, दे4 प्रसीद, म1 कुमीद (→कुसीद), ते1 -वृत्तिर् (→कृषि-) –f) का1 ब1-3 दे4 द1 प्र2 म1 उ1 प्रकुर्वीत, दे1 मुवें मुए. प्रकुर्वन्त दे3 प्रहर्षेत, दे8-10 प्रकुर्वन्ता, ते1 प्रकुर्वीतान् (→प्रकुर्वीता), ते1 वय कृत, उ1 -स्वय कृपेत् (→स्वयंकृतम्)

३ –a) ब2 दे1 3 4 8-10 द1 प्र2 म1 उ1 मुवें, मुए, मुव कृषेरभावे, ते1 कृषेरभावा (→कृषेरभावाद्), दे6 वा णिज्यं (→वाणिज्य) –b) ब2 दे1 3 6 9 म1 मुवें मुए. मुव. तदभावे, दे6 10 तदभावा (→तदभावात्), का1 ब3 दे1 2 6 10 कुसीदकम्, ब1 कुसीदक (→कुसीदकम्), ते1 तद्भावात्कु-सीदकम् –c) ब1 आपत्काले स्मृत दे1 8 10 प्र2 म1 उ1 मुवें, मुए मुव. आपत्कल्पस्त्वयं (दे10 °न-), दे3 4 द1 आपत्कल्पस्त्व (द1 °स्त्व°)यं, न1 आत्र कल्पस्त्वयं, ते1 आपत्कल्प स्वयं (→आपत्कल्पो ह्ययं), म1 ज्ञेयो, द1 ज्ञेयं (→ज्ञेय) –d) ब2 दे3 उच्यते (→इष्यते), म1 पूर्वो मुख्य इहेष्यते,

वें.२ २५ ४ स्वयं वा कर्षणं कुर्याद् वाणिज्यं वा कुसीदकम् ।
कष्टा पापीयसी वृत्तिः कुसीद तद् विवर्जयेत् ॥४
क्षात्रवृत्तिं परां प्राहुर्न स्वयं कर्षणं द्विजैः ।
तस्मात् क्षात्रेण वर्त्तेत वर्त्तनेनापदि द्विजः ॥५
तेन चावाप्यजीवंस्तु वैश्यवृत्तिं कृषिं व्रजेत् ।
न कथचन कुर्वीत ब्राह्मणः कर्म कर्षणम् ॥६
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत् ।
ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥७
देवेभ्यश्च पितृभ्यश्च दद्याद् भागं तु विंशकम् ।
त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्वन् न दुष्यति ॥८
वणिक् प्रदद्याद् द्विगुणं कुसीदी त्रिगुणं पुनः ।
कृषीवलो न दोषेण युज्यते नात्र संशयः ॥९
शिलोञ्छं वाप्याददीत गृहस्थः साधकः पुनः ।
विद्याशिल्पादयस्त्वन्ये बहवो वृत्तिहेतवः ॥१०
असाधकस्तु यः प्रोक्तो गृहस्थाश्रमसंस्थितः ।
शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः ॥११
अमृतेनाथवाजीवेन्मृतेनाप्यथवा यदि ।
अयाचितं स्यादमृतं मृतं भैक्षं तु याचितम् ॥१२

---

४ –a) दे10 स्वय वा, न1 न स्वय (→स्वयं वा), दे3 कार्यं (→कुर्याद्) –b) तै1 च (→वा), का1 व2 कुशीदकम् (→कुसीदकम्) –c) व3 वृद्धि (→वृत्ति) –d) का1 कुशीद तद्, व1 न1 म1 मुए कुसीदन्त, दे1 6 10 कुसीद ता, दे3 4 कुसीद वा, तै1 कुसीद तु (→कुसीद तद्)

५ व1 २५ अध्यायस्य ५ a– आरभ्य २६ अध्यायस्य १२ d यावन्नास्ति –a) का1 व2 3 दे2 6 क्षत्रवृत्ति, म1 क्षात्रवृत्ति (→क्षात्रवृत्तिं), दे1 न1 पर प्राहुर्, दे3 परां प्राप्य, द1 म1 उ1 परामाहु, प्र2 पर माहुर्(?) (→परां प्राहुर्) –b) दे3 वर्जयेत् (→न स्वयं), व2 (तु) कर्पण, प्र2 कर्मणा (→कर्षणं), दे3 द1 द्विष (→द्विजैः) –c) का1 व3 न1 क्षत्रेण (→क्षात्रेण), दे3 * * * (→वर्त्तेत). –d) का1 व2 3 दे1 4 8 9 द1 मुवें मुए मुव वर्ततेऽनापदि, दे10 न1 वार्तेनेनापरि, प्र2 वर्त्तनेनापति, म1 वर्त्तेतानावदित् (?) उ1 यजनेनापदि (→वर्त्तनेनापदि)

६ व1 ○ –a) व3 तेना चैवाप्य, दे2 4 6 न1 प्र2 म1 उ1 तेन चैवाप्य, दे10 तेनाचादाप्य, तै1 तेन चैवास्य (→तेन चावाप्य) दे1 मुए जीवन्तु दे6 प्र2 जीवस्तु (→जीवंस्तु) –b) का1 दे10 वैश्यवृत्ति, दे1 8 9 तै1 मुवें मुए मुव वैश्यवृत्ति (→वैश्यवृत्तिं) –c) न1 कथंचित् (→कथचन) –d) दे3 °कारण, न1 °वार्षय, तै1 °चापलम्, द1 उ1 °बाधक, म1 °वार्द्धम्, प्र2 °साधन (→°कर्षणम्)

७ व1 ○, दे1 ७c–८b ○ –a) व3 गवलाभ, दे8 न1 लब्धालाभ, द1 म1 लब्ध्वा लाभ (→लब्धलाभ) –b) दे4 तै1 चाभि (→चापि) –c) व3 सन्दोष, दे3 दोषं त, दे4 तै1 तद्दोष, दे10 दत्ताद, द1 प1 म1 उ1 वै दोष (→तं दोषं) –d) दे1 नाशयन्ति, दे4 समयाति, दे9 समयति (→शमयन्ति), प्र2 संसयं नात्र संशय.

८ व1 ○, दे1 ab ⊙ –a) दे8 देवेभ्यश्चा प्र2 देवेभ्यश्च (→देवेभ्यश्च) –b) व3 न1 भोग तु, दे10 द1 म1 भाग च, तै1 भाग च (→भागं तु), द1 विंशिक (→विंशकम्) –c) दे1 त्रिंशद्भाव, दे8-10 मुए त्रिंशद्भाग, तै1 त्रिंशादान, द1 प्र2 म1 उ1 विंशद्भाग (→त्रिंशद्भाग) –d) दे1 8-10 मुए कृष्य, दे4 प्र2 कृषि॰ (→कृषिं), तै1 कुर्वन्नि (→कुर्वन्), दे4 तुष्यति (→दुष्यति)

९ व1 ○ –a) दे1 6-10 मुवें मुए मुव वाणिज्ये द्विगुणं दद्यात् –b) का1 व3 दे2 0 कुशीदी, वै1 कुशीदे, दे6 कुपीशी, तै1 कुशीदे, द1 म1 उ1 कुशीद, प्र2 कुसीदम् (→कुसीदी) –c) का1 कृषीवलाश्च-, व3 कृषीवलोऽन-, दे1 2 4 8 10 मुवें मुए मुव कृषिपालान्न, न1 कृषीलवाश्च (→कृषीवलो न) –d) व3 दृश्यते (→युज्यते)

१० व1 ○ –a) का1 व2 3 चाप्याददात, प्र2 साप्याददीत (→वाप्याददीत), दे4 त्रिलोक्य चापि ददीत –b) न1 साधक (→साधक) –c) व3 तुल्ये (→त्वन्ये)

११ व1 ○ –a) दे4 यत् (→यः) –c) दे10 कथितार्द् (→कथिते) –d) दे6 द्वे वृत्त, दे10 विवृत्ती, उ1 द्वे वृत्ति (→द्वे वृत्ती)

१२ व1 ○ –a) दे1 6 8 10 अमृते वा(दे8 चा)थवा (→अमृतेनाथवा) –b) व2 प्र2 म1 मृतेनाप्यथवापदि, दे1 8 10 मृतेनाप्यथवा यदि –c) दे1 यथा चित्त (→यथाचित) –d) का1 भक्ष्य तु, दे4 10 भक्ष्य तु, द1 भैक्ष तु (→भैक्ष तु), न1 अमृत भैक्षयाचित

द २.२५.२१ योऽर्थो धर्माय नात्मार्थः सोऽर्थोऽनर्थस्तथेतरः । तस्मादर्थं समासाद्य दद्याद् वै जुहुयाद् यजेत् ॥२१

इति श्रीकूर्मपुराणे षट्साहस्र्या संहितायामुपरिविभागे पञ्चविंशोऽध्यायः ॥२५॥

# २६

व्यास उवाच ।※

अथातः संप्रवक्ष्यामि दानधर्ममनुत्तमम् ।
ब्रह्मणाऽभिहितं पूर्वमृषीणां ब्रह्मवादिनाम् ॥१

अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं भुक्तिमुक्तिफलप्रदम् ॥२

यद् ददाति विशिष्टेभ्यः श्रद्धया परया युतः ।
तद् वै वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥३

नित्यं नैमित्तिकं काम्यं त्रिविधं दानमुच्यते ।
चतुर्थं विमलं प्रोक्तं सर्वदानोत्तमोत्तमम् ॥४

---

२१ व1 O, दे1 ab O (द २० पा टि) –a) व2 3 दे6 धर्मार्थनाशाय, दे4 10 ग1 द1 प्र2 म1 उ1 मुवें मुए मुब, धर्माय नात्मार्थं, ते1 धर्मस्य एवार्थं (→धर्माय नात्मार्थं) –b) दे8 10 मुवें. मुए. मुब मोऽर्थो नार्थस म1 सोऽर्थो धर्मस् (→सोऽर्थोऽनर्थस), दे4 सोऽर्थो भयस्तथेतर, दे8 सोर्थोनात्मस्तथेतर, ते1 स्वार्थोऽपि चावयेत्तर, प्र2 सोर्थोनर्थस्तयो रत –c) दे1 धर्मादर्थं, ते1 तस्माद् धर्मं (→तस्मादर्थं) –d) दे1 8 10 द1 म1 उ1 मुवें. मुए मुब द्विज, प्र2 सत (→यजेत्), ते1 दद्याद्देवानृषीन् यजेत

पुष्पिका—

पुराणनाम—क1 दे4 8 इति श्रीकू(का1 कौ)र्मपुराणे उपरिभागे, प्र2 इति कूर्मपुराणे, व1 दे2 इति श्रीकू(दे3 कौ)र्मपुराणे उपरिभागे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे व्यासगीतासु, दे3 न1 इति श्रीकूर्मपुराणे, दे8 9 इति श्रीकूर्म पुराणे उपरिभागे व्यासगीतासु, दे10 इति श्रीकूर्मपुराणे व्यासगीतासु ते1 इत्यादिमहापुराणे श्रीकौर्मे उत्तरभागे व्यासगीतासु, व1 इति श्रीकौर्मे, प्र2 प1 इति श्रीकूर्मपुराणे उपरि(म1 उत्तर)भागे, व्यासगीतासु, उ1 श्रीकूर्मपुराणे उत्तर भाग व्यासगीतासु मुवें इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुए इति श्रीकूर्मपुराणे उपविभागे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां अध्यायनाम—क1 व1 3 दे1-4 6 8-10 न1 ते1 द1 प्र2 म1 उ1 मुए O, मुवें द्विजानीनां वृत्तिनिरूपणं नाम, मुब विविधगृहिवृत्तिधर्म नाम अध्यायसंख्या—व3 दे6 O, क1 दे1 चतुर्विंशोऽध्याय ॥२४॥, व3 दे3 ते1 चतुर्विंशोऽध्याय, दे1 मुवें मुए पञ्चविंशोऽध्याय, ॥२४॥, दे3 8 10 द1 प्र2 ग1 उ1 मुए पञ्चविंशोऽध्याय, ग1 पञ्चशततमोऽध्याय

२६

※ व1 ते1 O, न1 प्र2 उ1 व्यास, द1 म1 श्रीव्यास,

१ [व1 २५ अध्यायस्य ५ श्लोकाद् आरभ्य २६ अध्यायस्य १२ d यावन्नास्ति] –a) प्र2 अथातद (→अथात), व3 °वक्षामि (→°वक्ष्यामि) –c) व2 दे3 ब्रह्मणा विहित, न1 ब्राह्मणाभिहित (→ब्रह्मणाभिहित) –d) दे4 6 °वादिनं (→°वादिनां)

२ व1 O (द १ पा टि) –a) क1 व2 3 दे8 मुवें मुए मुब. धर्मा (व3 °ना) नामुचिते, दे4 अर्थानामुच्यते, ते1 अर्थानाम्यागमे, प्र2 अर्थानामुदिते (→अर्थानामुदिते) –b) दे6 श्रद्धाया, न1 श्रद्धया (→श्रद्धया), द1 ग1 उ1 प्रतिपादित (→प्रतिपादनं) –c) व1 दाननित्य° (→दान-मित्य°) –d) व3 भक्तिमुक्ति°, प्र2 मुक्ति ** (→भुक्ति-मुक्ति°)

३ व1 O (द. १ पा टि), दे4 ३c–४d O, दे10 ३c–१३d O –a) प्र2 विशि टेभ्यो (→विशिष्टेभ्य) –b) क1 न1 युत (→युत), द1 8 9 मुवें मुए मुब. शिष्टेभ्य श्रद्धायुत, दे10 य स शूद्रो जनायते –c) दे1 8-10 मुवें. मुए तद्विचिन्त°, द1 प्र2 म1 उ1 तत्तुवित्त° (→तद्वै वित्त°) –d) ते1 शेष, प्र2 शष्य (→शेष), द1 प्र2 म1 उ1 कस्यापि- (→कस्यापि), दे6 रक्षति (→रक्षति)

४ व1, दे1 10 O. –a) दे8 प्र2 नित्य- (→नित्य) –c) उ1 चतुर्थमविमलं (→चतुर्थं विमलं)

अहन्यहनि यत् किंचिद् दीयतेऽनुपकारिणे ।
अनुद्दिश्य फलं तस्माद् ब्राह्मणाय तु नित्यकम् ॥५
यत् तु पापोपशान्त्यर्थं दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥६
अपत्यविजयैश्वर्यस्वर्गार्थं यत् प्रदीयते ।
दानं तत् काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥७
यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ।
चेतसा धर्मयुक्तेन दानं तद् विमलं शिवम् ॥८
दानधर्मं निषेवेत पात्रमासाद्य शक्तितः ।
उत्पत्स्यते हि तत्पात्रं यत् तारयति सर्वतः ॥९

कुटुम्बभक्तवसनाद् देयं यदतिरिच्यते ।
अन्यथा दीयते यद्धि न तद् दानं फलप्रदम् ॥१०
श्रोत्रियाय कुलीनाय विनीताय तपस्विने ।
वृत्तस्थाय दरिद्राय प्रदेयं भक्तिपूर्वकम् ॥११
यस्तु दद्यान्महीं भक्त्या ब्राह्मणायाहिताग्नये ।
स याति परमं स्थानं यत्र गत्वा न शोचति ॥१२
इक्षुभिः संततां भूमिं यवगोधूमशालिनीम् ।
ददाति वेदविदुषे यः स भूयो न जायते ॥१३
गोचर्ममात्रामपि वा यो भूमिं संप्रयच्छति ।
ब्राह्मणाय दरिद्राय सर्वपापैः प्रमुच्यते ॥१४ वें २ २९ १४

५ ध1 ⊙ (द्र १ पा वि ), दे10 ○ (द्र ३ पा वि ) –c) दे6 अनुदिश्य, द1 म2 उ1 अनिर्दिश्य (→अनुद्दिश्य), का1 दे6 म1 तस्य (दे6 °स्या), ब3 दे3 तस्यात् (→तस्माद्) –d) ब1 म2 उ1 ब्राह्मणायाश (→ब्राह्मणाय तु), दे9 सर्वदानोत्तमोत्तम, म1 ब्रह्मणायतमित्यक

६ म1 ⊙ (द्र १ पा वि ), दे10 ○ (द्र ३ पा वि ) –a) ते1 -पापदोष° (→पापोप°) –b) का1 विदुषाद्भुतो, दे2 विदुषाकरो, दे3 विदुषा प्रति, दे6 विदुषे विप्र, म3 विप्रियां करेत् (→विदुषां करे) –c) दे6 नैमित्तिके (→नैमित्तिकं), वे1 तदुद्दिष्ट, द1 च तद्दिष्ट, म2 च निर्दिष्ट-, म1 तु निर्दिष्ट, उ1 इति दिष्ट (→तदुद्दिष्ट) –d) दे1 दान (→दानं), दे4 यत्रिद् (→सद्भिर्), ब2 3 दे2 न1 मनुत्तम (→अनुष्ठितम्)

७ ब1 ○ (द्र १ पा वि ), दे10 ○ (द्र ३ पा वि ) –a) दे1 अपत्य, दे6 अपाप-, न1 अ•त्य- (→अपत्य ), दे3 -विशयश्वादि (→-विजयैश्वर्य-) –b) ब3 स्वर्गादर्थं (→स्वर्गार्थं) –c) दे4 6 काम्य° (→काम्य°), म1 °मित्याहुर् (→°माख्यातम्) –d) म1 स्याव सद् (→ऋषिभिर्), ते1 धर्मविदामं , द1 प • चिन्तकैः (→धर्मचिन्तकैः )

८ ध1 ○ (द्र १ पा वि ), दे10 ○ (द्र ३ पा वि ) –a) उ1 यदीश्व •- (→यदीश्वर-), दे1 °प्रीतनार्थं (→°प्रीणनार्थं) –b) दे6 ब्र•विद्मय , द1 म2 म1 उ1 ब्रह्मविद्भ्य (म2 °भि ) (→ब्रह्मवित्सु), दे2 4 दे1 द1 म1 उ1 भक्तियुक्तेन, म2 भक्तियस्लेन (→धर्मयुक्तेन) –d) म2 द1 म2 म1 उ1 स्मृतम् (→शिवम्)

९ ध1 ○ (द्र १ पा वि ), दे10 ○ (द्र ३ पा वि ), –a) का1 निषेवेत् (→निषेवेत) –b) उ1 • साद्य (→आसाद्य), म3 भक्तित (→शक्तित ) –c) म3 उत् पश्यता, दे1 8 उत्पत्स्य हि (→उत्पत्स्यते), का1 ब2 3 दे2 तु, दे6 च (→हि), दे4 ते1 द1 म2 उ1 यत्पात्र, न1 त पात्र (→तत्पात्र) –d) दे4 द1 म3 म1 उ1 तत्तारयति, ते1 तत्रायति च (→यत्तारयति)

१० का1 ○, ब1 ⊙ (द्र १ पा वि ), दे10 ○ (द्र ३ पा वि ), दे3 ab ⊙ –a) न1 कुटुम्ब• (→कुटुम्ब•), ब2 3 -भरणाद् (→ वसनाद्) –b) म2 ब1 तदिति° (→यदति°) –c) दे3 सद्भिर् दे4 यद्, दे6 यदि-, ते1 सद्, म2 तद्धि (→यद्धि)

११ ध1 ○ (द्र १ पा वि ), दे10 ⊙ (द्र ३ पा वि ) –c) का1 दे8 9 द1 उ1 मुवें मुए मुव व्रतस्थाय, दे3 ब्रह्मिष्ठाय, दे4 विनस्था• (→वृत्तस्थाय), म1 दरिद्राय व्रतस्थाय –d) दे1 8 9 मुवें मुए मदेय (→प्रदेय)

१२ ध1 ○(द्र १ पा वि ), दे10 ○ (द्र ३ पा वि ), दे1 १२c-१४c ○ –a) न1 यस्तु (→यस्तु), उ1 -नादीभक्त्या (→मही भक्त्या) –b) म2 ब्राह्मणाय (→ब्राह्मणा-)

१३ दे1 ⊙ (द्र १२ पा वि ), दे10 ⊙ (द्र ३ पा वि ) –a) का1 संतता, दे1 9 सनता (दे6 °तो), दे3 ते1 द1 म2 म1 उ1 सहिता (→संतता), ध1 ••••• ता भूमि –b) दे6 यव° (→यव°) –c) दे6 देवविदुष्टे (→वेद-विदुषे) –d) ब1 भूयोऽपि- (→भूयो न)

१४ दे1 ○(द्र १२ पा वि ), –a) दे10 ते1 म1 °मात्रमपि, द1 ••मपि (→मात्रामपि), द1 या, उ1 वा (→वा) –b) दे1 सो (→यो) –d) ब1 प्रमु•ते (→प्रमुच्यते)

वें २.२६.१५ भूमिदानात् परं दानं विद्यते नेह किञ्चन ।
अन्नदानं तेन तुल्यं विद्यादानं ततोऽधिकम् ॥१५
यो ब्राह्मणाय शान्ताय शुचये धर्मशालिने ।
ददाति विद्यां विधिना ब्रह्मलोके महीयते ॥१६
दद्यादहरहस्त्वन्नं श्रद्धया ब्रह्मचारिणे ।
सर्वपापविनिर्मुक्तो ब्रह्मणः स्थानमाप्नुयात् ॥१७
गृहस्थायान्नदानेन फलं प्राप्नोति मानवः ।
आममेवास्य दातव्यं दत्त्वाप्नोति परां गतिम् ॥१८
वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् सप्त पञ्च वा ।
उपोष्य विधिना शान्तः शुचिः प्रयतमानसः ॥१९
पूजयित्वा तिलैः कृष्णैर्मधुना च विशेषतः ।
गन्धादिभिः समभ्यर्च्य वाचयेद् वा स्वयं वदेत् ॥२०
प्रीयतां धर्मराजेति यद् वा मनसि वर्तते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥२१
कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥२२
कृतान्नमुदकुम्भं च वैशाख्यां च विशेषतः ।
निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥२३
सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च वा ।
तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति ॥२४

---

१५ दे3 १५b १६b ○, दे4 abc ○ (द्र १२ पा वि ) -c) उ1 सान्नदान तु न तुल्य

१६ दे3 ab ○ (द्र १५ पा वि ) -a) दे1 8-10 मुवें मुए. शुचये (→शान्ताय) -b) व1 3 दे4 6 तै1 धर्मशीलिने, द1 प्र2 ब्रह्मवादिने, म1 ब्रह्मशीलिने (→धर्मशालिने), दे1 8-10 मुवें. मुए धर्मशीलाय शीलिने, न1 शूलये धर्मशीलिने, उ1 शुचिने ब्रह्मवादिने -c) दे3 ●●● (→ददाति), दे1 10 विद्या विधिना, तै1 विधिना विद्या (→विद्यां विधिना)

दे1 अधिकम्—भूमिदानात्पर विद्यते ( = १५a)

१७ -a) दे8 दयाद् (→दद्याद्). -b) द1 श्रद्धयो, उ1 शुद्धाय (→श्रद्धया) -c) प्र2 °मुक्त (→°मुक्तो) -d) व1 दे4 ब्रह्मणे, दे1 ब्रह्माण, दे3 व्रतिन , दे8-10 मुवें मुव ब्राह्मण, प्र2 ब्राह्मण (→ब्रह्मणः ), दे1 8 9 स्थानमेष्यति, दे2 स्थानमाप्स्येत्, दे10 स्थानमिष्यते, द1 प्र2 म1 उ1 पदमाप्नुयात् (→स्थानमाप्नुयात्), न1 तै1 ब्रह्मस्थानमवाप्नुयात्

१८ द1 प्र2 उ1 १८a–२६b ⊙ एषु कोशेषु इमे श्लोकाः ३५ श्लोकानन्तरं वर्तन्ते. -a) दे10 गृहस्थायान्न°, म1 गृहस्थास्यान्न°, तै1 गृहस्थोप्यन्न° (→गृहस्थायान्न°) -b) का1 व2 दे3 10 फलमाप्नोति, व1 3 दे2 न1 मुव फलमाप्नोति (→फलं प्राप्नोति) -c) का1 प्रममेवास्य, व1 दे1 3 4 8 10 म1 मुवें मुए मामेव वा (व1 म1 °वा°)स्य (→आममेवास्य), दे6 दातव्ये (→दातव्य)

१९ द1 प्र2 उ1 ○ (द्र १८ पा वि ), म1 १९a-२६b ○. -a) दे10 वैशाखे (→वैशाख्यां), दे1 पूर्णिमास्यां तु, दे4 पौर्णमासां तु, दे6 पौर्णमास्यां वा, दे8 9 पूर्णमास्यां तु (→पौर्णमास्यां तु) -b) का1 पञ्च सप्त (→सप्त पञ्च), दे4 ●क, दे10 च, तै1 च, + वा (→वा) -c) व1 दे1 4 8 10 न1 तै1 मुवें मुए मुव शान्तान् (→शान्त ) -d) दे1 8 10 न1 मुवें मुए मुव शुचीन्, दे6 शुद्धि (→शुचि), व2 च यत°, दे4 तद्गत° (→प्रयत°), दे6 ●●●, तै1 मुवें मुए °मानसा (→°मानसः), दे1 शुचित्य●तमानस•

२० द1 प्र2 उ1 ○ (द्र १८ पा वि ), म1 ○ (द्र १९ पा वि ), व1 दे6 न1 cd ○ -b) दे6 चाविशेष (→च विशेषतः ) -c) का1 गन्धादीनिरथाभ्यर्च्य, दे3 गधादिभिरथाभ्यर्च्य -d) व2 3 मुव वाचयित्वा (→वाचयेद्वा), का1 समर्चयेत् (→स्वयं वदेत्)

२१ द1 प्र2 म1 ○ -a) दे4 प्रीय(त)वा (→प्रीयतां) -b) दे1 मति● (→मनसि) -c) का1 व2 3 दे1 2 4 8 9 मुवें मुए मुव यावज्जीव, व1 यद्यज्जाव (→यावज्जीव-), का1 व2 3 दे2 तु वत्, न1 कृतां (→कृत), दे6 यद्याजीवे तत्पाप -d) दे2 नस्यति (→नश्यति)

२२ म1 २२a–२३d ○, द1 प्र2 म1 उ1 ○ -a) व2 कृष्णाजिन (→कृष्णाजिने), व2 3 दे6 मुवें मुए. मुव दत्वा (→कृत्वा) -b) दे6.10 तै1 °सर्पिषि (तै1 ष°), दे4 °सर्पिषा (→°सर्पिषी) -c) दे10 ददतु (→ददाति)

२३ ब1 द1 प्र2 म1 उ1 ○ -a) दे2 6 कृतार्थम, दे3 दे3 दत्त्वान्नम्, तै1 दत्वान्नम् (→कृतान्नम्) -b) का1 व2 3 दे2 6 तै1 वैशाख्यां तु, दे10 वैशाखे च (→वैशाख्यां च) -c) दे8 निर्दिश्य (?) (→निर्दिश्य) -d) का1 मध्यमे (→मुच्यते).

२४ य1 द1 प्र2 म1 उ1. ○ -a) व2 सुवर्णैस्तिल° (→सुवर्णतिल°), दे4 10 °युक्तैश्च (→°युक्तैस्तु) -b) का1

घमासे तु विप्रस्तु द्वादश्यां समुपोषितः ।
वलाम्बरधरः कृष्णैः तिलैर्हुत्वा हुताशनम् ॥२५
दद्याद् ब्राह्मणेभ्यस्तु तिलानेव समाहितः ।
न्मप्रभृति यत्पापं सर्वं तरति वै द्विजः ॥२६
मावस्यामनुप्राप्य ब्राह्मणाय तपस्विने ।
तकिंचिद् देवदेवेशं दद्याच्चोद्दिश्य शंकरम् ॥२७
ीयतामीश्वरः सोमो महादेवः सनातनः ।
प्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥२८
यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् ।
आराधयेद् द्विजमुखे न तस्यास्ति पुनर्भवः ॥२९
कृष्णाष्टम्यां विशेषेण धार्मिकाय द्विजातये ।
स्नात्वाऽभ्यर्च्य यथान्यायं पादप्रक्षालनादिभिः ॥३०
प्रीयतां मे महादेवो दद्याद् द्रव्यं स्वकीयकम् ।
सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥३१
द्विजैः कृष्णचतुर्दश्यां कृष्णाष्टम्यां विशेषतः ।
अमावास्यायां भक्तैस्तु पूजनीयस्त्रिलोचनः ॥३२
एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् ।
अर्चयेद् ब्राह्मणमुखे स गच्छेत् परमं पदम् ॥३३ वें २.२१.३२

पन सप्न (→सप्त पच) –c) व2 तर्पयेद्ब्रह्म, दे4 8 9 तर्प्यंयेदुद-, दे10 तर्पयेदुप- (→तर्पयेदुद-), व1 °मार्त्रैस्तु, व3 न1 -पार्त्रैश्च, दे1 8-10 मुवं मुए मुव -पात्राणि (→पार्त्रैस्तु) –d) दे1 8 10 ब्राह्मणेभ्यो (→ब्रह्महत्या), दे3 व्यपोहति (→व्यपोहति)

२५ व1 द1 प्र2 म1 उ1 ○, दे1 0-10 मुए ab ⊙ –a) व3 माघमास (→माघमासे), श1 व2 3 दे1 8 न1 मुव तस्मिंश्च तु, दे3 शुचिर्भूत्वा, दे4 तु मिश्रैस्तु (→तु विप्रस्तु), ते1 माघमासस्य शुक्ले तु –c) दे1 °धरे, न1 °धर (→°धर) –d) दे6 हुत्वा (→हुत्वा)

२६ व1 द1 प्र2 म1 उ1 ○ –a) न1 ब्राह्मणे * स्तु (→ब्राह्मणेभ्यस्तु) –b) श1 तिलान्येव, दे1 8 9 मुवं मुए विप्रेभ्य सु, दे4 तिलानेतत्, दे10 तिलेभ्य सु (→तिलानेव), दे2 समहित (→समाहित) –d) व2 दुष्कृत, न1 वै द्विजा (→वै द्विज), दे4 सर्व तु तरति द्विजा, ते1 तत्क्षणादेव नश्यति

प्रन पर ते1 पुस्तके अधिकम्—
*यस्तु कृष्णचतुर्दश्यां स्नात्वाय द्विजातये ।
स्नात्वाऽभ्यर्च्य यथान्याय पादप्रक्षालनादिभि ॥
(=२६, a ३०bcd)

२७. व1 ते1 ○, द1 प्र2 उ1 ab ⊙ –a) श1 दे2 °प्राप्तो, व2 3 दे6 °प्राप्तो (प्र2 °प्ते) (→°प्राप्य) –c) दे6 °देवस्य, दे10 °देवेशा (→°देवेश) –d) दे1 8-10 मुवं मुए मुव दद्याच्चोद्दिश्य, दे3 दद्यादुद्दिश्य (→दद्याच्चोद्दिश्य), दे10 शंकरं (→शंकरम्)

२८. म1 ○ –a) ते1 प्रीयतां मे महादेवो. –b) दे10 महादेव (→महादेवः); प्र2 सनातन (→सनातनः), ते1 दद्यात् द्रव्यं स्वकीयकम्. –c) द1 प्र2 म1 उ1 सर्व° (→सप्त°), ते1 सर्वपापविनिर्मुक्त. –d) ते1 प्राप्नोति परमां गतिम्

२९ व1 ○, द1 २६d–३२a ○, प्र2 २६c–३१d ⊙ –a) ते1 द्विज, प्र2 उ1 यत्तु (→यस्तु) –b) प्र2 पितामह (→पिनाकिनम्), ते1 समुद्दिश्य महेश्वरम् –c) व3 विप्रमुखेन्, दे3 द्विजो मयत्या दे4 विप्रमुखे, म1 द्विजो मुख्यो, उ1 द्विजमुख्यान् (→द्विजमुखे) –d) व3 तस्या नास्ति, दे4 न तस्या(द)स्ति (→न तस्यास्ति), उ1 पुनर्भवा (→पुनर्भव)

३० व1 द1 प्र2 ○, ते1 cd ⊙ –a) दे6 कृष्ण-ष्टम्या (→कृष्णाष्टम्या) –b) उ1 द्विजातयत् (→द्विजातये), ते1 सर्वतरति वै द्विज –c) दे10 °भ्यर्च्य (→°भ्यर्च्य) –d) दे2 °प्रक्षाल (→°प्रक्षाल-)
ते1 c,d मध्ये अधिकम्—
* अमावास्यामनुप्राप्य ब्राह्मणाय तपस्विने ।
यत्किंचिद्देवदेवेश दद्यादुद्दिश्य शंकरम् ।
प्रीयतामीश्वरसोमो महादेवस्सहोमया ।
सप्तजन्मकृत पाप तत्क्षणादेव नश्यति ॥ (= २७, २८)

३१ व1 प्र2 ○, दे1 ३१a–३२d ○, द1 ३१a–३२a ○ –a) दे2 महादेव, दे4 महादेव (→महादेवो) –c) दे2 स सर्वपापविनिर्मुक्त

३२ व1 ते1 ○, द1 a ○ –b) दे1 कृष्णाष्टाम्या (→कृष्णाष्टम्या) –c) दे1 8 9 न1 द1 प्र2 म1 उ1 मुवं मुए मुव अमावास्या तु, दे4 अमावास्या च (→अमावास्यायां), दे1 8 9 मुवं मुए मुव वै भक्तैः, दे4 या भर्त, दे3 तमीशस्तु, दे10 तु भक्तैः, न1 सुरसौरस्तु, द1 म1 भूतैस्तु (→भक्तैस्तु), श1 अमावास्यां तु वै भक्तैस्तु, दे3 अमावास्यां शिवो सर्वे –d) प्र2 °लोचन (→°लोचन)

३३ –a) द1 निराहारा (→निराहारो) –c) प्र2 अर्चयेत् (→अर्चयेद्), म1 ब्राह्मणान्मुखतान् (→ब्राह्मणमुखे), –d) म1 परमां (→परमं).

वे २.२६.३३ एषा तिथिर्वैष्णवी स्याद् द्वादशी शुक्लपक्षके ।
तस्यामाराधयेद् देवं प्रयत्नेन जनार्दनम् ॥३४
यत्किञ्चिद् देवमीशानं उद्दिश्य ब्राह्मणे शुचौ ।
दीयते विष्णवे वाऽपि तदनन्तफलप्रदम् ॥३५
यो हि या देवतामिच्छेत् समाराधयितुं नरः ।
ब्राह्मणान् पूजयेद् यत्नात् स तस्यां तोषयेत् ततः ॥३६
द्विजानां वपुरास्थाय नित्यं तिष्ठन्ति देवताः ।
पूज्यन्ते ब्राह्मणालाभे प्रतिमादिष्वपि क्वचित् ॥३७
तस्मात् सर्वप्रयत्नेन तत् तत् फलमभीप्सता ।
द्विजेषु देवता नित्यं पूजनीया विशेषतः ॥३८

---

३४ –a) दे$_{7}$ $_{10}$ मुवँ एषा (→एषा), दे$_{6}$ निथि (→तिथिर्), तै$_{1}$ यस्मात् वैष्णवी सा स्यात् –b) दे$_{2}$ शुभ, उ$_{1}$ शुद्ध- (→शुक्ल-), का$_{1}$ ब$_{2}$ $_{3}$ दे$_{2}$ $_{6}$ -पक्षत, तै$_{1}$ -कृष्णयो (?) (→पक्षके) –c) प्र$_{2}$ ता मा (→तस्या)

३५ –a) न$_{1}$ त्वद् (→यद्) –b) दे$_{10}$ ब्राह्मणे, द$_{1}$ ब्राहाणो (→ब्राह्मणे), दे$_{4}$ -पु वँ, तै$_{1}$ गुरौ (→शुचौ) –c) का$_{1}$ दे$_{2}$ $_{6}$ प्र$_{3}$ विष्णु मे-, द$_{1}$ विष्णुना, दे$_{3}$ नियमे-, दे$_{10}$ तै$_{1}$ वैष्णवे (→विष्णवे), दे$_{3}$ -नापि, तै$_{1}$ द$_{1}$ चापि (→वापि) –d) उ$_{1}$ तद•न्तै° (→तदनन्त°), ब$_{2}$ दे$_{1}$ $_{8}$ $_{10}$ मुए मुव °स्मृत, उ$_{1}$ °प्रत (→°प्रदम्)

३६ –a) उ$_{1}$ -भि (→हि), ब$_{2}$ द$_{1}$ प्र$_{2}$ म$_{1}$ उ$_{1}$ ता (→या), तै$_{1}$ नित्य (→इच्छेत्) –b) न$_{1}$ समा(ना)रा° (→समारा°), तै$_{1}$ °धयते (→°धयितु) –c) प्र$_{3}$ म$_{1}$ भोजयेत् (→पूजयेत्), दे$_{1}$ $_{8}$ $_{9}$ मुवँ मुए मुव विद्वान्, दे$_{10}$ धीमान्, न$_{1}$ मानवान्, तै$_{1}$ दानात्, द$_{1}$ म$_{1}$ उ$_{1}$ भक्त्या, प्र$_{2}$ भक्तान् (→यत्नात्) –d) दे$_{1}$ $_{8}$-$_{10}$ न$_{1}$ मुवँ मुए मुव तस्यास्तोष-, दे$_{5}$ तस्या स्यात-, तै$_{1}$ स्यात्तावत-, द$_{1}$ म$_{1}$ उ$_{1}$ तस्या स्यात- प्र$_{2}$ तस्या स्नात- (→तस्यां तोष-), दे$_{1}$ $_{8}$ $_{10}$ मुवँ मुए मुव -द्ध्रुव, दे$_{3-4}$ न$_{1}$ हेतुक, तै$_{1}$ -र्च्चयेत्, द$_{1}$ प्र$_{2}$ म$_{1}$ उ$_{1}$ -माप्नुयात् (→°येत् ततः)

३६ श्लोकानन्तरम् द$_{1}$ प्र$_{2}$ म$_{1}$ पुस्तकेषु १८–२६ ab श्लोका समागता —

गृहस्थायान्नदानेन फल प्राप्नोति मानव ।
यन्नमेवास्य दातव्य दत्त्वाप्नोति परं पदम् ॥
वैशाख्यां पौर्णमास्यां वा ब्राह्मणान् सप्त पञ्चधा ।
उपोष्य विधिना शान्तान्शुचि प्रयतमानस ॥ [4]
पूजयित्वा तिले कृष्णं मधुना तु विशेषत ।
गन्धादिभि समभ्यर्च्यपित्वा स्वय वदेत् ॥
प्रीयतां धर्मराजेति यद्वा मनसि वर्तते ।
यावज्जीव कृत पाप तत्क्षणादेव नश्यति ॥ [8]
कृष्णाजिने तिलान्कृत्वा हिरण्यं मधु सर्पिष ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृत ॥
घृतान्नमुदकुम्भ च वैशाख्या तु विशेषत ।
निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥ [12]
सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च वा ।
तर्पयेदुदपात्रैस्तु ब्रह्महत्या व्यपोहति ॥
माघमासे च शुक्ले तु द्वादश्या समुपोषित ।
शुक्लाम्बरधर कृष्णैस्तिलैर्हुत्वा हुताशनम् ॥ [16]
प्रदद्याद्ब्राह्मणेभ्यस्तु तिलान्न वा विशेषत ।
जन्मप्रभृति यत्पाप सर्वं तरति वै द्विज ॥
अमावास्यामहनि प्राप्य ब्राह्मणाय तपस्विने ।

[–1) म$_{1}$ O, प्र$_{2}$ गृहस्था° (→गृहस्थ) –2) प्र$_{2}$ म$_{1}$ मागमे (→अन्नमे), म$_{1}$ दातव्य (→दातव्य), तद् विष्णो परम (→दत्त्वाप्नोति पर) –3) प्र$_{2}$ तु (→वा) –4) प्र$_{2}$ शान्तो (→शान्त) –5) प्र$_{2}$ म$_{1}$ च (→तु) –6) प्र$_{2}$ गन्धादिभिस्सभ्यर्च्य''' 'भित्वा'' देव, म$_{1}$ गन्धादिभिस्समभ्यर्च्य तुष्णव रविनन्दनम् –7) प्र$_{2}$ प्री •• म् (→प्रीयता), प्र$_{2}$ म$_{1}$ धर्मराजो मे (→धर्मराजेति), प्र$_{2}$ पशून्, म$_{1}$ यो मे (→यद्वा) –8) प्र$_{2}$ म$_{1}$ सर्पिषी (→सर्पिष) प्र$_{2}$ विप्रा •• र्वम् (→विप्राय सर्वं), द$_{1}$ तेरति (→तरति) –11) प्र$_{2}$ च (→वा) –16) म$_{1}$ शुक्ले, (→कृष्णै), प्र$_{2}$ भुक्त्वा (→हुत्वा). –17) प्र$_{2}$ च (→वा) –18) प्र$_{2}$ द्विजा (→द्विज) –19) -मनु- (→हनि) ]

३७ –a) दे$_{3}$ $_{4}$ $_{10}$ च पु°, प्र$_{2}$ वा पु° (→वपु°), प्र$_{2}$ °रस्थाय (→°रास्थाय) –b) दे$_{4}$ नित्ये (→नित्य) –c) तै$_{1}$ पूज्यते (→पूज्यन्ते), ब$_{2}$ ब्राह्मणलाभे, दे$_{4}$ ब्रह्मलाभेन, उ$_{1}$ ब्राह्मणाभावे (→ब्राह्मणालाभे), –d) का$_{1}$ प्र$_{2}$ $_{3}$ दे$_{2}$ $_{3}$ °मादिषु वे (का$_{1}$ तत्) (→°मादिष्वपि), तै$_{1}$ प्रतिमाप्स्वपि कर्हिचित्

३८ –a) दे$_{8}$ प्रतिमादिषु यत्नेन, –b) दे$_{8}$ तस्मात्, उ$_{1}$ यत्तत् (→तत्तत्), का$_{1}$ दे$_{4}$ प्र$_{2}$ °मभीप्सत (दे$_{4}$ °तो), दे$_{1-3}$ $_{10}$ मुवँ, मुए मुव °मभीप्सुभि, दे$_{5}$ °मभीप्सि°, (→°मभीप्सता), तै$_{1}$ तस्य समभीप्सताम् –c) द्विजे तु (→द्विजेषु) –d) का$_{1}$ पूजनीयो [→पूजनीया]

विभूतिकामः सततं पूजयेद् वै पुरंदरम् ।
ब्रह्मवर्चसकामस्तु ब्रह्माणं ब्रह्मकामुकः ॥३९
आरोग्यकामोऽथ रविं धनकामो हुताशनम् ।
कर्मणां सिद्धिकामस्तु पूजयेद् वै विनायकम् ॥४०
भोगकामस्तु शशिनं बलकामः समीरणम् ।
मुमुक्षुः सर्वसंसारात् प्रयत्नेनार्चयेद्धरिम् ॥४१
यस्तु योगं तथा मोक्षमन्विच्छेज्ज्ञानमैश्वरम् ।
सोऽर्चयेद् वै विरूपाक्षं प्रयत्नेनेश्वरेश्वरम् ॥४२

ये वाञ्छन्ति महायोगान् ज्ञानानि च महेश्वरम् ।
ते पूजयन्ति भूतेशं केशवं चापि भोगिनः ॥४३
वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥४४
भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥४५
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुदः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥४६   वं १ २६ ४२

३९ दे4 cd ⊙ –a) द10 °कोमत् (→°काम) –b) का1 व2 3 दे2 ते1 पूजयेद्धि (ते1 °द्धिं), दे8 प्रजयेद्धि (→पूजयेद्वै), दे8 पुरदरा, ते1 प्रमन्त्रहम (→पुरन्दरम्) –c) दे6 ब्रह्मचर्य (→ब्रह्मवर्च-), प्र2 उ1 ब्रह्मकामस्तु ब्रह्माणम –d) दे6 ब्राह्मण, म2 उ1 ईशान (→ब्रह्माण), का1 व2 3 दे2 3 6 न1 ते1 ज्ञानकामुक , द1 प्र2 म1 उ1 ज्ञानकामवान् (→ब्रह्मकामुक)

४० दे1 abc ⊙ –a) दे6 आरोग° (→आरोग्य°), का1 दे2 दे4 °कामो (दे4 °मे)पि, व2 ते1 °कामस्तु (ते1 °श्च), (→°कामोऽथ), दे4 तर (→रविं) –b) दे8 9 न1 मुवें मुए मुव°, उ1 सन° (→धन°), म2 धनेश्वर (→हुताशनम्) –c) प्र2 कर्मणा, म1 भरिष्णा (→कर्मणां), द1 कम्म° (→सिद्धि°) –d) ते1 दिवाकरम (→विनायकम्)

४१ –a) न1 भोग°, ते1 बाल° (→भोग°), दे1 सबलो, दे4 शशिन (→शशिन) –b) दे10 बाल° (→बल°), दे10 समीरणे, न1 समीरणि (→समीरणम्) –c) दे10 मुमुक्ष (→मुमुक्षु) –d) व3 °प्रयत्नाद (→प्रयत्नेना°), उ1 °द्रिपु (?) (→°द्धरिम्)

४२ –a) व1 दे4 योगस्, व3 प्र2 योग (प्र2 °गो) दे8 द1 उ1 योगी, न1 मोह (→योग), न1 तथा मोहम् ते1 यथा मोक्षम्, द1 उ1 महायोगी (उ1 °ग), व2 महायोगम् म1 तथा मोक्षम (→तथा मोक्षम्) –b) व1 दे1 4 8 10 ते1 द1 म1 उ1 मुवें मुए मुव इच्छेतद्, व3 मन्विछेत् न1 इच्छेन्म (→मन्विच्छेत्), म1 °मीश्वरम् (→°मैश्वरम्) –c) का1 दे4 न1 सोऽर्चयेत (का1 °द्धि), व1 दे2 सोच्चयेत, ते1 सेवयेद्धि (→सोऽर्चयेद्वै), का1 * रूपाक्ष (→विरूपाक्ष), दे8 योऽप्यर्चयेद्-विरूपाक्ष –d) व1 दे1 3 6 8-10 ते1 मुवें मुए मुव प्रयत्नेन, दे4 प्रयत्ने * (→प्रयत्नेने-), व1 न1 -श्वर हरिं, दे1-8 10 मुवें मुए मुव महेश्वर, दे3 स्वय हर, दे4 द1 प्र2 म1 उ1 -श्वर हर, ते1 पर हरिम् (→-श्वरेश्वरम्)

४३ –a) व3 य वाञ्छति, दे1 8 10 मुवें मुए मुव यो वाञ्छति, दे8 यो वाञ्छति (→य वाञ्छन्ति), का1 दे1 8 10 मुवें मुए मुव °योगान् व1-3 दे3 4 न1 मुव °भो (व3 भग) गान्, दे6 °योरा, ते1 °लोकान् द1 प्र2 म1 उ1 °योग (→°योगान्) –c) दे1 6-10 मुए मुव स, दे9 सं (→ते), दे1 8 10 मुए मुव पूजय (दे9 °ये)ति (→पूजयन्ति), म1 वेदेश (→भूतेश) –d) का1 केवल चापि, व1 दे1 ते1 वैशय चापि (→केशवं चापि), दे4 न1 म1 मुए मुव भो(न1 भा)गिन व1 प्र2 उ1 योगिन (उ1 °न) (→भोगिन)

४४ –a) व3 °माप्नोति, + °माप्नोति, ते1 °माप्नोति (→°माप्नोति), प्र2 वारदस्तृप्तिमवाप्नोति –b) व3 मुद° (?) दे1 9 धन° दे6 मुख° (→सुख°), दे10 °मतर , प्र2 °भ तथा (→°मन्नद ), ते1 सुखमक्षय्य मन° –c) प्र2 तिल (→तिल ) –d) दे1 दीप*दश्चक्षु°, ते1 लभते चक्षु°, प्र3 दीप-दश्चक्षु° (→दीपदश्चक्षु°)

४५ –a) द1 प्र2 म1 उ1 भ्रामदम् (→भूमिद ) –b) द1 °मद्गु° (→मायु°) –c) दे1 गृहदेमाणि (?), दे6 गृहदोऽग्राण, न1 गृहदोऽहृद, दे1 गृह दत्वा च द1 प्र2 गृहमोऽग्र्याणि म1 गृहलो याति, उ1 गृहवेश्मानि (→गृहदोऽग्र्याणि), दे10 वेश्यानि ते1 रत्नानि उ1 योग्यानि (→वेश्मानि) –d) दे4 द1 उ1 रौप्यदो, दे10 रूपदो (→रूप्यदो), दे1 द1 रूप° (→रूप°)

४६ –a) दे6 °मालोक (→°सालोक्य) –b) का1 व2 3 दे2 4 6 प्र2 मुव मश्व-, दे1 यश्वि-, दे3 मर्क-, दे10 अश्वि- म1 श्व* (→मश्वि ), व2 3 दे6 मुव -दोमा(व3 °मा)नम् ते1 -सारूप्यम् (→ सालोक्यम्), व2 3 दे6 मुव उत्तम, दे10 द1 मश्विद (→मश्वद ), न1 ***** सुरेन्द्र –c) का1 व2 3 दे2 6 धन्न (व3 र्ध)दाता, दे4 द1 प्र2 म1 उ1 धन्नप्रद (दे4 प्र2 °द) (→अनडुद ), ते1 श्रिया (→श्रियं), का1 व2 3 दे2 इष्टा, व3 दे4 श्रेष्ठा, दे10 पुष्ट, म1 जुष्ट (→पुष्टा) –d)

वे २.२६.४६ यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसात्म्यताम् ॥४७
धान्यान्यपि यथाशक्ति विप्रेषु प्रतिपादयेत् ।
वेदवित्सु विशिष्टेषु प्रेत्य स्वर्गं समश्नुते ॥४८
गवां घासप्रदानेन सर्वपापैः प्रमुच्यते ।
इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥४९
फलमूलानि शाकानि भोज्यानि विविधानि च ।
प्रदद्याद् ब्राह्मणेभ्यस्तु मुदा युक्तः सदा भवेत् ॥५०
औषधं स्नेहमाहारं रोगिणे रोगशान्तये ।
ददानो रोगरहितः सुखी दीर्घायुरेव च ॥५१
असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ।
तीव्रतापं च तरति छत्रोपानत्प्रदो नरः ॥५२
यद् यदिष्टतमं लोके यच्चापि दयितं गृहे ।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छता ॥५३
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥५४
प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च ।
दत्त्वा चाक्षयमाप्नोति नदीषु च वनेषु च ॥५५

---

द1 गोदा (→गोदो), म1 ब्रह्मभि- (→ब्रह्मदस्य), ब्र1 -धीश्वर (→विपुलम्)

४७ -b) वे8 ऐश्वर्यं (→ऐश्वर्यम्), उ1 प्रभयप्रदा (→प्रभयप्रद) -c) दे10 धनद, ते1 धान्यदस्, प्र3 ध्यानादश् (→धान्यद), का1 द1 शाश्वत (→शाश्वत), दे8 शौरय (→सौरय) -d) दे3 ब्रह्मदो(द), दे4 ब्रह्मणो, दे8 जलाशा (→ब्रह्मदो), का1 दे1 2 6 10 ते1 °सात्मता(दे6 °न), ब1-3 दे3 मुब °शाश्वत (ब1 °ता), दे4 उ1 °साम्यता, न1 °सार्पिता, द1 म1 °सार्पिताम्, प्र2 °साक्षिता (→°सात्म्यताम्)

४८ वे2 3 दे2 6 10 न1 द1 प्र3 म1 उ1 धनान्य (दे8 °न्या)पि, दे4 धनान्यपि, ते1 अन्यानपि (→धान्यान्यपि) -b) दे8 उ1 विप्रेभ्य (→विप्रेषु) -c) का1 दे3 वेदविद्या दे3 वेदवित्सू (→वेदवित्सु), का1 प्र2 विशेषेषु वे3 वशिष्टेषु, उ1 विश्वष्टेषु (→विशिष्टेषु) -d) का1 दे2 स्वर्गे (दे2 °र्गां), (→स्वर्गं), दे1 समश्नुते (→समश्नुते), ते1 स प्रेत्य स्वर्गमश्नुते

४९ ब1 ४९c-५१d ○ -a) का1 दे1 4 6 8 10 द1 मुए वास°, दे8 ग्रास°, उ1 * स°, दे9 मुर्वे वा स- (→घास°) -b) का1 सर्वं पाप, दे3 सर्वपापात् (→सर्वपापैः) -c) म1 इधन्नाना (?) (→इन्धनानां)

दे4 पुस्तके b, c मध्ये अधिकम्—

* इन्धनानां प्रदानेन सर्वपापैः प्रमुच्यते (=४९ c, b)

५० ब1 ○ -a) व2 3 पर्णानि, दे8 सूपानि, न1 पानानि (→शाकानि) -b) व2 वे2 6 न1 शाकानि, ब3 पानानि (→भोज्यानि) -c) दे3 प्रदाय, दे6 स दद्यात् (→प्रदद्याद्), दे4 ब्राह्मणेभ्यश्च (→ब्राह्मणेभ्यस्तु) -d) दे3 सत्कृत्य, दे6 यदा (→मुदा), दे8 शुल्कस् (→युक्त), दे1 8 10 मुर्वे मुए स्वयम्भ-वेत् ते1 प्रजायते (→सदा भवेत्)

५१ ब1 ○ -a) न1 औषध, दे8 अ(?)षध, प्र3 मौषधास् (→औषधं), दे1 स्नेहमाहारो, ते1 स्नानमाहार, प्र2 तेन माहार (→स्नेहमाहारं) -b) का1 दे8 रोगिने (दे8 °नो), ब2 3 वे1 3 द1 प्र2 म1 उ1 रोगि (द1 °हि)णो (→रोगिणे), दे6 रो॰ (→रोग-) -c) ब3 स दानो, म1 ददानो, + ददाति (→ददानो), म1 °सहितस् (→°रहित) -d) दे1 न1 सुखा वे1 द1 प्र2 उ1 सु(ते1 सु)खिर, म1 सुखन् (→सुखी), दे1 °रैव हि (→रेव च)

५२ ब1 ○ -a) दे1 8-10 मुए मुब दुर्गं, दे2 मार्गा (→मार्गं) -b) प्र3 सुरा° (→क्षुर°), ब2 °माकुल, (→°मन्वितम्) -c) का1 म1 तीक्ष्णता त च, व2 3 दे4 6 द1 प्र2 तीक्ष्णातप च (प्र3 °प), दे2 तीक्ष्नतेणच, दे3 प्रता-यासेन, न1 क्षीणतापच, ते1 तीक्ष्णानि पच, उ1 तीक्ष्ण पर च (→तीव्रतापञ्च), दे4 प्र2 चरति (→तरति) -d) दे1 छत्रो-पानत्, दे8 छत्रोपाना- (→छत्रोपानत्-), म1 प्रदानत (→°प्रदो नर) दे4 छत्रोपानहदानत

५३ ब1 ○ -a) का1 तत्तदिष्ट°, दे8 यमुदिष्ट° (→यद्यदिष्ट°), दे8 °तमा (→°तम) -b) का1 व2 3 दे2 6 न1 मुद यच्चास्य (न1 °स्य) (→यच्चापि), उ1 दर्शित (→दयित) -c) का1 दे2 भगवते, न1 गुणप्रदे (→गुणवते) -d) दे8 तदर्था° (?), उ1 ते देवा° (→तदेवा°), दे8 °गिच्छत (→°मिच्छता)

५४ ते1 ५४d-५५a ○ -a) दे2 विसुवे (→विषुवे) -b) दे4 10 सूर्यचन्द्रयो (→चन्द्रसूर्ययो) -d) व1 भव॰ (→भवति), दे6 चक्षय (→चाक्षयम्)

५५ ब1 cd ○, ते1 a ○ (द्र ५४ पा टि) -b) दे1 पुण्यो वा (→पुण्येष्वा), दे2 °यतेनेषु (→°यतनेषु), -c) दे8 दद्या, द1 म1 उ1 दत्त (→दत्त्वा), ब॰ दत्त्वा क्षयमवाप्नोति -d) ब2 3 द1 प्र3 म1 उ1 मुब नदेषु (→वनेषु)

अक्षयं विन्दति स्वर्गं तत्र गत्वा द्विजोत्तमः ॥९
तीर्थं कनखलं पुण्यं महापातकनाशनम् ।
यत्र देवेन रुद्रेण यज्ञो दक्षस्य नाशितः ॥१०
तत्र गङ्गामुपस्पृश्य शुचिर्भावसमन्वितः ।
मुच्यते सर्वपापैस्तु ब्रह्मलोकं लभेन्मृतः ॥११
महातीर्थमिति ख्यातं पुण्यं नारायणप्रियम् ।
तत्राभ्यर्च्य हृषीकेशं श्वेतद्वीपं निगच्छति ॥१२
अन्यच्च तीर्थप्रवरं नाम्ना श्रीपर्वतं शुभम् ।
तत्र प्राणान् परित्यज्य रुद्रस्य दयितो भवेत् ॥१३
तत्र सन्निहितो रुद्रो देव्या सह महेश्वरः ।
स्नानपिण्डादिकं तत्र कृतमक्षय्यमुत्तमम् ॥१४
गोदावरी नदी पुण्या सर्वपापविनाशनी ।
तत्र स्नात्वा पितॄन् देवांस्तर्पयित्वा यथाविधि ।
सर्वपापविशुद्धात्मा गोसहस्रफलं लभेत् ॥१५
पवित्रसलिला पुण्या कावेरी विपुला नदी ।
तस्यां स्नात्वोदकं कृत्वा मुच्यते सर्वपातकैः ।
त्रिरात्रोपोषितेनाथ एकरात्रोषितेन वा ॥१६
द्विजातीनां तु कथितं तीर्थानामिह सेवनम् ।
यस्य वाङ्मनसी शुद्धे हस्तपादौ च संस्थितौ ।
अलोलुपो ब्रह्मचारी तीर्थानां फलमाप्नुयात् ॥१७
स्वामितीर्थं महातीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र सन्निहितो नित्यं स्कन्दोऽमरनमस्कृतः ॥१८
स्नात्वा कुमारधारायां कृत्वा देवादितर्पणम् ।
आराध्य षण्मुखं देवं स्कन्देन सह मोदते ॥१९
नदी त्रैलोक्यविख्याता ताम्रपर्णीति नामतः ।
तत्र स्नात्वा पितॄन् भक्त्या तर्पयित्वा यथाविधि ।
पापकर्तॄनपि पितॄंस्तारयेन्नात्र संशयः ॥२० ब्रं २.२७.२२

---

स्वर्गलोक°, दे1 3 4 8-10 न1 ग्र3 मुबं मुए मुब सर्वलोक° (→तीर्थं स्वर्ग°), द1 सर्वलोके मतिप्रदम्, म1 उ1 सर्वलोका भयप्रदम् –c) दे1 3 8-10 न1 मुबं मुए. मुब विन्दते, दे4 व1 ग्र2 म1 उ1 लभते (→विन्दति) –d) दे6 द्विजोत्तम, उ1 द्विजोत्तमा (→द्विजोत्तम)

१० तै1 ○ –a) उ1 क्तन * ले (→कनखल) –c) द1 ग्र2 म1 उ1 तत्र (→यत्र) –d) का1 यागो (→यज्ञो)

११. तै1 ○ –a) व1 यत्र (→तत्र) –b) द1 म1 उ1 भक्ति°, ग्र2 भस्म° (→भाव°) –d) दे1 8 9 मुबं मुए मुब ब्रह्मलोके (दे1 8 9 °क) वसेन्नर, दे3 4 10 द1 ग्र2 व1 ब्रह्मलोक लभेन्न (दे3 न°) रः म1 ब्रह्मलोक व्रजेन्नर

१२ व2 तै1 ○ –d) का1 मुबं मुए स गच्छति, दे4 हि गच्छति (→निगच्छति), दे1 श्वेतद्वीपे तु गच्छति

१३ तै1 ○ –b) दे6 नाम्ना (→नाम्ना) –c) दे1 8 9 म1 मुबं मुए मुब यत्र (→तत्र) –d) दे4 प्रियतो (→दयितो)

१४ व1 2 तै1 ⊙ –a) दे4 सन्निहिते रुद्रे (→सन्निहितो रुद्रो) –b) न1 सदेश्वर (→महेश्वर), दे4 देवस्य सहमेश्वर –c) व3 दे5 ग1 स्नान (→स्नान-) –d) दे1 8 9 मुबं. मुए मुब दत्तं, दे10 तद(?), उ1 कुल (→कृत)

१५ तै1. ○, व2 ab ⊙ –a) दे3 तत्र गोदावरी पुण्या, न1 गोदावरी नदी पुण्या –b) का1 व3 दे4 6 द1 ग्र2 म1 उ1 °विनाशिनी, दे1 3 10 न1 मुबं. मुए. °प्रणाशिनी (व1 °नी), मुब °प्रणाशनी (→°विनाशनी) –d) व1 तथा विधि, व2 यथाविधि, दे1 10 उ1 यथाविधि (→यथाविधि).

१६ तै1 ○, व1 cf ⊙ –a) ग्र2 °फलदा (→°सलिला) –b) दे3 विश्रुता°, न1 विमला° (→विपुला°), –c) दे6 तस्या, ग्र2 उ1 तस्य (→तस्या), व2 स्नानादिक, दे6 स्नातोदक (→स्नात्वोदक), दे4 पीत्वा (→कृत्वा) –f) दे4 एकरात्रोषितोऽपि वा

अत पर व2 3 पुस्तकयोरधिकम्—

32 *विमुक्त सर्वपापेभ्यो रुद्रसालोक्यमाप्नुयात् ।

१७ व1 तै1 ○, द1 ab ⊙ –a) ग्र2 म1 उ1 समुद्दिष्ट (→तु कथित) –b) दे4 हि श सेवनम्, ग्र2 म1 उ1 इह पावनम् (→इह सेवनम्) –c) ग्र2 च1 तस्य (→यस्य), मुब वाङ्मनसे (→वाङ्मनसी), दे8 शुद्धौ, ग्र2 शुद्धो (→शुद्धे) –d) द1 ग्र2 म1 उ1 यस्य (→हस्त-), व2 दे1 3 8 9 द1 ग्र2 म1 उ1 मुए मुब संयतौ, दे10 संयुतौ (→संस्थितौ)

१८ व1 तै1 ○ –a) दे6 स्वामि तीर्थं (→स्वामितीर्थं), द1 ग्र2 म1 उ1 महापुण्य (→महातीर्थं) –d) व2 स्कन्दा नाम° (→स्कन्दोऽमर°)

१९ व1 तै1 ○ –a) व2 कुमारगाराख्य (→कुमारधारायां) –c) दे4 आराध्या (→आराध्य).

२० व1 तै1 ○ –a) दे4 °विख्यातां (→°विख्याता). –b) न1 ताम्रपर्णीति, द1 ग्र2 म1 उ1 कृष्णवेणीति (→ताम्रपर्णीति) –d) व1 दे8 10 उ1 यथाविधि (→यथाविधि).

वें.१.३७.२३ चन्द्रतीर्थमिति ख्यातं कावेर्याः प्रभवेऽक्षयम् ।
तीर्थे तत्र भवेद् वस्तुं मृतानां स्वर्गतिर्ध्रुवा ॥२१
विन्ध्यपादे प्रपश्यन्ति देवदेवं सदाशिवम् ।
भक्त्या ये ते न पश्यन्ति यमस्य सदनं द्विजाः ॥२२
देविकायां वृषो नाम तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वोदकं दत्त्वा योगसिद्धिं च विन्दति ॥२३
दशाश्वमेधिकं तीर्थं सर्वपापविनाशनम् ।
दशानामश्वमेधानां तत्राप्नोति फलं नरः ॥२४
पुण्डरीकं महातीर्थं ब्राह्मणैरुपसेवितम् ।
तत्राभिगम्य युक्तात्मा पौण्डरीकफलं लभेत् ॥२५
तीर्थेभ्यः परमं तीर्थं ब्रह्मतीर्थमिति श्रुतम् ।
ब्रह्माणमर्चयित्वा तु ब्रह्मलोके महीयते ॥२६
सरस्वत्या विनशनं प्लक्षप्रस्रवणं शुभम् ।
व्यासतीर्थं परं तीर्थं मैनाकं च नगोत्तमम् ।
यमुनाप्रभवं चैव सर्वपापविशोधनम् ॥२७
पितॄणां दुहिता देवी गन्धकालीति विश्रुता ।
तस्यां स्नात्वा दिवं याति मृतो जातिस्मरो भवेत् ॥२८
कुबेरतुङ्गं पापघ्नं सिद्धचारणसेवितम् ।
प्राणांस्तत्र परित्यज्य कुबेरानुचरो भवेत् ॥२९
उमातुङ्गमिति ख्यातं यत्र सा रुद्रवल्लभा ।
तत्राभ्यर्च्य महादेवीं गोसहस्रफलं लभेत् ॥३०

२१. ब1 ते1. ⊙. –b) ब3 कावेर्याश्च भवक्षय, दे4 कैवेद्या प्रमवाक्षय. –c) दे1 8-10 द1 मुव. मुए मुब. तीर्थं (→तीर्थे); दे3 तच्च (→तत्र); ब2 हृत्यं, दे1 4 8-10 द1 ग्र2 म1 उ1 मुवॅं मुए. मुब दत्त, दे3 नित्यं (→वस्तुं) –d) न1 स्मृताना (→मृतानां); का1 दे2 च गतिर्ध्रुवा, ब2 स्वर्गतिप्रदम, दे1 3 4 8-10 द1 ग्र2 म1 उ1 मुवॅं मुए. मुब सद्गतिप्रदम्, दे6 स्वर्गतिध्रुव (→स्वर्गतिर्ध्रुवा)

२२. न1 ते1 ⊙, ग्र2 bc ⊙ –a) ब1 ग्र2 म1 उ1 विधूय पाप पश्यन्ति –b) दे6 सदाशिवम् (→सदाशिवम्) –c) का1 भक्त्या तु ये न, दे2 8-10 मुवॅं. मुए भक्ता ये तेन, ब3 सद्भक्तास्तेन, दे4 भक्त्या ये न प्र-, न1 भक्त तीर्थे न, द1 भक्ता ये तु न, म1 उ1 भक्त्या ये तु न (→भक्त्या ये ते न). –d) का1 ब3 दे1 2 4 6 8-10 न1 उ1 मुवॅं. मुए मुब वदन (→सदन)

२३. ब1 ते1. ⊙. –a) दे0 देवकायां (→देविकायां); दे3 वृषो, दे4 वृषा (→वृषो) –c) दे1 6 8-10 न1 मुवॅं मुए मुब कृत्वा, द1 ग्र2 म1 उ1 पीत्वा (→दत्त्वा)

२४. ते1 ⊙ –a) दे4 (त) दशाश्व° (→दशाश्व°); प1 पुण्य, +तीर्थं (→तीर्थं) –b) बे1 3-10 मुवॅं मुए °विनाशकम्, बे3 °प्रणाशन (→°विनाशनम्). –d) ब3 तत्र तीर्थे, दे3 म1 तत्प्राप्नोति, म1 सवाप्नोति (→तत्राप्नोति), द1 ग्र2 म1 उ1 बहु (→नर).

२५ ते1 ⊙ –a) दे1 6 8 9 मुवॅं. मुए मुब. तथा-तीर्थं, दे6 तथा तीर्थं, दे10 यथा तीर्थं (→महातीर्थं). –b) का1 ब2 3 दे1-3 6 8 9 मुवॅं. मुए मुब. उपशोभितम् (→उपसेवितम्), दे4 ब्राह्मणश्रयसेवितम्. –c) ग्र2 युक्ताना (→युक्तात्मा) –d) दे1 2 4 6-10 न1 द1 ग्र2 उ1 मुवॅं. मुए. पुण्डरीक° (→पौण्डरीक°)

२६. ब1 ते1 ⊙. –a) द1 तत्रैव (→तीर्थेभ्य). –b) दे1 8-10 उ1 मुव. मुए. स्मृतम् (→श्रुतम्); द1 भतिपुण्यतम, ग्र2 म1 ब्राह्म (म1 °ह्म') पुण्यतमं स्मृतम् (म1 शुभम्) –c) दे1 4 मुवॅं. मुए मुब [म] भ. दे10 च (→तु), द1 महुभ्यर्तर्पयित्वा तु, ग्र2 म1 उ1 ब्र(म1 ब्रा°)ह्मणास्तर्पयित्वा तु

२७ दे2 ते1 ⊙. –a) ब1 दे4 सरस्वत्या (→सरस्वत्या), द1 ग्र2 उ1 सरस्वत्यापि सन्दर्शं, म1 सरस्वत्यापि सस्पृष्ट. –b) का1 दे6 प्राक्ष प्रश्रवण, व1 3 दे3 न1 प्लक्ष प्रस्रवण, ब2 प्लक्षैकाप्रगण, ग्र2 उ1 प्लक्षप्रस्रवण (→प्लक्षप्रस्रवण) –c) दे1 8-10 मुवॅं मुए मुब इति ख्यातं, द1 ग्र2 म1 उ1 महातीर्थं (→पर तीर्थं) –d) दे1 3 8-10 न1 द1 म1 मुवॅं. मुए मुब मैनाकमच (→मैनाक च), दे1 3 8-10 न1 द1 ग्र2 म1 उ1 मुवॅं मुए. मुब नगोत्तम (→नगोत्तमम्). –e) दे1 3 8-10 न1 मुवॅं मुए. मुव. °प्रभवश्चैव, द1 ग्र2 म1 उ1 °सभवाच्चैव (→°प्रभव चैव) –f) दे1 8-10 मुवॅं मुए मुब °विनाशन, म1 °विशोधन, ग्र2 °विमोचन (→°विशोधन)

२८. दे2 ते1 ⊙. –a) का1 गन्धकालेति, दे4 गधकारीति, द1 गणशाति-, म1 गणकालीति (→गन्धकालीति) –c) ब2 3 दे4 8-10 मुए. मुब. दिवं याति, द1 ग्र2 म1 उ1 शिव यान्ति (म1 उ1 °ति) (→°दिवं याति) –d) ब1 यातिस्मृतो (→जातिस्मरो)

२९. दे2 ⊙; ते1 a ⊙. –b) ब1 सिद्धगन्धर्व° (→सिद्धचारण°) –c) ते1 परित्यक्त्वा (→परित्यज्य)

३०. दे2. ⊙ –a) ब3 दे8 उमामार्ग (→उमातुङ्ग). –b) दे4 परमा देववल्लभा –c) का1 ब2 ब1 ब3 उ1 महादेवं (→महादेवीं).

भृगुतुङ्गे तपस्तप्तं श्राद्धं दानं तथा कृतम् ।
कुलान्युभयतः सप्त पुनातीति श्रुतिर्मम ॥३१

काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम् ।
तत्र श्राद्धानि देयानि नित्यं पापक्षयेच्छया ॥३२

दशार्णायां तथा दानं श्राद्धं होमस्तथा जपः ।
अक्षयं चाव्ययं चैव कृतं भवति सर्वदा ॥३३

तीर्थं द्विजातिभिर्जुष्टं नाम्ना वै कुरुजाङ्गलम् ।
दत्त्वा तु दानं विधिवद् ब्रह्मलोके महीयते ॥३४

वैतरण्यां महातीर्थे स्वर्णवेद्यां तथैव च ।
धर्मपृष्ठे च सरसि ब्रह्मणः परमे शुभे ॥३५

भरतस्याश्रमे पुण्ये पुण्ये श्राद्धवटे शुभे ।
महाह्रदे च कौशिक्यां दत्तं भवति चाक्षयम् ॥३६

मुञ्जपृष्ठे पदं न्यस्तं महादेवेन धीमता ।
हिताय सर्वभूतानां नास्तिकानां निदर्शनम् ॥३७

अल्पेनापि तु कालेन नरो धर्मपरायणः ।
पाप्मानमुत्सृजत्याशु जीर्णां त्वचमिवोरगः ॥३८

नाम्ना कनकनन्देति तीर्थं त्रैलोक्यविश्रुतम् ।
उदीच्यां मुञ्जपृष्ठस्य ब्रह्मर्षिगणसेवितम् ॥३९

तत्र स्नात्वा दिवं यान्ति सशरीरा द्विजातयः ।
दत्तं चापि सदा श्राद्धमक्षयं समुदाहृतम् ।
ऋणैस्त्रिभिर्नरः स्नात्वा मुच्यते क्षीणकल्मषः ॥४०    मे.३.५५.४१

३१. दे2. ⊙. -a) दे1 तपस्तप्तम्, ते1 तपस्तप्त्वा (→तपस्तप्तं) -b) ब2 दान श्राद्ध, द1 ग्र2 म1 उ1 तर्प श्राद्ध (→श्राद्धं दानं). -c) ते1 ग्र2 तत्र (→सप्त). -d) दे1.8.9 मुवॅ मुए. मुब मतिर् (→श्रुतिर्).

३२. व1 दे2. ⊙ -b) दे8 कालसर्पिणी (रि)ति, दे9 कालसर्पिमिति, ग्र2 ** सर्पिरिति (→कालसर्पिरिति); ते1 कालसर्पं इति श्रुति.

३३. दे2. ⊙ -a) का1 ब्रह्मणाना द1 म1 उ1 दशार्णाना (→दशार्णायां), ब2 श्राद्धं (→दानं) -b) पा1 दे1 होम तथा, व1 2 दे4 द1 ग्र2 उ1 होमस्तपो, दे1 8-10 न1 म1 मुवॅ मुए. मुब होमं तपो (→होमस्तथा), न1 जप (→जपः). -c) दे1 चाक्षय (→चाव्ययं). -d) का1 व1.3 दे8 न1 ते1 दत्त, ब1 दत्ते (→कृतं), न1 तारति (→भवति); का1 व1-3 दे8 ते1 नान्यथा (→सर्वदा)

३४. व1 दे2 ⊙ -b] ब3 ते1 नाम वै, दे4 नाम्ना च (→नाम्ना वै) -c) ब2 दे8 न1 मुब दत्वात्र, दे4 द1 ग्र2 म1 उ1 दत्वा च (→दत्त्वा तु); ग्र2 म1 उ1 विविधं (→विधिवद्), का1 दत्वा दानं च विधिवद्, दे3 सनान विधिवद्दत्वा.

३५. व1. ⊙; दे4. ३५c-३६d ⊙ (८ ग्र.). -a) दे8 9 वैतरण्या, ग्र2 वैतरण्य (→वैतरण्यां), दे1 4 द1 ग्र2 म1 महातीर्थं (→महातीर्थे) -b) का1 व3 दे2 ते1 द1 ग्र2 म1 उ1 स्वर्णवत्यां, दे8 स्वर्णवरप (→स्वर्णवेद्यां); दे3 स्वर्णरेखास्वपीव च. -c) दे1 8 9 मुए मुब. ब्रह्मपृष्ठे (→धर्मपृष्ठे); व1 दे1 8-10 ब2 ते1 मुवॅ. मुए मुब. शिरसि, दे1 परमं, द1 सरसि, ग्र2 सरित, म1 विपुलं (→सरसि). -d) ग्र2 ब्रह्मणो (→ब्रह्मणः); म1 परमं शुभम (→परमे शुभे); दे3 ब्रह्मणस्तीर्थमुत्तमं.

३६. दे4. ○. -b) व3 क्षेमे, दे3 ** (→पुण्ये); का1 शुक्लवटे, दे1 गृध्रे वने, दे3 दारुवने, दे8-10 न1 मुवॅ मुए मुब गृध्रवने (न1 °टे), द1 ग्र2 म1 उ1 पुण्यवने (→श्राद्धवटे), ते1 ** श्राद्ध(व)मुशोभने -c) ग्र2 महादेवेश, दे1 महाह्रदे च, दे8 महागदेव, द1 महार्हदेव-, ग्र2 म1 महादेवस्य (→महाह्रदे च).

३७. व1. ⊙ -a) दे2 8-10 न1 मुवॅ. मुए मुब (दे8-10 °ण्डा) पृष्ठे, द1 ग्र2 म1 उ1 सोमपृष्ठे (→मुञ्जपृष्ठे), दे8 पृष्ठ (→न्यस्तं) -b) म1 शम्भुना (→धीमता) -c) का1 हिताय (→हिताय). -d) द1 ग्र2 नास्तिकाय (→नास्तिकानां), न1 नास्तिका नातिदर्शनम्

३८. व1 ○ -a) दे4 ते1 मन्येनापि (→अल्पेनापि), का1 हि. दे3 द1 ग्र2 म1 च (→तु) -c) ब2 3 दे2 8 न1 ते1 उत्सृजत्यत्र, दे4 उ1 उत्सृजत्याव, मुब उत्सृजेद् यत्र (→उत्सृजत्याशु), का1 पाप्मानमाशु तत्यजे.

३९. व1. ⊙. -a) ब2 कनकलक्ष्यैव, व3 कनकनन्दमिति, दे8 कनकलं स्येति, न1 कनकनां देवि, ग्र2 ** कनन्दयौ (→कनकनन्देति). -b) ग्र2 तीर्थं त्रैलोक्य नाम विश्रुतम् -c) ब2 उदिची, व3 दे8 उदीच्य, ग्र2 उदीच्या (→उदीच्यां), दे2 8-10 मुवॅ. मुए ब्रह्मपृष्ठस्य, न1 मुञ्जपृष्ठस्य, ग्र2 मुञ्जपृष्ठाय (→मुञ्जपृष्ठस्य).

४०. व1. ⊙. -a) दे1 8 म1 यान्ति (→यान्ति) -b) ग्र2 म1 सशरीरं, मुब. पूर्णीता वा (→सशरीरा). -c) दे1-4 8 9 ते1 द1 मुवॅ. मुए. मुब. वापि (→चापि); दे4 उ1 तथा ग्र2 तत्र (→सदा). -d) दे1 10 प्रसाद्य (→प्रसाद). -f) ब2

वें.२.३७.४४ मानसे सरसि स्नात्वा शक्रस्यार्द्धासनं लभेत् ।
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥४१
तस्मान्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ।
कामान् स लभते दिव्यान् मोक्षोपायं च विन्दति ॥४२
पर्वतो हिमवान्नाम नानाधातुविभूषितः ।
योजनानां सहस्राणि सोऽशीतिस्त्वायतो गिरिः ।
सिद्धचारणसंकीर्णो देवर्षिगणसेवितः ॥४३
तत्र पुष्करिणी रम्या सुषुम्ना नाम नामतः ।
तत्र गत्वा द्विजो विद्वान् ब्रह्महत्यां विमुञ्चति ॥४४
श्राद्धं भवति चाक्षय्यं तत्र दत्तं महोदयम् ।
तारयेच्च पितॄन् सम्यग् दश पूर्वान् दशापरान् ॥४५

सर्वत्र हिमवान् पुण्यो गङ्गा पुण्या समन्ततः ।
नद्यः समुद्रगाः पुण्याः समुद्रश्च विशेषतः ॥४६
बदर्याश्रममासाद्य मुच्यते कलिकल्मषात् ।
तत्र नारायणो देवो नरेणास्ते सनातनः ॥४७
अक्षयं तत्र दानं स्यात् जप्यं वाऽपि तथाविधम् ।
महादेवप्रियं तीर्थं पावनं तद् विशेषतः ।
तारयेच्च पितॄन् सर्वान् दत्त्वा श्राद्धं समाहितः ॥४८
देवदारुवनं पुण्यं सिद्धगन्धर्वसेवितम् ।
महादेवेन देवेन तत्र दत्तं महद् वरं ॥४९
मोहयित्वा मुनीन् सर्वान् पुनस्तैः संप्रपूजितः ।
प्रसन्नो भगवानीशो मुनीन्द्रान् प्राह भावितान् ॥५०

---

घोरकल्मश, तै1 द1 प्र2 क्षीणकिल्बिष, उ1 सर्वकल्मषं (→क्षीणकल्मष)

४१ व1 ⊙ –a) दे10 मनसे (→मानसे). –b) वे1 शक्रस्य भवन, प्र2 शक्रस्यार्द्धफल (→शक्रस्यार्द्धासन), उ1 भवेत् (→लभेत्) –c) तै1 स्नात्वा (→गत्वा)

४२. व1, ⊙, ब2 cd ○ –a) ब2 3 दे2 3 ना1 वे1 मुब तस्मिन् (→तस्मात्), ब3 निवर्पयेत्, दे2 4 9 निवर्तयेत् (→निर्वर्तयेत्); ना1 श्राद्धे (→श्राद्ध), द1 ग1 उ1 तस्मिन्नेव हित (द1 °ते) श्राद्ध, प्र2 तस्मिन्नेव कृतश्राद्ध –b) उ1 °फल (→°यनम्). –c) दे1,8-10 म1 मुर्वं मुए मुब स कामान् (→कामान् स), दे4 विद्वान् (→दिव्यान्) –d) म1 सोमलोक म विन्दति

४३ दे4 c-f ○ –a) दे6-10 हिमवन्नाम (→हिमवान्नाम) –b) दे3 °विचित्रित (→°विभूषित), दे4 शंसराजस्तु नामत –c) तै1 सहस्राणा (→सहस्राणि) –d) का1 शाशीतिम्, दे1 8-10 म1 मुर्वं मुए, मुब साशीतिम्, द1 प्र2 उ1 योशीतिम् (→सोऽशीतिम्); दे3 स्पीयते, वे 0 स्वायते, उ1 स्पायते (→स्त्वायतो) –e) प्र2 °मदीर्णो, + °गगर्व (→°संकीर्णो) –f) का1 ब1 3 दे2 6 ग1 उ1 °नयुग (→°सेवित)

४४ दे4 ab ○ –a) ब1 ग1 पुष्करणी, प्र2 पुष्करिणी (→पुष्करिणी) –b) का1 सुषुप्ता, ब2 3 स्वपुण्या, दे1 8 सुपुण्या, दे8 9 सुपुन्ना (→सुषुम्ना) –d) द1 प्र2 उ1 व्यपोहति (→विमुञ्चति)

४५ व1 ○, दे1 3 8 10 द1 प2 म1 ab ○ –b) का1 यत्र (→तत्र) –d) ना1 दशोत्तरान्, द1 दशात्तरान् (→दशापरान्)

४६ व1 ○ –a) प्र2 सर्वत्र (→सर्वत्र) –b) म1 सनातन (ना) (→समन्ततः) –c) ना1 सद्य (→नद्य) –d) का1 ब2 3 दे3 4 6 ना1 तै1 समुद्राश्च (→समुद्रश्च), का1 ब2 3 दे2 8 ग1 तै1 द्विजोत्तमा. (→विशेषतः.)

४७ –b) द1 प2 उ1 मुमुचे (→मुच्यते), का1 ब2 3 दे3 कलिकिल्बिषात्, दे1 8 10 मुर्वं मुए मुब सर्वकिल्बिषात् (→कलिकल्मषात्) –d) का1 सुसंयुत, दे2 8 समन्तत (→सनातन), ब2 3 नरश्चास्ते समन्ततः

४८ व1 ○, –a) द1 म1 उ1 दत्त, प2 जप्त्वा (→दान) –b) दे3 जप चापि, ना1 जप्य चापि, द1 उ1 जप्त वापि, प्र2 दत्तञ्चापि (→जप्य वापि), दे1 8-10 मुर्वं मुए मुब श्राद्धदानादिकञ्च यत्, दे4 जप्य चापि यथाविधि, म1 दत्तञ्चापि तथाक्षय –d) प2 पावन तन्निषेवित, उ1 पाप नैव विशोधित –e) म1 देवान् (→सर्वान्) –f) का1 समतन, दे4 समन्वित, प्र2 म1 उ1 विशेषत (→समाहित), द1 दशपूर्वान् दशोत्तरान्

अत परम् दे4 पुस्तके सर्वं वाच्यमसमञ्जसं लिख्यते—
इति श्रीकूर्मपुराणे पञ्चत्रिंशोऽध्यायः ।

४८ श्लोकात्परं द1 अधिकम्—
* सर्वत्र हिमवान् पुण्यो गङ्गा पुण्या समन्ततः ।
नद्यः समुद्रगाः पुण्याः दत्त्वा श्राद्धं विशेषतः ।
(=४६abc, ४८d)

४९ –a) दे1 8-10 म1 मुर्वं मुए मुब महता देवदेवेन, –d) का1 दे3 महद्वन, ब1 महत्तर, प्र2 मुब महाफल, ब3 महद्वन्, दे1 8 9 मुर्वं मुए महेश्वरम्, दे8 10 महद्वनं (→महद्वर)

५०. दे3 cd ○ –a) दे3 पितॄन्, दे4 पुरा (→मुनीन्) –b) दे1 मनस्तै, मुर्वं मुए मुब. नमस्तै (→पुनस्तै), का1

इहाश्रमवरे रम्ये निवसिष्यथ सर्वदा ।
मद्भावनासमायुक्तास्ततः सिद्धिमवाप्स्यथ ॥५१
येऽत्र मामर्चयन्तीह लोके धर्मपरा जनाः ।
तेषां ददामि परमं गाणपत्यं हि शाश्वतम् ॥५२
अत्र नित्यं वसिष्यामि सह नारायणेन च ।
प्राणानिह नरस्त्यक्त्वा न भूयो जन्म विन्दति ॥५३
संस्मरन्ति च ये तीर्थं देशान्तरगता जनाः ।
तेषां च सर्वपापानि नाशयामि द्विजोत्तमाः ॥५४
श्राद्धं दानं तपो होमः पिण्डनिर्वपणं तथा ।
ध्यानं जपश्च नियमः सर्वमत्राक्षयं कृतम् ॥५५
तस्मात् सर्वप्रयत्नेन द्रष्टव्यं हि द्विजातिभिः ।
देवदारुवनं पुण्यं महादेवनिषेवितम् ॥५६
यत्रेश्वरो महादेवो विष्णुर्वा पुरुषोत्तमः ।
तत्र सन्निहिता गङ्गा तीर्थान्यायतनानि च ॥५७ वें.२.१.७.६१

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे षट्त्रिंशोऽध्यायः ॥३६॥

---

सर्वा यस्ते प्रपूजित, दे3 दत्वा श्राद्ध समाहित –c) दे8 प्रसतो (→प्रसन्नो), उ1 हि मवान्नीशो (→भगवानीशो) –d) दे4 भागितान् (→भावितान्)

५१ –a) दे4 महाश्रम (→इहाश्रम), दे10 उ1 पुण्ये (→रम्ये), दे3 देवदारुवन पुण्यं, द1 इहास्ते मन्दरे रम्ये प्र2 इहास्ते पर्वते पुण्ये, म1 इहास्ते मन्दरे पुण्ये –b) दे4 8 9 निवसिष्येथ, दे1 निवीधेष्यथ, उ1 निवसत्यथ (→निवसिष्यथ) –c) दे3 महद्भावि॰, प्र2 मद्भावन, म1 सद्भावना- (→मद्भावना-), दे8 सद्भावमानसा युक्ता –d) दे4 प्रवाप्स्यसि (→मवाप्स्यथ)

५२ –a) का1 दे3 4 8 10 न1 द1 मुर्ब मुए मुव यत्र, ते1 ये तु (→येऽत्र), द1 प्र2 म1 उ1 मर्चयन्ति स्म (→मर्चयन्तीह), दे3 मत्र येऽभ्यर्चयन्तीश –b) दे1 3 4,6 8 10 द1 प्र2 म1 उ1 मुर्ब मुए मुव ॰परायणा (वे6 ॰ण) (→॰परा जना) –c) दे2 धारयामि, दे3 द1 ददाति (→ददामि) –d) दे1 9 द1 प्र2 म1 उ1 गाणापत्य (→गाणपत्य)

५३ –a) द1 उ1 तत्र (→अत्र), दे3 निवसति (→वसिष्यामि) –b) दे1 8 10 मुर्ब मुए मुव तु, दे4 वा (→च) –d) द1,8 10 मुव मुए मुर प्राप्नुयात् दे3 द1 प्र2 म1 उ1 विन्दते (→विन्दति)

५४ –a) का1 व1-3 दे2 6 न1 ते1 सस्मरिष्यन्ति (→संस्मरन्ति च), द1 यत्तीर्थं (→ये तीर्थं) –b) व1 देशान्तरगतो, दे4 देवान्तरगता (→देशान्तरगता), च1 जन, प्र2 द1 प्र2 म1 उ1 नरा (→जना) –d) दे3 नाशयामि (→नाशयामि), का1 दे4 द्विजोत्तमा (दे4 ॰म) (→द्विजोत्तमाः)

५५ प्र1 ○, दे5 cd ○ –a) दे1 6 जपो, द1 उ1 तथा (→तपो), दे4 द1 प्र2 होम (→होमः) –b) का1 म2 दे1 1 ॰निवपनं, दे8 ॰निर्वापनं, म1 ॰देवापन, म1 उ1 ॰निर्वापणं (→॰निर्वपणं) –c) का1 व3 दे3 6 न1 ते1 तपश्च, म2 तपस्था, उ1 तप च (→जपश्च), द1 म1 उ1 नियमा (→नियम) –d) का1 दे1 द1 सर्वमत्राक्षय, म2 सर्वमत्राक्षय (→सर्वमत्राक्षयं), दे10 म1 भवेत् (→कृतम्), ते1 सर्वं यत्कृतं- मक्षयम

अत पर दे3 b,c मध्ये अधिकम्—

53 * सर्वमत्राक्षयतां याति शिवानुग्रहतो द्विजा ।

५६ दे3 ○ –a) दे8 तत्र (→सर्व॰)

५७ –a) दे4 य ईश्वरा (→यत्रेश्वरो) –b) म1 विष्णुना (→विष्णुर्वा), व1 पुरुषोत्तमा (→पुरुषोत्तम) –c) न1 गङ्गा (→गङ्गा)

पुष्पिका—[दे4 पुस्तके अध्यायसमाप्तिर्नास्ति, अस्य अध्यायस्य ४८ श्लोकानन्तरमेवाध्यायसमाप्तिर्जाता]

पुराणनाम—का1 दे8-10 द1 प्र2 उ1 मुए इति श्रीकूर्मपुराणे उपरि(मुए वि)भागे, श1 इत्यादिकौर्मे महापुराणे उपरिभागे, व2 3 दे2 म1 इति कू(दे2 श्री)र्मपुराणे उपरिभागे दे1 इति श्रीकूर्मपुराणे उपरिविभागे, दे3 8 म1 इति श्रीकूर्मपुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे उपरिभागे, मुर्ब इति श्रीकूर्मपुराणे उत्तरार्द्धे, मुव इति श्रीकौर्मे महापुराणे उपरिभागे

अध्यायनाम—का1 व1 3 दे3 8 न1 द1 म1 उ1 ○, दे1 8-10 तीर्थवर्णने, दे3 पुण्यायतनवर्णनं, ते1 तीर्थमाहात्म्य, प्र2 तीर्थप्रशंसायां, मुर्ब, मुए तीर्थवर्णनं नाम, मुव तीर्थोपाख्याने

अध्यायसंख्या—प्र2 दे8 ○, का1 व1 3 दे2 पञ्चत्रिंशोऽध्यायः, दे1 3 8 9 द1 प्र2 म1 मुए सप्तत्रिंशोऽध्यायः, दे10 सप्तत्रिंशो ऽध्याय ॥३७॥ श्रीराम, न1 सप्तत्रिंशोऽध्यायः, ते1 षट्त्रिंशोऽध्याय, उ1 सप्तत्रिंशोऽध्याय ॥४७॥, मुर्ब, सप्तत्रिंशो- ऽध्याय ॥३७॥, मुव, षट्त्रिंशोऽध्याय ॥३६॥.

# ३७

ऋषय ऊचुः ।ॐ

वे.२.३८.१ कथं दारुवनं प्राप्तो भगवान् गोवृषध्वजः ।
मोहयामास विप्रेन्द्रान् सूत वक्तुमिहार्हसि ॥१

सूत उवाच ।ॐ

पुरा दारुवने रम्ये देवसिद्धनिषेविते ।
सपुत्रदारा मुनयस्तपश्चेरुः सहस्रशः ॥२
प्रवृत्तं विविधं कर्म प्रकुर्वाणा यथाविधि ।
यजन्ति विविधैर्यज्ञैस्तपन्ति च महर्षयः ॥३
तेषां प्रवृत्तिविन्यस्तचेतसामथ शूलधृक् ।
ख्यापयन् स महादोषं ययौ दारुवनं हरः ॥४
कृत्वा विश्वगुरुं विष्णुं पार्श्वे देवो महेश्वरः ।
ययौ निवृत्तविज्ञानस्थापनार्थं च शंकरः ॥५
आस्थाय विपुलं वेशमूनविंशतिवत्सरः ।
लीलालसो महाबाहुः पीनाङ्गश्चारुलोचनः ॥६
चामीकरवपुः श्रीमान् पूर्णचन्द्रनिभाननः ।
मत्तमातङ्गगमनो दिग्वासा जगदीश्वरः ॥७
कुशेशयमयीं मालां सर्वरत्नैरलंकृताम् ।
दधानो भगवानीशः समागच्छति सस्मितः ॥८

---

३७

ॐ दे$_1$ ऋषय ऊचुः, न$_1$ प्र$_2$ म$_1$ उ$_1$ ऋषय, ते$_1$ ऋषय, + श्रीशिव, द$_1$ श्रीऋषय ऊचु

१ –a) का$_1$ ब$_{1-3}$ दे$_{3\,4\,8}$ न$_1$ ते$_1$ °वने देवो, दे$_3$ °वने प्राप्तो, दे$_{10}$ °वने देव (→°वनं प्राप्तो) –b) द$_1$ म$_1$ उ$_1$ वृषभध्वज (→गोवृषध्वज), दे$_{10}$ रम्ये सिद्धनिषेविते –c) ब$_3$ विप्रेन्द्रा (→विप्रेन्द्रान्), दे$_{10}$ सपुत्रदारतनया –d) दे$_{3\,8\,9}$ मुवें मुए मुव सूत तद्वक्तुमर्हसि दे$_{10}$ तपश्चैरु सहस्रश

ॐ दे$_{10}$ O, दे$_{8\,9}$ सूत उ, न$_1$ ते$_1$ प्र$_2$ म$_1$ उ$_1$ सूत

२ –a) का$_1$ पुण्ये (→रम्ये) –b) ब$_1$ सिद्धगन्धर्वसेविते –c) दे$_1$ प्र$_2$ मुवें मुए °दारतनयास् दे$_{10}$ दारतनया (→°दारा मुनयस्) –d) दे$_4$ ते$_1$ तपस्तेपु, दे$_{10}$ तपश्चैरु (→तपश्चेरु)

३ –b) दे$_4$ प्रकुर्वाणो, द$_1$ प्र$_2$ म$_1$ उ$_1$ कुर्वाणश्च (→प्रकुर्वाणा), ब$_3$ दे$_{10}$ यथाविधि (→यथाविधि) –d) उ$_1$ तपर्षित (→तपन्ति च)

४ –a) का$_1$ प्रवृत्तिज्ञानाम, दे$_{1\,4\,8\,10}$ प्रवृत्तविन्यस्त-, द$_1$ प्रवृत्तविन्यस्तु (→प्रवृत्तिविन्यस्त) –b) द$_1$ -तेजसां (→-चेतसा), म$_1$ यपि (→मथ), दे$_{1\,3\,8\,9}$ न$_1$ द$_1$ प्र$_2$ म$_1$ मुवें मुए मुव शूलभृत् (→शूलधृक्), का$_1$ चेतसाम त्रिशूल धृक्, उ$_1$ चेतसाम **** –c) ब$_{2\,3}$ °देवो (→°दोष), ब$_1$ दे$_3$ ते$_1$ उ$_1$ स्थापयन् सुमहादोष, दे$_{1\,8\,9}$ मुवें मुए मुव ख्याख्यापयन् सदा दोष, दे$_{4\,10}$ स्थापयस्तु (दे$_{10}$ °स्व) महादोष, दे$_8$ स्थापयन् स महादेवो, न$_1$ स्थापयन् सुमहद्दोष, प्र$_2$ उ$_1$ कथापयन् सुमहावेष –d) ब$_{2\,3}$ दे$_2$ ययौ दारुवने, द$_1$ प्र$_2$ म$_1$ उ$_1$ देवदारुवने (→ययौ दारुवनं).

५ दे$_8$ O, प्र$_2$ cd O –a) द$_1$ प्रथ (→कृत्वा) –b) दे$_{10}$ पार्श्वदेवो, न$_1$ पार्श्वो देवो (→पार्श्वे देवो) –c) दे$_4$ ते$_1$ निवृत्ति° (→निवृत्त°)

६ प्र$_2$ O, दे$_8$ ab O –a) का$_1$ दे$_4$ द$_1$ म$_1$ उ$_1$ मुव विपुल वेष, ब$_3$ विपुल देश, दे$_{1\,8\,9}$ मुवें मुए विपुल वेष, दे$_3$ विपुल देह, दे$_{10}$ विपुल वेष, न$_1$ कृत्वा वेषे, ते$_1$ विपुल विश्व (→विपुल वेश) –b) ब$_1$ उ$_1$ न्यूनविंशति-, दे$_1$ मुवें मुए जन विंशति-, दे$_3$ गूढ विंशति, दे$_4$ रूप विंशति-, दे$_{8\,9}$ जन (दे$_9$ °ने) विंशति, न$_1$ ते$_1$ म$_1$ मुन वि (ते$_1$ वि) शति, द$_1$ नून विंशति- (→ऊनविंशति), दे$_{1\,3\,8\,10}$ न$_1$ द$_1$ उ$_1$ मुवें मुए -वत्सरम्, म$_1$ -वार्षिक (→वत्सर) –c) ब$_{2\,3}$ सलालसो, दे$_{10}$ लीलालसो, ते$_1$ लालालसो, उ$_1$ लीलवासा (→लीलालसो) –d) ब$_1$ पीनाङ्गं, दे$_3$ पीतागम् दे$_8$ पीताश (→पीनाङ्गश्), दे$_2$ °लोचन (→°लोचन).

७ प्र$_2$ O –a) दे$_1$ वामीकर° (→चामीकर°) –d) ब$_2$ दे$_{3\,6}$ जगतीश्वर (→जगदीश्वर)

८ का$_1$ O –a) दे$_{1\,3\,8-10}$ द$_1$ म$_1$ उ$_1$ मुवें, मुए, मुव जलरूप°, प्र$_3$ शतानन्द° (→कुशेशय°). –c) प्र$_2$ विधानो (→दधानो) –d) दे$_4$ शमित, द$_1$ प्र$_2$ उ$_1$ सस्मित (→सस्मित).

योऽनन्तः पुरुषो योनिर्लोकानामव्ययो हरिः ।
स्त्रीवेषं विष्णुरास्थाय सोऽनुगच्छति शूलिनम् ॥९

सम्पूर्णचन्द्रवदनं पीनोन्नतपयोधरम् ।
शुचिस्मितं सुप्रसन्नं रणन्नूपुरकद्वयम् ॥१०

सुपीतवसनं दिव्यं श्यामलं चारुलोचनम् ।
उदारहंसचलनं विलासि सुमनोहरम् ॥११

एवं स भगवानीशो देवदारुवने हरः ।
चचार हरिणा भिक्षां मायया मोहयन् जगत् ॥१२

दृष्ट्वा चरन्तं विश्वेशं तत्र तत्र पिनाकिनम् ।
मायया मोहिता नार्यो देवदेवं समन्वयुः ॥१३

विस्रस्तवस्त्राभरणास्त्यक्त्वा लज्जां पतिव्रताः ।
सहैव तेन कामार्त्ता विलासिन्यश्चरन्ति हि ॥१४

ऋषीणां पुत्रका ये स्युर्युवानो जितमानसाः ।
अन्वगच्छन् हृषीकेशं सर्वे कामप्रपीडिताः ॥१५

गायन्ति नृत्यन्ति विलासबाह्या
नारीगणा मायिनमेकमीशम् ।
दृष्ट्वा सपत्नीकमतीवकान्त-
मिच्छन्त्यथालिङ्गनमाचरन्ति ॥१६

पदे निपेतुः स्मितमाचरन्ति
गायन्ति गीतानि मुनीशपुत्राः ।
आलोक्य पद्मापतिमादिदेवं
भ्रूभङ्गमन्ये विचरन्ति तेन ॥१७　वं.२.१८.१७

---

९　का1 ab ○ –a) तै1 योगी (→योनिर्) –d) का1 सोन्वगच्छच्च, दे6 सानुगच्छति, प्र2 सोऽनुगच्छत, उ1 योनुगच्छति (→सोऽनुगच्छति), मु1 3 दे8 शोभन, तै1 शवरम (→शूलिनम्)

१०　ब1 cd ○ –a) दे4 °कदमा (→°वदन) –b) दे2 3 °पयोधनं, दे4 °पयोधरा, दे10 °पयोधरौ (→°पयोधरम्), म1 पीतवस्त्र गदाधर –c) दे3 4 सुविस्मित (→शुचिस्मित), तै1 सुस्मित सुप्रसन्न च –d) दे4 चरणा नूपुरद्वय

११　ब1 ○ –a) प्र2 सुपीनवदन, म1 सुपातवदन (→सुपीतवसनं) –c) द1 प्र2 म1 उ1 उद्दाम (→उदार), दे1 3 8 10 द1 प्र2 म1 उ1 मुवें मुए मुब गमन (→ चलन) –d) च2 विशाल, दे0 विन्यास, द1 प्र3 म1 उ1 सुनास (→विलासि)

१२　तै1 ab ○ –b) दे1 3 4 6 8 10 द1 प्र2 म1 उ1 मुवें मुए मुब °वन (→°वने), प्र2 हर (→हरः) –c) द1 हरिणी (→हरिणा), दे1 8 10 मुवें मुए मुब सार्धं, दे3 4 क्षीर्णा (दे4 °र्णा), द1 प्र2 म1 उ1 भिक्ष (→भिक्षा) –d) प्र2 म1 उ1 मोहित, दे10 मोहन (→मोहयन्)

१३　–b) दे2 ** तत्र (→तत्र तत्र) –c) दे1 8 9 मोहितात्मनो, म1 उ1 मोहिता योषा (उ1 °षा), प्र2 मोहिता योषिद् (→मोहिता नार्यो)

१४　–a) का1 विस्रस्ताभरणा स्वकस्या, दे1 10 द1 मुवें मुए विस्रस्ताभरणा वासांसि, दे3 विस्रस्ताभरणा **. –b) का1 पतिव्रताः, दे1 स्वकलज्जा (→त्यक्त्वा लज्जां), दे10 त्यक्त्वा लज्जा पतिव्रता –c) दे1 चर्चारि (→कामार्त्ता).

१५　–a) का1 पुत्रका ये च, दे4 पुत्रकार्येण, द1 पुत्रकार्येण (→पुत्रका ये स्युर्) –b) दे4 युवती (→युवानो), का1 ब1-3 दे2 6 द1 म1 उ1 यत्न, तै1 हृत (→जित-), न1 वते नियतमानसा –c) दे8 9 अन्वगमन्, म1 उ1 मुवें मुए. मुब अन्वागमन्, तै1 अनुगच्छन्, द1 प्र2 म1 अभ्यगच्छन् (→अन्वगच्छन्).

१६　ब1 cd ⊙ –a) च1 3 दे8 य (दे6 ते) गोपति नृत्य- (→गायन्ति नृत्यन्ति), का1 दे1 8 9 मुवें मुए मुब. विलासयुक्ता, ब1 विलासवाक्य-, ब2 -विलासवन्तो, दे3 विलासवत्यो दे10 विलासलता, तै1 विलासवाक्य, द1 विलासयन्ति, प्र2 उ1 विलासगत्यो, म1 विलासयन्त्यो (→विलासबाह्या) –b) दे1 8 9 मुवें मुए मुब नायक (→मायिन), ब1 नारीगणा मायि *****, दे6 नारीगणान् मायिनमेकमीश द1 प्र2 म1 उ1 नारीगणाश्चापि विलासमीशम् –c) दे4 दत्वा (→दृष्ट्वा), प्र2 म1 सपत्नीक (→सपत्नीक) –d) का1 अन्विच्छयालिङ्गनं, दे1 8-10 निष्ट तथा लिग (दे1 °गि) न (दे10 °न), दे3 लिङ्गनि चालिङ्गनं, ब2 इच्छन्त्यथालिङ्गन, मुवें मुए मुब. इच्छ तथा लिङ्गित (→इच्छन्त्यथालिङ्गन), म1 इच्छत्यथालिंगन ****

१७　प1 ○, द1 ab ○, ब2 म1 a ○. –a) का1 दे2 पादे निपतु, ब3 दे8 पार्श्वे निपेतु, दे1 ते मानिनश्च, दे3 वेद निविष्ट, दे4 पदा निपेतु, दे8-10 मुवें. मुए मुब. ते शक्तिरत्य (→पदे निपेतु), दे1 सर्वे निपतस्मितमाचरन्ति. –b) प1 मुनीन्द्र° (→मुनीश°) –c) दे3 भालोक्य, म1 विलोक्य (→आलोक्य).

वें २३८ १८ आसामयैषामपि वासुदेवो
मायी मुरारिर्मनसि प्रविष्टः ।
करोति भोगान् मनसि प्रवृत्तिं
मायानुभूयन्त इतीव सम्यक् ॥१८
विभाति विश्वामरभूतभर्त्ता
स माधवः स्त्रीगणमध्यविष्टः ।
अशेषशक्त्यासनसन्निविष्टो
यथैकशक्त्या सह देवदेवः ॥१९
करोति नृत्यं परमप्रभावं
तदा विरूढः पुनरेव भूयः ।
ययौ समारुह्य हरिः स्वभावं
तदीशवृत्तामृतमाविवेशः ॥२०
दृष्ट्वा नारीकुलं रुद्रं पुत्राणामपि केशवम् ।
मोहयन्तं मुनिश्रेष्ठाः कोपं संदधिरे भृशम् ॥२१
अतीव परुषं वाक्यं प्रोचुर्देवं कपर्दिनम् ।
शेपुश्च शापैर्विविधैर्मायया तस्य मोहिताः ॥२२
तपांसि तेषां सर्वेषां प्रत्याहन्यन्त शंकरे ।
यथादित्यप्रकाशेन तारका नभसि स्थिताः ॥२३
ते भग्नतपसो विप्राः समेत्य वृषभध्वजम् ।
को भवानिति देवेश पृच्छन्ति स्म विमोहिताः ॥२४

---

१८ व1 acd O, दे4 श्र2 cd O –a) दे1 8-10 मुवें मुए भ्राशामयैका, दे6 न1 उ1 भ्राशामयैपा, द1 भाग्रामयैपा(?), मुब भ्रासास्यैका (→भ्रासामयैषा), दे4 भूत भर्त्ता, द1 श्र2 वासुदेवे (→वासुदेवो) –b) दे3 8 10 ते1 द1 श्र3 माया न1 मारी (→मायी), श्र2 महारिर, ते1 सुरारि (→मुरारिर्), व3 प्रहृष्ट, दे2 प्रविष्ट दे3 प्रविश्या, ते1 प्रतिष्ठ, द1 प्रविष्टा उ1 प्रविष्टो (→प्रविष्ट), दे1 समाधवस्त्रीगण मध्यविष्ट –c) दे10 भागान्, म1 मोहान् (→भोगान्), का1 व2 3 दे2 6 मनमोनुवृत्ति, दे3 विविधान्मनोज्ञ, न1 मनसो निवृत्तिर् ते1 मनसोपि वृत्ति, द1 मनसि प्रवृत्त (→मनसि प्रवृत्ति) –d) दे1 8 10 मायोनुभूयन्त (→मायानुभूयन्त), व3 मायानुभूतान्महतीव सम्यक, व3 मुद मायानुभूतान् स इतीव सम्यक, दे3 मायामय देहमुपेत्य सम्यक दे8 मायानुभूत वदतीव सम्यक्

१९ श्र2 O, व1 दे4 ab O –a) व2 विष्णाति (→विभाति), दे1 8 0 मुवें मुए मुब °विश्वनाथ, ते1 द1 °भूतिभर्त्ता (→°भूतभर्त्ता), दे10 विश्वाति विश्वात्परिविश्वनाथ –b) म1 °मध्यविश्रा, दे3 °सप्रविष्ट, दे8 10 मुवें मुए मुब °सन्निविष्ट (→°मध्यविष्ट), दे1 समाधवस्त्रीगणो निविष्ट –c) दे3 यथेष्ट, म1 यथेष- (→अशेष-), दे1 8-10 ते1 मुवें मुए मुब -शक्त्या समय निविष्टो, द1 शक्त्या ****** (→शक्त्यासनसन्निविष्टो) –d) ते1 यथेव सख्यो (→यथैकशक्त्या)

२० –a) का1 व1 दे1 3 8 10 श्र2 मुवें मुए मुब नित्य दे4 न1 म1 व1 नृत, ते1 नर्त्त, द1 भाव (→नृत्य); म1 दे4 ते1 म1 उ1 परम प्रभाव, दे1 3 8-10 द1 श्र2 मुवें मुए मुब परम प्रधान (→परमप्रभाव) –b) का1 व3 तदादिरूढ, दे3 तदपिरूढ, दे3 तदा विरूढ, द4 तथादिभूत, दे0 10 व1 श्र2 तदाधिरूढ, न1 तदा विरुद्ध, ते1 *****, उ1 तदादिभूत (→तदा विरूढ) –c) दे3 ययौ समालिम्य हरेरुदार. –d) म1 तदीश भूतोमृतमाविवेश, दे1 8 10 श्र3 मुवें मुए मुब तमोदश माम तमादिवेशम् दे3 मुखारविंदामृतमाविवेश, ते1 तदीशवृत्तामृत-माविवेश, द1 उ1 मदीश(उ1 °प) नृत्तामृत (उ1 भृ) तमाविवेश

२१ –a) दे3 शत (→कुल) –b) व3 पुत्राणामति-, दे1 8 10 न1 व1 मुवें मुए मुब पुत्रानपि च (→पुत्राणामपि) –c) व1 दे4 द1 मोहयन्ति (→मोहयन्त), दे6 मुनिश्रेष्ठा, ते1 ट्रनि श्रेष्ठा (→मुनिश्रेष्ठा)

२२. –a) का1 दे6 ते1 अतीव सदृश, व1 द1 द1 अतीव पुरुष, व2 3 दे8 अतीवासदृश (→अतीव परुष) –b) श्र2 म1 उ1 पिनाकिन (→कपर्दिनम्) –c) दे10 शेपश्च (→शेपुश्च), व1 पार्श्वविविधैर्, दे1 8 10 मुवें मुए, विविधै-र्वाक्यैर्, दे4 विविधै शापै, न1 भावैर्वि*धैर् (→शापै-र्विविधैर्)

२३ उ1 २३-२४ O (द स), दे4 b O –a) द1 म1 विविधा यत्र (→तेषां सर्वेषां), श्र2 यान्ति विविधान्यत्र –b) का1 सप्रहन्यतु, व3 प्रत्यहन्यत, व3 प्रत्याहत्याथ, दे2 4 प्रत्याहन्यत, ते1 प्रत्यहन्यन्त, म1 प्रत्यहन्येति (→प्रत्या-हन्यन्त), का1 व2 3 दे2 4 6 शरे, ते1 सर्वत (→शंकरे) –c) दे1 8-10 न1 मुवें मुए मुब °प्रतीकाशे (→°प्रकाशेन), दे10 मध्य दिव्यप्रतीकाश –d) व1 नभसस्थिता (→नभसि स्थिता), द1 तारकार नभस्थिता

२४ उ1 O (द २३ पर वि) –a) दे1 8 10 मुवें त भग्नस्य तापसा, दे9 सभग्नस्य तापसा, द1 श्र2 ते

सोऽब्रवीद् भगवानीशस्तपश्चर्तुमिहागतः ।
इदानीं भार्यया देशे भवद्भिरिह सुव्रताः ॥२५
तस्य ते वाक्यमाकर्ण्य भृग्वाद्या मुनिपुंगवाः ।
ऊचुर्गृहीत्वा वसनं त्यक्त्वा भार्यां तपश्चर ॥२६
अथोवाच विहस्येशः पिनाकी नीललोहितः ।
संप्रेक्ष्य जगतो योनिं पार्श्वस्थं च जनार्दनम् ॥२७
कथं भवद्भिरुदितं स्वभार्यापोषणोत्सुकैः ।
त्यक्तव्या मम भार्येति धर्मज्ञैः शान्तमानसैः ॥२८
ऋषय ऊचुः ।❀
व्यभिचाररता नार्यः संत्याज्याः पतिनेरिताः ।
अस्माभिरेषा सुभगा तादृशी त्यागमर्हति ॥२९
महादेव उवाच ।❀
न कदाचिदियं विप्रा मनसाप्यन्यमिच्छति ।
नाहमेनामपि तथा विमुञ्चामि कदाचन ॥३०
ऋषय ऊचुः ।❀
दृष्ट्वा व्यभिचरन्तीह ह्यस्माभिः पुरुषाधम ।
उक्तं ह्यसत्यं भवता गम्यतां क्षिप्रमेव हि ॥३१
एवमुक्ते महादेवः सत्यमेव मयेरितम् ।
भवतां प्रतिभात्येषेत्युक्त्वासौ विचचार ह ॥३२
सोऽगच्छद्धरिणा सार्धं मुनीन्द्रस्य महात्मनः ।    वे.२.२९.३३

---

भानमनसो, म2 नद् भानतपसो, मुवें मुव त भस्त्यं तपमा (→ते भगवत्तपसो), दे3 तथा ते भानतपसो, –b) दे3 विश्व गेत्य वृषध्वजम् –c) ते2 विश्वेश (→देवेश) –d) दे8 पृच्छति ऋषयस्थिता.

२५ –b) का1 च2 3 दे2 तपस्तप्तुं (→तपश्चर्तुं), का1 इहागत, दे3 4 न1 द1 म1 मह् गत, दे10 ते1 इहागता (→इहागत) –c) दे4 तदानी (→इदानीं), का1 देव, दे1 3 4 8-10 प्र2 उ1 मुवें मुए देश, द1 म1 चाह (→देशे) –d) दे3 भवतामिह, म1 इमं देशन्तु (→भवद्भिरिह)

२६ –a) ते1 तस्य तद्वाक्यमाकर्ण्य, द1 प्र2 म1 तस्य वाक्य समाकर्ण्य –c) दे1 4 8-10 न1 उ1 वचन, न1 वचनम्, ते1 तु वन (→वसनं) –d) म1 दे1 6 तपश्चरत् दे2 न1 म1 तपश्चर (→तपश्चर)

२७ –a) का1 प्रहस्येश, दे3 प्रहस्यैव, ते1 प्रहस्यैष (→विहस्येश), दे8 मयोग्वाचे विहस्येश –c) दे1 3 8 8-10 न1 म1 उ1 मुवें मुए, मुव जगतां, द1 प्र2 भगवान् (→जगतो), दे1 योनि (→योनिं) –d) का2 च1 3 दे3 न1 ते2 पार्श्वगतस्य, च2 स्वपार्श्वस्थं, दे2 9 पार्श्वे गाय (→पार्श्वस्थं च)

२८ –a) का1 दे2 पालिता, च2 पालित, च3 इदिष्ट, दे8 उदिष्ट (→उदित). –b) म1 ममार्या- (→स्वभार्या-), उ1 °सुका (→°त्सुकैः), दे8 भार्यांपा षेवसुत्सुवं –c) दे8 ममैवमिति (→मम भार्येति) –d) दे3 भवद्भि, दे1 धर्मज्ञा, प्र2 म1 धर्म ति (→धर्मज्ञैः).

❀ दे1 8 9 मुए मुनय ऊचुः, न1 ते1 द1 ऋषय, प्र2 म1 उ1 मुनय

२९. दे1 ◯. –a) दे1 9 मुवें मुए, मुव. भार्या (→नार्यः); ते1 व्यभिचारं चरन्मदम् –b) न1 गतमस्या पतिनेरित, ते1 सन्त्याज्य इति चोदितम् –c) दे1 8-10 मुवें, मुए अस्माभिर्भक्ता (दे10 °क्त), दे3 अस्मारभेदा (→अस्माभिरेषा), का1 अस्माभिशुभगारेषा, द1 अस्माभिरेष सा माता, प्र2 अस्माभि ••• समा –d) दे1 8-10 उ1 मुवें मुए नेदृशम्, द1 तादृशो (→तादृशी), दे1 त्यागमर्हसि, म1 त्याज्यमर्हसि (→त्यागमर्हति)

❀ दे8 10 ◯, का1 श्रीमहादेव उवाच, च1-3 दे2 4 देव उवाच, न1 देव, ते1 ईश्वर, द1 श्रीमहादेव, प्र2 म1 उ1 महादेव

३०. द1 प्र2 ◯ –a) च1 द्विज, ते1 विप (→इयं) –c) म1 नाहमन्या (→नाहमेना) –d) ते1 म1 यथाकथन (→कदाचन)

❀ दे8 द1 प्र2 ◯, का1 देवा ऊचुः, दे2 न1 ते1 उ1 ऋषय, म1 मुनय.

३१ द1 प्र2 ◯ –a) दे10 दृष्ट्वा, + दृष्ट्वा (→दृष्ट्वा), –b) दे10 पुरुषोत्तम (→पुरुषाधम) –ab) का1 च1-3 दे2-4 न1 दृष्ट्वा व्यभिचरन्तीमस्माभिः पुरुषाधम (च3 न1 °म), ते1 दृष्ट्वा व्यभिचरन्तीमस्माभि पुरुषोत्तम, म1 दृष्ट्वा व्यभिचारीयमस्माभि पुरुषाधम –c) च2 उदगृह्य गतव, दे1 उक्त हि सत्य (→उक्तं ह्यसत्यं) –d) का1 च1-3 दे2 4 10 न1 ते1 उ1 तु (→हि)

३२ द1 प्र2 ab ◯; का1 च2 म1 b ◯. –a) दे1 4 10 ते1 म1 उ1 मुवें मुए, मुव. एवमुक्ता (→एवमुक्ते), –b) दे1 8-10 मयेरिता, उ1 मयेरित (→मयेरितम्) –c) का1 दे10 भवता, म1 •• ता (→भवतां), का1 दे2 न1 प्रतिभा ह्यत, च1 प्रतिभा • य, दे1 4 8 9 मुवें, मुए प्रतिभा ह्येषा, दे3 प्रतिभात्येव, दे10 प्रति • स्पेष्ट्वा, ते1 प्रतिभार्या म, द1

वें २.३८.३३ वसिष्ठस्याश्रमं पुण्यं भिक्षार्थी परमेश्वरः ॥३३
दृष्ट्वा समागतं देवं भिक्षमाणमरुन्धती ।
वसिष्ठस्य प्रिया भार्या प्रत्युद्गम्य ननाम तम् ॥३४
प्रक्षाल्य पादौ विमलं दत्त्वा चासनमुत्तमम् ।
सम्प्रेक्ष्य शिथिलं गात्रमभिघातहतं द्विजैः ।
संधयामास भैषज्यैर्विषण्णा वदना सती ॥३५
चकार महतीं पूजां प्रार्थयामास भार्यया ।
को भवान् कुत आयातः किमाचारो भवानिति ।
उवाच तां महादेवः सिद्धानां प्रवरोऽस्म्यहं ॥३६
यदेतन्मण्डलं शुद्धं भाति ब्रह्ममयं सदा ।
एषैव देवता मह्यं धारयामि सदैव तत् ॥३७
इत्युक्त्वा प्रययौ श्रीमाननुगृह्य पतिव्रताम् ।
ताडयाञ्चक्रिरे दण्डैर्लोष्टिभिर्मुष्टिभिर्द्विजाः ॥३८
दृष्ट्वा चरन्तं गिरिशं नग्नं विकृतलक्षणम् ।
प्रोचुरेतद् भवाँल्लिङ्गमुत्पाटयतु दुर्मते ॥३९
तानब्रवीन्महायोगी करिष्यामीति शंकरः ।
युष्माकं मामके लिङ्गे यदि द्वेषोऽभिजायते ॥४०
इत्युक्त्वोत्पाटयामास भगवान् भगनेत्रहा ।
नापश्यंस्तत्क्षणेनेशं केशवं लिङ्गमेव च ॥४१
तदोत्पाता बभूवुर्हि लोकानां भयशंसिनः ।
न राजते सहस्रांशुश्चचाल पृथिवी पुनः ।

---

प्रतिभाषेन, प्र3 प्रतिभाषन्ते, म1 प्रतिभाषेति उ1 प्रतिभात्येषा (→प्रतिभात्येषे-). –d) का1 ब2 दे2 6 न1 ते1 प्र3 स्युक्त्वा (प्र3° क्ता) सौ, दे3 मुक्तासौ, म1 ह्युक्त्वासौ (→त्युक्त्वाऽसौ)

३३ –c) का1 ब1 3 दे° 4 6 न1 ते1 वसिष्ठस्य गृह पुण्य

३४ –b) ब1 3 भिक्ष्यमाणं, दे1 भिक्षुमाण (→भिक्षमाण) –c) दे1 3 4 8 10 न1 द1 प्र2 म1 मुवें मुए मुब भक्त्या (→भार्या) –d) ब1 3 दे2 4 6 ते1 म1 उ1 मुवें मुए मुब ननाम च, न3 ननाद च, द1 ननाम ह (→ननाम तम्), का1 प्रत्युद्गम्य च ननाम ह, प्र2 प्रत्युद्गम्याभिवाद्य वै

३५ ब1 cdef ○ –a) ब1 विपुल, दे3 4 विमलौ (→विमल) –b) द1 दत्वा चासनमुत्तमम, प्र2 कृत्वासनमुत्तमम् उ1 दत्वासनमनुत्तमम् –d) दे3 शभिघातहतम् द्विजैः, ते1 यभिघात हतद्विजा, म1 यभिवरदहत द्विजै उ1 अभिवाद्य तु त द्विजै –e) दे1 6 8 9 भैषज्यैर्, दे4 भैषज्यैन, द1 गर्भे धि, प्र2 म1 उ1 भक्त्या वै (→भैषज्यैर्)

३६ –a) का1 दे4 महती (→महतीं) –b) दे3 सा पत्नी (→भार्यया) –c) ब1 वाचे तामाह देवानां, ब2 3 भवस्तामाह देवाना, दे1 3 4 8-10 मुवें मुए मुब उक्त्वा (दे3 °क्तो)तामाह भगवान्, दे8 धारितामाह देवाना, न1 तामाह भगवान् द2, ते1 तामाह परदेवाना, द1 प्र2 म1 उ1 उच्यतां हि महाभागे –f) दे1 8 9 प्रवरो ह्यप, दे10 न1 द1 म1 उ1 मुवें मुए मुब प्रवरो ह्यहम् (→प्रवरोऽस्म्यहम्)

३६ श्लोकानन्तरं द1 अधिकम्—महादेव उवाच

३७ –a) प्र2 उ1 यदेवं (→यदेतन्), दे1-3 8-10 द1 प्र2 म1 उ1 मुवें मुए मुभ (→शुद्ध) –d) ब3 सर्दैव, दे1 सदेव तु, दे3 न1 सदैव त, दे4 8-10 प्र2 उ1 मुवें मुए मुब सदैव तु, म1 सहैव तत् (→सदैव तत्)

३८ –d) ब1 दे4 लोष्टभिर्, ब2 मुब यष्टिभिर्, ब3 दे6 न1 ते1 द1 प्र2 उ1 लोष्टाभिर् (→लोष्टिभिर्), दे1 8-10 मुष्टिभिर्द्विजैः, ते1 मुनिपुंगवाः, ब1 प्र2 मुष्टिजानुभि (→मुष्टिभिर्द्विजाः)

३९ –b) दे10 नग्ने (→नग्न), दे1 4 6 8-10 म1 प्र2 उ1 मुवें मुए विकृतिलक्षणम्, ते1 विकृतिलोचनम् (→विकृतलक्षणम्) –c) दे1 4 न1 उ1 मुवें मुए मुब भवाँल्लिङ्ग, प्र2 भवें ** (→भवाँल्लिङ्ग), द1 म1 प्रोचुरेवो (म1 °तो)ऽद्भव लिंग –d) का1 दे3 द1 प्र2 उ1 उत्पाट्यमुदुमते, दे1 8-10 मुवें उत्पाट्य शुदुर्मते (मुवें °ते) म1 उत्पाटयसि दुर्मते

४० ब1 ○, दे1 3 4 8-10 द1 म1 उ1 cd ○ –a) ब2 ते1 महायोग, ब3 दे8 महायोग (→महायोगी) –c) ते1 मामकेलिङ्गं (→मामके लिंगे) –d) का1 यद्युद्वेषोभिजायते, न1 यदि द्वेषोऽप्यवर्त्तत, ग1 यदि द्वेषोह्यवर्तत

४१ दे1 cd ○ –a) का1 इत्येष शोटयामास, ब1 3 दे2 6 मुव इत्युक्तोत्पाटयामास, दे1 उक्त्वा पुरुपाटयामास, दे3 8-10 द1 मुवें मुए उक्त्वा तूत्पाटयामास, दे4 इत्युक्तोद्घाटयामास, प्र2 म1 उ1 उक्त्वा उ(प्र2 त)त्पाटयामास –b) ब1 दे1 भव (→भग-) –c) ब1 3 दे2 6 तत्क्षणेनेह प्र2 तत्क्षणेनापि, दे3 मुवें मुए, तत्क्षणादीशं, दे4 ते1 तत्क्षणेनैव, दे8 10 मुब तत्क्षणाच्चेश (→तत्क्षणेनेश) –d) प्र2 म1 दैवत (→केशव), का1 ब2 3 दे2 6 तु, म1 यद् (→च)

४२ ब1 ४२c-५०d ○, दे1 ab ○ –a) दे3 तत्रोत्पाता, दे4 8 9 ते1 द1 म1 ततोत्पाता (→तदोत्पाता).

निष्प्रभाश्च ग्रहाः सर्वे चुक्षुभे च महोदधिः ॥४२
अपश्यच्चानुसूयात्रेः स्वप्नं भार्या पतिव्रता ।
कथयामास विप्राणां भयादाकुलितेक्षणा ॥४३
तेजसा भासयन् कृत्स्नं नारायणसहायवान् ।
भिक्षमाणः शिवो नूनं दृष्टोऽस्माकं गृहेष्विति ॥४४
तस्या वचनमाकर्ण्य शङ्कमाना महर्षयः ।
सर्वे जग्मुर्महायोगं ब्रह्माणं विश्वसंभवम् ॥४५
उपास्यमानममलैर्योगिभिर्ब्रह्मवित्तमैः ।
चतुर्वेदैर्मूर्तिमद्भिः सावित्र्या सहितं प्रभुम् ॥४६
आसीनमासने रम्ये नानाश्चर्यसमन्विते ।
प्रभासहस्रकलिले ज्ञानैश्वर्यादिसंयुते ॥४७
विभ्राजमानं वपुषा सस्मितं शुभ्रलोचनम् ।
चतुर्मुखं महाबाहुं छन्दोमयमजं परम् ॥४८
विलोक्य वेदपुरुषं प्रसन्नवदनं शुभम् ।
शिरोभिर्धरणीं गत्वा तोषयामासुरीश्वरम् ॥४९
तान् प्रसन्नमना देवश्चतुर्मूर्तिश्चतुर्मुखः ।
व्याजहार मुनिश्रेष्ठाः किमागमनकारणम् ॥५०
तस्य ते वृत्तमखिलं ब्रह्मणः परमात्मनः ।
ज्ञापयाञ्चक्रिरे सर्वे कृत्वा शिरसि चाञ्जलिम् ॥५१

ऋषय ऊचुः ।

कश्चिद् दारुवनं पुण्यं पुरुषोऽतीवशोभनः ।
भार्यया चारुसर्वाङ्ग्या प्रविष्टो नग्न एव हि ॥५२  वं. १.१८.५१

---

–c) वे0 न प्रभते, तै1 ना राजते, प2 रराज ते (→न राजते) –f) दे3 चुक्षोभ च (→चुक्षुभे च), प्र3 महार्णवः (→महोदधि)

४३ व1 ⊙ (द ४२ पा वि) –a) दे1.8-10 [भ]-नुसूयात्र, दे3 [भ]नसूया वै (→[भ]नुसूयात्रे), वे1 मध्यश्चान सूयाते, –b) दे1 8-9 स्वप्नभार्या, तै1 स्वप्ने भार्या, प्र2 स्व भार्या, म2 भार्या स्वप्नं (→स्वप्न भार्या), तै2 पतिव्रताश (→पतिव्रता) –d) वा1 दे2 भयव्याकुलितेक्षणा, दे1 8-10 मुवे मुए मुव भयादाकुलितेक्षिणा (दे10 °प)

४४ व1 ○ (द ४२ पा वि) –c) दे10 भिक्ष-माण (→भिक्षमाण) –d) दे8 दृष्ट्वोऽस्माक, न1 दृष्टास्माक, तै1 दृष्ट्वाऽस्माक, प्र2 म1 दृष्टोऽस्माभिर् (→दृष्टोऽस्माक), वा1 व2 3 दे2 गृहेष्विह, म1 गृहेष्विनि (→गृहेष्विति)

४५ व1 ⊙ (द ४२ पा वि) –a) दे4 मत्य-(→तस्या). –c) न1 सर्वमाजग्मुर् (→सर्वे जग्मुर्)

४६ व1 ⊙ (द ४२ पा वि) –a) तै1 द1 प2 म1 उ1 ममल (→ममलैर्) –b) तै1 पार्थिवत्तमैः, व2 ब्रह्मभवे, व2 म1 ब्रह्मसत्तमैः, उ1 ब्रह्मनिष्ठितैः (→ब्रह्मवित्तमैः) –d) दे3 पर्तु, द1 प्र2 उ1 विभु (→प्रभुम्).

४७ व1 ⊙ (द. ४२ पा वि) –a) प2 म1 दिव्ये (→रम्ये) –b) दे4 नानैश्वर्य° (→नानाश्चर्य°) –c) दे3 °कलिते, दे10 °कलिले, तै1 * लिते, द1 प2 म1 °ज्वलिते (→°कलिले) –d) दे3 म1 °संयुते (→°संयुते); तै1 नानारत्न-समन्विते

४८ व1 ○ (द. ४२ पा. वि.) –a) दे10 वपुषो (→वपुषा); द2 विभ्राजमानश्च वपुषा, –b) व2 दे2 3 6 सुस्मितं (→सस्मितं), व2 दे4 शु(दे4सु) भ्रूलोचन, व3 दे2 चपलोचन, दे8 *भ्रूलोचनम्, तै1 म1 शुभलोचनम्, प्र2 शुचिलोचन (→शुभ्रलोचनम्) –d) का1 दे10 छन्दोमयमल (दे10 °ल) परं, व2 3 दे2 6 छन्दोमयम (दे6 °ज)ल प्रभु, दे4 छन्दोमय्य-मज विभु, तै1 छन्दसामयन प्रभुम्, प2 छन्दोमायामज परं, म1 छन्दोमयमज वर

४९ व1 ⊙ (द ४२ पा वि) –a) व2 देवपुरुष, व3 दे1 4 8-10 न1 द1 प्र2 म1 उ1 मुवे मुए मुव देवपुरुष, द2 वेदवपुष, तै1 दिव्यवपुष (→वेदपुरुष) –b) द1 4 8-10 सुधि, दे3 द1 प2 म1 उ1 मुवे मुए मुव शुचिम् (→शुभम्) –c) प्र2 कृत्वा (→गत्वा) –d) प्र2 तोषयामास ईश्वर

५० व1 ⊙ (द ४२ पा. वि) –a) दे1-8-10 मुए मुव तान् प्रगतो महादेवम्, द1 प2 म1 उ1 तान् प्रेक्ष्य मनसा देवम् –b) दे10 विश्वमूर्तिस् (→चतुर्मूर्तिस्), दे4 चतुर्भुज (→चतुर्मुख) –c) न1 मुनीन् श्रेष्ठ, व1 म1 उ1 मुनिश्रेष्ठान् (→मुनिश्रेष्ठा).

५१ –a) द1 0-10 तस्य प्रवृत्त, दे4 तस्मात्ते वृत्त, दे1 वस्य ते वृत्त, मुवे मुए सततस्य वृत्त (→तस्य ते वृत्त) –b) द1 प्र2 म1 उ1 परमेष्ठिन (→परमात्मन) –c) दे8 ज्ञापया स्वक्रिरे (→ज्ञापयाचक्रिरे) –d) दे10 चाञ्जलि (→चाञ्जलिम्)

ऋषय ऊचुः दे10. ○, दे1 ऋषय ऊचु, म1 तै1 द1 प2 म1 उ1 ऋषय.

५२. –b) तै1 पुरुषश्चिवशोभन. –c) म1 भार्यया चाम् (→भार्यया चारु-)

वे.२.३८.५३ मोहयामास वपुषा नारीणां कुलमीश्वरः ।
कन्यकानां प्रिया चास्य दूषयामास पुत्रकान् ॥५३
अस्माभिर्विविधाः शापाः प्रदत्ताश्च पराहताः ।
ताडितोऽस्माभिरत्यर्थं लिङ्गं तु विनिपातितम् ॥५४
अन्तर्हितश्च भगवान् सभार्यो लिङ्गमेव च ।
उत्पाताश्चाभवन् घोराः सर्वभूतभयंकराः ॥५५
क एष पुरुषो देव भीताः स्म पुरुषोत्तम ।
भवन्तमेव शरणं प्रपन्ना वयमच्युत ॥५६
त्वं हि वेत्सि जगत्यस्मिन् यत्किञ्चिदपि चेष्टितम् ।
अनुग्रहेण विश्वेश तदस्माननुपालय ॥५७
विज्ञापितो मुनिगणैर्विश्वात्मा कमलोद्भवः ।
ध्यात्वा देवं त्रिशूलाङ्कं कृताञ्जलिरभाषत ॥५८

ब्रह्मोवाच ॥*

हा कष्टं भवतामद्य जातं सर्वार्थनाशनम् ।
धिग्बलं धिक् तपश्चर्या मिथ्यैव भवतामिह ॥५९
सम्प्राप्य पुण्यसंस्कारान्निधीनां परमं निधिम् ।
उपेक्षितं वृथाचारैर्भवद्भिरिह मोहितैः ॥६०
काङ्क्षन्ते योगिनो नित्यं यतन्तो यतयो निधिम् ।

५३ -a) दे4 पुरुषो (→वपुषा), दे8 मोहयामासु पुरुषा -b) व2 दे6 कुलमाशु च, ते1 प्र2 कुलमीश्वरा (ते1 °रा) (→कुलमीश्वर) -c) ते1 कन्यका च (→कन्यकानां), व1 दे8 प्रिया यस्य, व2 3 मुबं प्रियो यस्तु, दे1 प्रियाभाष्य, दे3 कुल मर्वे म1 प्रिया धाया, ते1 प्रिया तस्य, द1 म1 प्रियस्वामी, प्र3 प्रियावामो (→प्रिया चास्य) -d) दे10 पुत्रवान् (→पुत्रकान्)

५४ शा1 b O. -a) व2 3 विविधा पाशा (व3 °शा) दे1 8-10 विविधा पा(दे1 वा)ना, दे4 विविधा माया (→विविधा शापाः) -b) व2 3 दे6 मुब प्रवृत्ताश्च, दे1 8 10 मुबं मुए प्रशमास्ते (→प्रदत्ताश्च), दे3 पराजिन, न1 पराहित (→पराहताः) -c) न1 म1 ताडिता (→ताडितो) -d) व1 लिङ्ग भूमौ निपातितम्, दे3 लिङ्गं भुवि निपातितम्, दे4 ते1 लिंग भुवि निपातयते (ते1 पु) दे0 लिङ्गस्तु विनिपातितम्, द1 प्र2 म1 उ1 लिङ्गं च विनिपातितम्

५५ म1, a O -b) दे1 लिंग एव च, द1 प्र3 म1 उ1 लिंग एव हि (→लिङ्गमेव च)

५६ दे1 ५६a ५७d O, व1 cd O -a) शा1 न1 मुबं एव, प्र3 एवं, उ1 * व (→एष) -b) व1 भीता स्म, दे1 8 9 उ1 मुबं मुए मुब भीता स्म, दे8 भीतोस्म, दे10 भीता *, न1 भीतास्तु द1 भीता गः (→भीता स्म), म3 व1 3 उ1 पुरुषोत्तम (→पुरुषोत्तम) -c) व1 भवन्तमेव, दे3 द1 प्र2 म1 उ1 भव न्मर्व (→भवन्तमेव) -d) व3 म1 प्र2 वयमच्युतं (व3 °त) दे3 भवच्चरणात् दे10 वयमुच्युत, उ1 वयमच्युत (→वयमच्युत)

५७ दे1 O (८ २९ पा वि), व1 ab O शा1 त्वं हि वेत्थं, व2 3 दे2 8 द1 म1 त्वं हि वेत्थ, दे1 भवान्वेत्सि, म1 न हि वेत्थ, ते1 त्वं विद्योत (→त्वं हि वेत्सि) -b) शा1 दे1 3 8-10 द1 प्र2 म1 उ1 मुबं मुए मुब यत्किञ्चिदिह (→यत्किञ्चिदपि), न1 चेष्टत (→चेष्टितम्) -c) म1 दे1 देवेश, दे1 3 8 10 द1 प्र2 म1 उ1 मुबं मुए मुब युक्तेन, ते1 विश्वात्मन् (→विश्वेश) -d) द1 प्र2 मममुपालयं (प्र2 °या) (→ममनुपालय), दे1 9 मुए मुए मुब तदस्मानुपालय

मत पर दे3 मधिकम्—सूत उवाच

५८ -a) दे8 10 विज्ञापिते, व2 प्र2 उ1 विज्ञापित, म1 विज्ञापयन् (→विज्ञापितो) -b) द1 म1 उ1 विश्वात्मा (→विश्वात्मा) -c) दे4 कृत्वा लोक (→ध्यात्वा देवं) दे6 त्रिशूलधर (?), द1 त्रिशूलाक्ष, प्र2 त्रिशूलांग (→त्रिशूलाङ्कं)

* दे8 9 ब्रह्मा उवाच, दे10 ब्रह्मा ऊचु, न1 ते1 प्र2 म1 उ1 ब्रह्मा

५९ -b) शा1 दे2 सर्वात्म° (→सर्वार्थ°), दे10 °शासन, ते1 °नाशय (→°नाशनम्) -c) दे2 मुब धिग्बल, प्र3 धिग्जप (→धिग्बलं), व2 दे1 द1 म1 तपश्चर्या, प्र3 जपश्चर्या (→तपश्चर्या), न1 धिग्तव पिबनपश्च -d) दे1 8-10 मिथ्या यद् द1 प्र2 उ1 धिक् शान्तं, म1 धिक् प्राण (→मिथ्यैव)

६०. -a) व2 3 दे6 मुब पुण्यसंस्थानां (व3 दे8 °ना), प्र2 पुण्य सत्कारं (→पुण्यसंस्कारान्) -b) दे4 ते1 परमा निधि द1 उ1 परमो निधि (→परमं निधिम्), दे1 निधी ****** -c) प्र2 द1 प्र2 उ1 उपेक्षितो, व3 उपेक्षित (→उपेक्षितं), शा1 दे1 8 9 मुए वृथाचारैः, दे10 कृपाचारैः (→वृथाचारैः) -d) दे10 हरि मोहितैः, न1 दिवमाहितैः (→इह मोहितैः)

६१ म1 cd O -a) शा1 व1 3 दे2 6 म1 मुब काङ्क्षन्ति, दे1 10 काङ्क्षिते, ते1 गच्छन्ति, द1 कांक्षते (→काङ्क्षन्ते), न1 नित्यम् (→नित्यं) -b) शा1 उ1 यतन्ते, व1 यतन्ति, ते1 यजन्ते (→यतन्तो), द1 निधि, म1 निधन (→निधिम्)

यमेव तं समासाद्य हा भवद्भिरुपेक्षितम् ॥६१
यजन्ति यज्ञैर्विविधैर्यत्प्राप्त्यै वेदवादिनः ।
महानिधिं समासाद्य हा भवद्भिरुपेक्षितम् ॥६२
यं समासाद्य देवानामैश्वर्यमखिलं जगत् ।
तमासाद्याक्षयनिधिं हा भवद्भिरुपेक्षितम् ॥६३
यत्समापत्तिजनितं विश्वेशत्वमिदं मम ।
तदेवोपेक्षितं दृष्ट्वा निधानं भाग्यवर्जितैः ॥६४
यस्मिन् समाहितं दिव्यमैश्वर्यं यत् तदव्ययम् ।
तमासाद्य निधिं ब्राह्मं हा भवद्भिर्वृथाकृतम् ॥६५
एष देवो महादेवो विज्ञेयस्तु महेश्वरः ।
न तस्य परमं किञ्चित् पदं समधिगम्यते ॥६६
देवतानामृषीणां च पितॄणां चापि शाश्वतः ।
सहस्रयुगपर्यन्ते प्रलये सर्वदेहिनाम् ।
संहरत्येष भगवान् कालो भूत्वा महेश्वरः ॥६७
एष चैव प्रजाः सर्वाः सृजत्येकः स्वतेजसा ।
एष चक्री च वज्री च श्रीवत्सकृतलक्षणः ॥६८
योगी कृतयुगे देवस्त्रेतायां यज्ञ उच्यते ।
द्वापरे भगवान् कालो धर्मकेतुः कलौ युगे ॥६९
रुद्रस्य मूर्तयस्तिस्रो याभिर्विश्वमिदं ततम् ।
तमो ह्यग्नी रजो ब्रह्मा सत्त्वं विष्णुरिति प्रभुः ॥७० कूर्म १.२८.६९

---

–c) दे6 यामवत(?), दे10 यमेव त, द1 यमनक, उ1 यमेनन्त (→यमेव तं) –d) द1 विभूतिभिर् (→हा भवद्भिर्), ब3 उपेक्ष त (→उपेक्षितम्)

६२ का1 ब1-3 दे3 4 6 वे1 द1 मुब ○ –b) दे1 न1 प्र2 म1 प्राप्तैर, दे3 -प्राप्ते, दे8 10 उ1 मुवे -प्राप्तेर् (→-प्राप्त्यैर्), न1 वेदवादिन (→वेदवादिन)

६३ का1 दे1 8 9 मुवे मुए ⊙, ब1 ab ○, न1 cd○ –a) म1 यमासाद्याप्तवान् काम –b) ब2 3 दे2 4 6 वे1 मुब ध्रुव, दे10 प्र2 म1 उ1 महत् (→जगत्) –c) ब2 3 दे3 6 मुब त (दे2 6 स) मासाद्याक्षय देव, दे4 तमासाद्य जयनिधि, दे10 समासाद्याक्षयनिधि

६४ न1 ○, ब1 ab ○ –a) का1 दे6 यत्समापत्ति (दे6 °पत्ति) जनित, ब2 यत् रक्षाशान्तु जनित, ब3 यत्समास * जनित, दे1 8-10 मुवे मुए मुब यत्सर्वपित्वा सतत दे3 यस्येक्षरे तिजनित, दे4 द1 प्र2 म1 उ1 येन प्राप्त हि तदिद, ते1 यस्मा-न्मर्पनज्जनित –b) दे1 8 10 विश्वेशित्व, उ1 विश्वेश त्व (→विश्वेशत्व) –c) ब1 तदेवोप्रेक्षित, दे1 8 10 मुवे मुए मुब सदेवोपेक्षितो (→तदेवोपेक्षित), द1 प्र2 म1 प्राप्त (→दृष्ट्वा) –d) दे3 विधान दे3 भवद्भिर् (→निधान), ब1 भाग्यवर्जित, दे1 8 10 मुवे मुए मुब भाग्यवर्जिता, ते1 रागवर्जिता (→भाग्यवर्जितै)

६५ न1 ab ○ –a) ब3 यस्मिन् (→यस्मिन्) –b) ब2 यत्तदुत्तम, द1 प्र2 उ1 तत्तदव्ययम् (→यत्तदव्ययम्) –c) ब1 समासाद्य (→तमासाद्य), का1 ब3 निधि ब्रह्म, दे1 8 10 न1 म1 उ1 मुवे मुए मुब निधि (दे10 °धि) ब्रह्म, ते1 ब्रह्मनिधि, प्र2 इद ब्रह्म (→निधि ब्राह्म). –d) का1 ब3 दे2 यथा कृतम्, ब2 दे2 द1 प्र2 उ1 उपेक्षित, न1 मुधा कृत (→वृथा कृतम्)

६६ ब3 ६६c–६७f ○ (द्र म) –a) द4 एव (→एष), उ1 एष देवोति *** –c) द1 म तस्य, दे4 तत्तस्य (→न तस्य), ते1 न तस्मात्परं किंचित् –d) दे1 3 6 8-10 वे1 द1 प्र2 उ1 पद समधि°, दे4 इद किमधि° (→पद समधि°).

६७ ब1 3 ○ –a) द1 मुवे मुए मुब वा (→च) –b) दे1 8 9 न1 म1 शाश्वत, दे3 सर्वश (→शाश्वत), दे4 प्रियाणा च प्रिया श्रुत, दे10 प्रियाणां चाप्य शश्वत, ते1 प्रियाणामपि शाश्वतम् –c) दे4 ते1 द1 म1 उ1 °युगपर्यन्त, प्र2 °युगपल्लिस्य (→°युगपर्यन्ते) –d) दे4 उ1 प्रलय (→प्रलये) द1 प्र2 उ1 धर्ति (→सर्व) –e) द1 प्र2 म1 उ1 सलोकान् संहरत्येव

६८ –b) दे1 3 8 10 उ1 मुवे मुए मुब सृजत्येष, दे4 मुच्यते वा, द1 प्र2 म1 सृजत्येव (म1 °व) (→सृजत्येक), न1 सृजत्येतेन तेजसा –c) दे2 8 10 मुवे मुए मुब चक्रवर्ती, दे4 च वज्री च, दे6 न चद्रय (→न वज्री च), ब1 एषचक्रश्च वज्री च, दे3 पालयत्येष भगवान्, उ1 एष च थी च वज्री च

६९ ब1 ६६a-७३d ○ –a) दे4 यत्रै, द1 म1 देवा (→देव) –b) दे1 8 10 मुवे मुए मुब एव च (→उच्यते), दे10 त्रेता यज्ञममव च, म1 त्रेताया ब्रह्म उच्यते –d) दे2 ब्रह्मकेतु, दे4 धर्मधतु प्र2 धर्महेतु (→धर्मकेतु), दे1 8 10 न1 द1 म1 मुए कलौभव (→कलौ युगे)

७० न1 ○ (द्र ६६ पर टि) –a) दे1 रुद्रास्तु (→रुद्रस्य) –b) ब2 3 दे8 वे1 यानि पार्थिनि पविहना, म1 यानि विश्वमिद तत –d) दे3 8 9 मुवे मुए मुब स्मृति, दे3 10 न1 उ1 श्रुति, ते1 निभि, द1 प्र2 म1 स्थिति (प्र2 °त) (→प्रभु), दे4 योगेन तु समन्वित

कू.२.६६,७०

मूर्त्तिरन्या स्मृता चास्य दिग्वासा वै शिवा ध्रुवा ।
यत्र तिष्ठति तद् ब्रह्म योगेन तु समन्वितम् ॥७१

या चास्य पार्श्वगा भार्या भवद्भिरभिवीक्षिता ।
सा हि नारायणो देवः परमात्मा सनातनः ॥७२

तस्मात् सर्वमिदं जातं तत्रैव च लयं व्रजेत् ।
स एव मोहयेत् कृत्स्नं स एव परमा गतिः ॥७३

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
एकशृङ्गो महानात्मा पुराणोऽष्टाक्षरो हरिः ॥७४

चतुर्वेदश्चतुर्मूर्त्तिस्त्रिमूर्त्तिस्त्रिगुणः परः ।
एकमूर्त्तिरमेयात्मा नारायण इति श्रुतिः ॥७५

ऋतस्य गर्भो भगवानापो मायातनुः प्रभुः ।
स्तूयते विविधैर्मन्त्रैर्ब्राह्मणैर्मोक्षिभिः ॥७६

संहृत्य सकलं विश्वं कल्पान्ते पुरुषोत्तमः ।
शेते योगामृतं पीत्वा यत् तद् विष्णोः परं पदम् ॥७७

न जायते न म्रियते वर्द्धते न च विश्वसृक् ।
मूलप्रकृतिरव्यक्ता गीयते वैदिकैरजः ॥७८

ततो निशायां वृत्तायां सिसृक्षुरखिलञ्जगत् ।
अजस्य नाभौ तद् बीजं क्षिपत्येष महेश्वरः ॥७९

---

७१ व1 दे4 ○ –a) दे1 मूर्तिरस्या, म1 मूर्तिमला (→मूर्तिरन्या), दे3 द1 म1 उ1 स्मृता दिव्या, दे1 स्मृत चान्य, प्र2 वदा दिव्या (→स्मृता चान्य) –b) का1 दिग्वासा हि, दे1 8 10 प्र2 मुर्वे मुए दिग्वासा च (दे10 सा), ते1 ऋग्वासा वै, द1 म1 वामाङ्के च, उ1 वामागे तु (→दिग्वासा वै), म1 धृता (→ध्रुवा), दे3 शाश्वती शिवरूपिणी –c) म1 तत्र (→यत्र), व3 तद् ब्रह्म, ते1 तु ब्रह्म, द1 त ब्रह्म (→तद् ब्रह्म), प्र2 यत्रावसतत ब्रह्म –d) प्र2 उ1 समन्वित (→समन्वितम्)

७२ व1 ○ (द्र ६६ पा वि) –a) व3 सा (→या), दे6 पार्श्वग भार्यां (→पार्श्वगा भार्या), द1 प्र2 या चाष्टैश्वर्यगर्भा च उ1 यस्य पार्श्वगता भार्या –b) व3 न1 इति वीक्षिता, दे1 3 8-10 द1 प्र2 म1 उ1 मुर्वे मुए मुव अभिभाषिता, दे4 अभिभाषते, दे6 अपि वीक्षिता (→अभिवीक्षिता) –c) का1 दे1 3 4 6 8-10 न1 ते1 म1 मुर्वे मुए मुव स (→सा),

७३ व1 ○ (द्र ६६ पा वि) –a) व3 दे1 ज्ञात, दे8 ज्ञान (→जात) –b) न1 तथैव (→तत्रैव), प्र2 प्रलय (→च लय) –c) दे1 4 8-10 उ1 मुर्वे मुए मुव (→एव), दे1 3 8 9 द1 प्र2 म1 मुर्वे मुए मोचयेत् दे10 मोचन, न1 मोहयन्, प्र2 मो•• (→मोहयेत्), दे4 यस्तु (→कृत्स्न) –d) द1 3 8-10 न1 ते1 द1 प्र2 म1 मुर्वे मुए मुव स एव (दे3 न1 ते1 द1 प्र2 म1 °द) च परागति.

७४ म1 ○ –c) म1 एकमुत्तिरमेयात्मा –d) का1 दे4 पुराणेष्टाक्षरो हरि, दे1 8 9 प्र2 म1 उ1 मुर्वे मुए नारायण इति श्रुति, द1 पुराणे हाक्षरो हरि.

७५ प1 दे1 8 9 मुर्वे मुए ○, म1 ab ○ –b) का1 व2 3 दे2 4 मुव त्रिगुण (दे3 °णं) परमेश्वर, ग1 दे1 त्रिमूर्तिस्त्रिगुण पर, प्र2 त्रिमूर्तिस्त्रिगुणोत्तम –c) का1 एप (→एक-), व2 3 ते1 एकमूर्त्तिरन तात्मा, दे3 6 एपमूर्तिरन•त्मा

७६ व1 ○ –a) प्र2 3 मुव स तस्य, दे1 8 10 उ1 रेतस्य, दे3 हिरण्य-, दे4 त तस्य, मुर्वे मुए रेतोऽस्य (→ऋतस्य), का1 दे3 धर्मो, न1 भर्गो (→गर्भो) –b) का1 आपो माया तनु, व2 3 मुव आपोमयतनु, दे3 अभो मायातनु, ते1 मायी मायातनु, म1 आपो नारायण (→आपो मायातनु), द1 प्र2 पर, उ1 पुरा (→प्रभु) –c) न1 सस्तुतो, उ1 तमन्ते (→स्तूयते) –d) दे1 3 4 8 10 न1 द1 प्र2 म1 उ1 मुर्वे मुए मुव मोक्ष (न1 °ग्नि) कांक्षिभि, ते1 भक्तिमोक्षिभि (→धर्ममोक्षिभि)

७७ –c) दे10 योगामृते, ते1 योगासने, प्र2 योगाख्यम (→योगामृत) –d) दे1 8 10 मुर्वे मुए मुव यम विष्णो (→यत्तद्विष्णो), व3 यत्तद्विष्णो परम पद, दे3 ते1 द1 प्र2 म1 उ1 तद्विष्णो परम पदम्

७८ व1 ७८c-८२b ○ –b) दे3 वर्त्तते न, दे4 न पर्येति, प्र2 वर्द्ध•ते म उ1 वर्द्धते स (→वर्द्धते न), दे1 8 9 मुर्वे मुए मुव विश्वदृक् दे3 विश्वभृत, दे8 10 उ1 विश्वधृक्, न1 ते1 विश्वकृत् म1 कुत्रचित् (→विश्वसृक्) –c) का1 दे2, 3 प्र2 मुर्वे मुव मव्यक्तो, दे4 अव्यक्त म1 मव्यक्त (→अव्यक्ता) –d) ना1 ते1 यत (→अज)

७९ व1 ○ (द्र ७८ पा वि) –a) का1 व2 3 दे2 8 ते1 मुव अयुत्ताया, म1 ••• (→वृत्ताया) –c) दे1 8-10 द1 म1 मुर्वे मुए मुव अजनाभौ तु, दे3 उ1 अजनाभो तु (→अजस्य नाभौ). –d) का1 व2 3 दे2 3 8 न1 ते1 म1 क्षिपत्येव, दे4 प्र2 क्षिप्यतेऽक (प्र2 °व) (→क्षिपत्येष)

# ४२

वं २४४१

सूत उवाच ।☸
अन्यच्च तीर्थप्रवरं जप्येश्वरसमीपतः ।
नाम्ना पञ्चनदं पुण्यं सर्वपापप्रणाशनम् ॥१
त्रिरात्रोपोषितस्तत्र पूजयित्वा महेश्वरम् ।
सर्वपापविशुद्धात्मा रुद्रलोके महीयते ॥२
अन्यच्च तीर्थप्रवरं शंकरस्यामितौजसः ।
महाभैरवमित्युक्तं महापातकनाशनम् ॥३
तीर्थानां च परं तीर्थं वितस्ता परमा नदी ।
सर्वपापहरा पुण्या स्वयमेव गिरीन्द्रजा ॥४
तीर्थं पञ्चतपं नाम शंभोरमिततेजसः ।
यत्र देवादिदेवेन चक्रार्थं पूजितो भवः ॥५
पिण्डदानादिकं तत्र प्रेत्यानन्तफलप्रदम् ।
मृतस्तत्रापि नियमाद् ब्रह्मलोके महीयते ॥६
कायावरोहणं नाम महादेवालयं शुभम् ।
यत्र माहेश्वरा धर्मा मुनिभिः संप्रवर्त्तिताः ॥७
श्राद्धं दानं तपो होम उपवासस्तथाऽक्षयः ।
परित्यजति यः प्राणान् रुद्रलोकं स गच्छति ॥८
अन्यच्च तीर्थप्रवरं कन्यातीर्थमिति श्रुतम् ।
तत्र गत्वा त्यजेत् प्राणाँल्लोकान्प्राप्नोति शाश्वतान् ॥९
जामदग्न्यस्य तु शुभं रामस्याक्लिष्टकर्मणः ।
तत्र स्नात्वा तीर्थवरे गोसहस्रफलं लभेत् ॥१०

---

४२

[म1 पुस्तके अध्यायोऽयं नास्ति]

☸ दे1 8 9 द1. ○, न1 प्र2 उ1 सूत, तै1 श्रीशिव, + सूत, म1 श्रीसूत

१ –a) दे10 °परम (→°प्रवर) –b) का1 व1 दे2 4 तै1 म1 °समीपग (→°समीपत), व2 जप्येश्वरमनुत्तम, दे6 जप्येश्वरतदुत्तम, प्र2 जप्येश्वरसमन्वित –c) दे4 पचवस (→पचनद)

२ –a) दे1 8 9 मुवँ मुए मुव त्रिरात्रमुपितस्तत्र –c) व1 3 म1 °विनिर्मुक्तो, च2 °विमुक्तात्मा (→°विशुद्धात्मा)

३ दे1 8 10 cd ○ –b) दे1 3 4 8-10 द1 प्र2 म1 उ1 मुवँ मुए मुव शक्रस्यामिततेजस –c) तै1 °कौरव° (→°भैरव°) –d) द1 उ1 सर्व- (→महा), प्र2 महापापप्रणाशन

४ दे1 8 10 ○ –a) दे3 4 म1 प्र2 परम, तै1 च वर, द1 म1 प्रवर (→च पर) –b) दे4 विभुता, द1 म1 विशस्ती, प्र2 विशति, उ1 विशस्त (→वितस्ता) –c) द1 उ1 रम्या (→पुण्या)

५ दे1 8-10 ab ⊙ –a) व2 3 दे4 न1 द1 प्र2 म1 उ1 मुव मुए मुव पचतपो, तै1 पर तप (→पञ्चतप) –c) व2 देवाद्रि-, दे8 8-10 न1 मुवँ, मुए मुव देवाधि- (→देवादि-), दे10 देवेश (→-देवेन) –d) का1 दे1 8 10 मुवँ मुए शक्रार्थं (दे1 मुवँ मुए °र्थे), दे3 पुत्रार्थं, दे4 सर्वार्थं, उ1 चक्रार्थं (→चक्रार्थं), दे6 द1 प्र2 उ1 हर (प्र2 °रि) (→भव)

६ –b) का1 द1 प्र2 मुवँ मुए मुव प्रेत्यानन्द- (→प्रेत्यानन्त-), दे1 8 9 मुवँ मुए मुव °सुखप्रद (→°फलप्रद) –c) दे1 3 8-10 न1 तै1 द1 प्र2 म1 उ1 मुवँ मुए मुव तत्राय (→तत्रापि), दे6 मृतस्तत्रापि नियमाद्

७ –b) द1 प्र2 पर, उ1 पुर (→शुभ) –c) का1 तत्र (→यत्र), दे3 10 यत्र माहेश्वरो धर्मो, दे6 प्र2 यत्र माहेश्वर धर्म –d) का1 व2 3 दे2 4 6 तै1 प्र2 सप्रकीर्त्तिता (दे6 °ता) (→सप्रवर्त्तिता)

८ दे4 ○, दे1 d ○ –a) उ1 श्राद्ध (→श्राद्ध), का1 न1 तै1 जपो (→तपो), न1 तै1 द1 होम (→होम) –b) द1 प्र2 उ1 उपवास (→उपवासस्), व3 तदाक्षय, दे1 8-10 न1 द1 प्र2 तथाक्षय, दे3 तथा जप, म1 तपोऽक्षय (→तथाक्षय)

९ दे4 ○, दे1 abc ○, न1 ९b–१०d ○ –b) दे8-10 मुवँ मुए मुव कन्यातीर्थमनुत्तम –c) व2 3 तै1 मुव त्यजन (→त्यजेत्) –d) का1 व2 3 दे2 3-6 तै1 म1 मुव प्राप्नोति (→प्राप्नोति), द1 प्र2 उ1 पुष्कलान् (→शाश्वतान्)

१० न1 ○ –a) दे1 4 8-10 मुवँ मुए मुव, च (→तु) –b) दे10 रामस्य क्लिष्टकर्मणः –c) व2 तत्र स्नात्वा नरो रामन्, तै1 तत्र तीर्थवरे स्नात्वा

महाकालमिति ख्यातं तीर्थं त्रैलोक्यविश्रुतम् ।
गत्वा प्राणान् परित्यज्य गाणपत्यमवाप्नुयात् ॥११
गुह्याद् गुह्यतमं तीर्थं नकुलीश्वरमुत्तमम् ।
तत्र सन्निहितः श्रीमान् भगवान् नकुलीश्वरः ॥१२
हिमवच्छिखरे रम्ये गङ्गाद्वारे सुशोभने ।
देव्या सह महादेवो नित्यं शिष्यैश्च संवृतः ॥१३
तत्र स्नात्वा महादेवं पूजयित्वा वृषध्वजम् ।
सर्वपापैर्विमुच्येत मृतस्तज्ज्ञानमाप्नुयात् ॥१४
अन्यच्च देवदेवस्य स्थानं पुण्यतमं शुभम् ।
भीमेश्वरमिति ख्यातं गत्वा मुञ्चति पातकम् ॥१५
तथान्यच्चण्डवेगायाः संभेदः पापनाशनः ।
तत्र स्नात्वा च पीत्वा च मुच्यते ब्रह्महत्यया ॥१६
सर्वेषामपि चैतेषां तीर्थानां परमा पुरी ।
नाम्ना वाराणसी दिव्या कोटिकोट्ययुताधिका ॥१७
तस्याः पुरस्तान्माहात्म्यं भाषितं वो मया त्विह ।
नान्यत्र लभ्यते मुक्तिर्योगिनाप्येकजन्मना ॥१८
एते प्राधान्यतः प्रोक्ता देशाः पापहरा नृणाम् ।
गत्वा संक्षालयेत् पापं जन्मान्तरशतैः कृतम् ॥१९
यः स्वधर्मान् परित्यज्य तीर्थसेवां करोति हि ।
न तस्य फलते तीर्थमिह लोके परत्र च ॥२०
प्रायश्चित्ती च विधुरस्तथा पापचरो गृही ।
प्रकुर्यात् तीर्थसंसेवां ये चान्ये तादृशा जनाः ॥२१ कूर्म २४४.२१

---

—११ –b) दे6-10 उ1 मुर्वे मुए मुव लोकेषु (→त्रै लोक्य-) –d) दे2 8 9 द1 म1 पाणा° (→गाण°)

१२. –a) दे4 प्र2 गुह्यतर (→गुह्यतम) –b) दे3 नकुले°, ते1 नकुले°, द1 कुलावी°, प्र3 उ1 लकुली° (→नकुली°), –c) दे6 तत, द1 प्र2 उ1 यत्र (→तत्र) –d) का1 दे3 लकुले° न1 प्र2 म1 उ1 लकुली° दे1 विमली° (→नकुली°)

१३ दे4 ⊙ –b) दे1 8 10 गङ्गाद्वार सुशोभन –d) का1 सुवृत, दे1 8-10 मानव, दे3 समुव मुर्वे मुए सभृत (→संवृत), द1 प्र2 म1 उ1 नित्य वसति चेश्वर

१४ –c) व2 दे3 मुब प्रमुच्यते दे1 8 10 द1 प्र2 म1 उ1 मुर्वे मुए, विशुद्ध्येत (→विमुच्येत) –d) का1 व2 दे6 मृतस्तु ज्ञान°, दे3 मृतस्तद्ज्ञान°, दे4 मृतस्तद्गत° (→मृतस्तज्ज्ञान°), ते1 मृतस्तु ज्ञानमवाप्नुयात्

१५ –c) का1 व2 3 दे2 6 भीमेश्वर (→भीमेश्वर) –d) व2 दे3 4 मुच्येत (→मुञ्चति), द1 प्र2 म1 उ1 स्नात्वा मुच्येत किल्बिषात्

१६ दे4 ab ⊙ –a) दे1 6 8-10 म1 मुर्वे मुए मुव तथान्यश्च, दे3 द1 प्र2 प्रयान्यश्च (प्र2 °न्यत्), ते1 तथापश्च (→तथान्यश्च), द1 प्र2 चन्द्र° (→चण्ड°) –b) दे3 म1 सगम (दे3 °मे), द1 प्र2 उ1 सदैव (→संभेद), का1 ते1 °नाशन, दे3 °नाशने (→°नाशन) –c) का1 च मुच्येत, दे4 तु राजेन्द्र, ते1 जपित्वा च (→च पीत्वा च) –d) का1 ब्रह्महत्या व्यपोहति

१७ –b) दे3 तीर्थानां तीर्थमुत्तम –c) दे3 द1 प्र2 म1 पुण्या (→दिव्या) –d) द1 प्र3 दिव्य° (→कोटि°), दे3 म1 कोटिकोट्यधिकाधिका

१८ –a) उ1 तस्या (→तस्याः), ते1 पुरस्तु (→पुरस्तात्) –b) दे6 भाषित, ते1 भाषितु (→भाषितं), दे8 द1 भोमया म1 घा मया, प्र2 उ1 च मया (→वो मया) –c) का1 व2 3 दे1 3 4 6 8 10 न1 द1 प्र2 उ1 मुर्वे मुए मुव लभते ते1 कुरुते (→लभ्यते), दे1 4 8 10 न1 ते1 द1 प्र2 उ1 मुक्ति (→मुक्तिर्) –d) का1 योगिना दे4 न1 ते1 प्र2 उ1 योगिनी, दे1 8-10 उ1 मुव मुए मुव योगिना (→योगिना-)

१९ –a) दे4 एतत्, ते1 एता (→एते), दे4 प्राधोन्यत, दे10 प्रधानत (→प्राधान्यत) –b) द1 प्र2 उ1 शुभा (→नृणा) –c) का1 कृत्वा (→गत्वा), व2 प्रक्षालयेत्, दे1 8-10 सख्या(दे6 9 °ख्या)लयेत (→संक्षालयेत्) –d) दे1 8-10 द1 प्र2 उ1 मुर्वे मुए मुव °शतैरपि (→°शतैः कृतम्)

२० –a) दे3 ते1 यस्तु, द1 येत्व, प्र2 यस्य, म1 यश्च (→य स्व) –b) द1 प्र2 उ1 तीर्थमेक (→तीर्थसेवा), दे3 वै, म1 च (→हि) –c) व2 3 दे2 8 फलद, दे10 उ1 लभते (→फलते)

२१ –a) दे10 प्रायश्चित्तश्च (→प्रायश्चित्ती च), दे4 विधिधास् (→विधुरस्), प्र2 उ1 प्रायश्चित्तविधि परस् (प्र2 °राम्). –b) दे4 8-10 न1 मुर्वे मुए मुव मापचरो दे6 पापचरो द1 प्र2 म1 उ1 पापप (उ1 ॰)रो (→पापचरो), द1 ग्रही (→गृही), दे3 तथा योगरतो भवेत् –c) दे3 °सेवां तु, द1 प्र2 उ1° सवास (→°संसेवां) –d) म1 पापाना गोचरा जना, मुर्वे. मुए. मुव यश्चान्यस्तादृशो जन

वे २ ४४ २२ सहाग्निर्वा सपत्नीको गच्छेत् तीर्थानि यत्नतः ।
सर्वपापविनिर्मुक्तो यथोक्तां गतिमाप्नुयात् ॥२२
ऋणानि त्रीण्यपाकृत्य कुर्याद् वा तीर्थसेवनम् ।
विधाय वृत्तिं पुत्राणां भार्यां तेषु निधाय च ॥२३
प्रायश्चित्तप्रसङ्गेन तीर्थमाहात्म्यमीरितम् ।
यः पठेच्छृणुयाद् वाऽपि मुच्यते सर्वपातकैः ॥२४

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायामुपरिविभागे द्विचत्वारिंशोऽध्यायः ॥४२॥

# ४३

सूत उवाच ।*

एतदाकर्ण्य विज्ञानं नारायणमुखेरितम् ।
कूर्मरूपधरं देवं पप्रच्छुर्मुनयः प्रभुम् ॥१

मुनय ऊचुः ।*

कथिता भवता धर्मा मोक्षज्ञानं सविस्तरम् ।
लोकानां सर्गविस्तारं वंशमन्वन्तराणि च ॥२
प्रतिसर्गमिदानीं नो वक्तुमर्हसि माधव ।
भूतानां भूतभव्येश यथा पूर्वं त्वयोदितम् ॥३

---

२१ श्लोकात् परं ते1 अधिकम्—

62 *वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥

२२ —a) न1 य (→वा) —b) म1 यानि वै (→यत्नत) —d) दे8 ग्र2 यथोक्त (→यथोक्ता)

२३ —a) ब2 प्रपाहृत्य, दे1 8 10 मुवें मुए प्रपाकृत्य (→प्यपाकृत्य) —b) दे1 8 10 मुवें मुए कुर्वं वा (→कुर्याद्वा) —c) द1 पुत्र (→वृत्तिं) —d) का1 दे1 4 द1 ग्र2 उ1 मुवें मुए निधाय (→निधाय).

२४ —d) दे1 8 10 मुवें मुए सर्वपापं प्रमुच्यते

पुष्पिका—

पुराणनाम—का1 द1 ग्र2 म1 उ1 इति श्रीकू(बा1 कौ)र्मपुराणे उपरिभागे, ब2 इति कूर्मपुराणे, ब3 दे7 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, दे1 3 4 6 8 10 इति श्रीकूर्मपुराणे, म इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे मुवें इति श्रीकूर्मपुराणे उत्तरार्धे, मुए इति श्रीकूर्मपुराणे उपविभागे, मुव इति श्रीकौर्मे महापुराणे उपरिभागे अध्यायनाम—दे3 4 न1 द1 म1 उ1 ○, का1 ब3 दे2 8 मुवें मुए मुव तीर्थमाहात्म्य नाम, ब2 दे1 8-10 तीर्थमाहात्म्ये, ते1 तीर्थयात्रामाहात्म्यवर्णनं नाम, ग्र2 तीर्थप्रसङ्ग नाम अध्यायसंख्या - ब2 दे6 ○, का1 एकचत्वारिंशोऽध्यायः ॥४१॥, ब3 दे2 एकचत्वारिंशोऽध्यायः, दे1 चतुश्चत्वारिंशोऽध्यायः ॥१८॥, दे4 8 9 द1 ग्र2 म1 चतुश्चत्वारिंशोऽध्यायः, दे10 मुवें चतुश्चत्वारिंशोऽध्यायः ॥४४॥, दे3 पञ्चचत्वारिंशोऽध्यायः ॥४५॥, म1 त्रिचत्वारिंशोऽध्यायः ते1 द्विचत्वारिंशोऽध्यायः, उ1 चतुश्चत्वारिंशोऽध्यायः, मुए त्रिचत्वारिंशोऽध्यायः, मुव द्विचत्वारिंशोऽध्यायः ॥४२॥

४३

* न1 ग्र2 उ1 सूत, ते1 श्रीशिव, + सूत, द1 ऋषय ऊचुः, म1 श्रीसूत

१ —a) ब1 एकदाकर्ण्य (→एतदाकर्ण्य)

* ब3 दे3 द1 ग्र2 उ1 ○, दे1 9 मुनय ऊचुः, न1 ते1 ऋषयः, म1 मुनयः, मुव ऋषय ऊचुः

२ —a) दे1 2 4 8 10 द1 ग्र2 म1 उ1 मुवें मुए मुव कथितो (→कथिता), दे1 4 8-10 द1 ग्र2 म1 उ1 मुवें मुए मुव धर्मो (→धर्मा) —b) ब1 मोक्षदानं, ब2 मोक्षद्वारं (→मोक्षज्ञानं), ब2 ते1 सुविस्तरम् (→सविस्तरम्) —c) ब3 स्वर्गविस्तारं, दे1 3 8 10 म1 द1 ग्र2 म1 उ1 मुवें मुए मुव सर्गविस्तारो (→सर्गविस्तारं) —d) का1 तथा, ब1 वंशो, दे1 8 9 वंशा, दे8 10 वंश (→वंश॰)

३ —a) दे1 8-10 मुवें मुए मुव इदानीं देवदेवेश, दे3 4 न1 ग्र2 म1 उ1 इदानीं प्रतिसर्गं (दे4 ॰सर्गं) नो —b) दे1 8 10 मुवें मुए मुव प्रलयं वक्तुमर्हसि, ते1 भविष्यं वक्तुमर्हसि —d) का1 यत्नो पूर्वं, ब1 दे2 ते1 जन्मपूर्वं, ब2 यस्तु पूर्वं, ब3 दे6 यत्र पूर्वं (→यथा पूर्वं)

३ श्लोकात् परं ब2 अधिकम् —

63 * प्रतिसर्गविच्छाम श्राम्य त्वत्तो यथ प्रभो ।

का1 b,c मध्ये अधिकम् —

64 * पूर्वरूपधरं देवं प्रलयं वक्तुमर्हसि ।

सूत उवाच ॥ॐ

श्रुत्वा तेषां तदा वाक्यं भगवान् कूर्मरूपधृक् ।
व्याजहार महायोगी भूतानां प्रतिसंचरम् ॥४

कूर्म उवाच ॥ॐ

नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा ।
चतुर्धाऽयं पुराणेऽस्मिन् प्रोच्यते प्रतिसंचरः ॥५
योऽयं संदृश्यते नित्यं लोके भूतक्षयस्त्विह ।
नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसंचरः ॥६
ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति ।
त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ॥७
महदाद्यं विशेषान्तं यदा संयाति संक्षयम् ।
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ॥८
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ।
प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ॥९
आत्यन्तिकश्च कथितः प्रलयोऽत्र ससाधनः ।
नैमित्तिकमिदानीं वः कथयिष्ये समासतः ॥१०
चतुर्युगसहस्रान्ते संप्राप्ते प्रतिसंचरे ।
स्वात्मसंस्थाः प्रजाः कर्तुं प्रतिपेदे प्रजापतिः ॥११
ततो भवत्यनावृष्टिस्तीव्रा सा शतवार्षिकी ।
भूतक्षयकरी घोरा सर्वभूतक्षयंकरी ॥१२
ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले ।
तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥१३ वें २.४५.१३

ॐ का1 ब1-3 दे2 3 6 तै1 म1 ○, न1 श2 उ1 सूत, द1 श्रीसूत

४ -a) तै1 शेषां (→तेषां), ब1 यदा, म1 तथा (→तदा). -c) दे3 व्याजहारस्मभूतानां -d) दे3 भूतक्षयम्, दे4 द1 भूतसंचर. (ब1 °रम्), श्र2 त1 प्रतिसञ्चय (उ1 °य) (→प्रतिसञ्चरम्)

ॐ दे3 ⊙, का1 दे2 कूर्मरूप उवाच, दे9 1 कूर्म उ., न1 म1 कूर्म, तै1 ब1 श्र2 उ1 श्रीकूर्म

५ -a) दे4 नित्ये (→नित्यो), श्र2 नित्यनैमित्तिके चैव -b) का1 दे1 8-10 मुवें मुए प्राकृतोऽथान्तिकस्तथा, ब3 दे2 प्राकृतोत्यन्तिको मत, दे6 प्राकृतोत्यन्तिको तथा, श्र2 उ1 प्राकृतात्यन्तिको यथा -c) ब1 चतुर्धा तु, दे4 चतुर्धा ये (→चतुर्धाऽयं) -d) दे4 प्रतिशञ्चर (→प्रतिसंचर)

६ ब1 ○ -a) श्र2 सङ्कीर्त्यते (→संदृश्यते) -b) न1 °क्षय स्त्विह (→°क्षयस्त्विह) -c) दे10 उ1 निस्य (→नित्य), ब3 न1 सकीर्त्तते, दे10 संकीर्तयेत्, श्र3 सकीर्त्तनो (→संकीर्त्यते)

७ -a) ब3 दे4 द1 ब्राह्मो, दे1 8 10 ब्रह्म, तै1 प्रोक्त (→ब्राह्मो), दे4 ****, द1 निमित्तिको, उ1 नैमुरतुको (?) (→नैमित्तिको) -c) दे3 त्रैलोक्यस्यैव, दे4 उ1 त्रैलोक्यस्यापि, द1 श्र3 म1 त्रैलोक्ये सोऽपि (→त्रैलोक्यस्यास्य).

८ -b) दे4 यदा यायति, द1 उ1 प्रतिसंय (उ1 °या) ति (→यदा संयाति). -c) न1 उ1 प्राकृत (→प्राकृतः), म1 प्रतिसर्गो य (→प्रतिसर्गोऽयं)

९ दे10 ab ○ -a) दे1 श्र2 ज्ञानादात्यन्तिक प्रोक्तो (श्र2 °क). -b) म1 परमात्मनि (→परमात्मनि) -c) दे10 प्राकृत (→प्रलय), तै1 प्रलयश्च समाख्यात. -d) दे4 द1 म1 नरै श्र2 जनै (→द्विजैः), तै1 प्रतिसर्गो वरैर्द्विजैः

१० -a) ब1 दे1 3 8 10 न1 मुवें मुए मुब आत्यन्ति- कस्तु, द1 श्र2 आत्यन्तिकश्च (→आत्यन्तिकश्च) -b) ब1 प्रलयोऽत्र प्रसाधन, ब2 3 प्रलयो लयसाधन, दे1 8 10 मुवें मुए मुब प्रलयो ज्ञानसाधन, दे4 म1 प्रलयोत्र मया श्रुत, दे6 प्रलयो- ऽत्रमसाधन, द1 श्र2 उ1 प्रलयोऽत्र महाभुज (उ1 °ब) -c) दे3 य, उ1 च (→व) -d) का1 ब1 3 दे3 6 न1 तै1 कीर्त- यिष्ये (→कथयिष्ये), दे1 श्र2 म1 समाहितः, उ1 समासक (→समासतः)

११ -a) दे1 8 9 चतुर्व्यूह, दे10 श्र2 मुवें मुए चतुर्व्यूह (→चतुर्युग) -b) दे3 द1 श्र2 म1 प्रतिसंचर (→प्रतिसंचरे) -c) दे1 कर्तु (→कर्तुं), दे10 स्वात्मा सृष्टुं प्रजाकर्तुं(?) -d) दे1 प्रतिपेदे (→प्रतिपेदे)

१२ -a) दे10 श्र2 मुवें मुए मुब ततोऽभवत्यनावृष्टिस् -b) ब2 शासिका (→तीव्रा सा) -d) श्र2 3 दे3 श्र2 म1 उ1 °क्षयकरी (→°क्षयंकरी)

१३ ब1 १३c–२८b ○ -a) दे6 यान्यल्पसाराणि, श्र2 यान्यल्पसाराणि, उ1 यान्यल्पसाराणि (→यान्यल्पसाराणि). -b) ब1-3 तै1 सत्यानि, दे6 सेव्यानि (→सत्त्वानि), दे1 8-10 मुवें मुए पृथिवीतले (→पृथिवीतले) -c) श्र2 यानि (→तानि), दे1 चानि, द1 श्र2 म1 उ1 चाग्र (→चाग्रे); दे6 प्रलीयन्ते (→प्रलीयन्ते) -d) दे3 भूमित्वमुपयाति च, द1 भूमौ वान्य- मुयान्ति च, श्र2 भूत्वा च स्पृद्यान्ति च, म1 भूमौ यान्त्यम्बु यान्ति च, उ1 भूमित्वा समुयान्ति च

वं २ ४५.१४ सप्तरश्मिरथो भूत्वा समुत्तिष्ठन् दिवाकरः ।
असह्य रश्मिर्भवति पिबन्नम्भो गभस्तिभिः ॥१४
तस्य ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे ।
तेनाहारेण ता दीप्ताः सूर्याः सप्त भवन्त्युत ॥१५
ततस्ते रश्मयः सप्त सूर्या भूत्वा चतुर्दिशम् ।
चतुर्लोकमिदं सर्वं दहन्ति शिखिनस्तथा ॥१६
व्याप्नुवन्तश्च ते विप्रास्तूर्ध्वं चाधश्च रश्मिभिः ।
दीप्यन्ते भास्कराः सप्त युगान्ताग्निप्रतापिनः ॥१७

ते सूर्या वारिणा दीप्ता बहुसाहस्ररश्मयः ।
खं समावृत्य तिष्ठन्ति निर्दहन्तो वसुंधराम् ॥१८
ततस्तेषां प्रतापेन दह्यमाना वसुंधरा ।
साद्रिनद्यर्णवद्वीपा निस्नेहा समपद्यत ॥१९
दीप्ताभिः सन्तताभिश्च रश्मिभिर्वै समन्ततः ।
अधश्चोर्ध्वं च लग्नाभिस्तिर्यक् चैव समावृतम् ॥२०
सूर्याग्निना प्रमृष्टानां संसृष्टानां परस्परम् ।
एकत्वमुपयातानामेकज्वालं भवत्युत ॥२१

---

१४ व1 ○ (द्र १२ पा वि) -a) दे4 द1 प्र2 उ1 सप्तरश्मिस्ततो भूत्वा -b) दे3 समुत्तिष्ठेद् दे8 ते1 समुत्तिष्ठद्, दे10 समुत्तिष्ठ, प्र2 सुमुत्तिष्ठो उ1 समुद्दिशो (→समुत्तिष्ठन्) -d) का1 पिबन्त्वापो, दे1 8 9 विभि च तो, दे3 पिबत्यभो दे4 पिबतीनो, दे6 पिबतभा, ते1 पिबन्निव, प्र2 वान्ध्व'त भो (→पिबन्नम्भो), दे10 विविभो भीग भवस्त्विभि

१५ व1 दे8 ○, दे1 न1 ते1 bcd ○ -a) का1 दे2-4 सर्वे (→सप्त) -b) दे3 पिबत्यभो महार्णव, दे10 पिबत्यम्बुर्महार्णवे, द1 म1 पिबन्त्यम्बुमहार्णवम, प्र2 उ1 पिबत्यम्बुमहार्णव (उ1 °वे) -c) दे3 ग्रनाहारेण (→तेनाहारेण), व2 3 ते सूर्या, दे3 ते तथा, दे10 द1 उ1 ते दीप्ता, मुबें मुए ता दीप्त्वा (→ता दीप्ता) -d) व2 3 दीप्ता सप्त, दे8-10 मुबें मुए सप्त सूर्या (→सूर्या सप्त), व2 3 मुब भवन्ति हि (व2 वै), दे10 भवत्यत, द1 प्र2 उ1 भवन्ति च (→भवन्त्युत)

१६ व1 ○, दे1 न1 ते1 a ○ -a) का1 व2 दे2 8 तस्य ते, प्र2 म1 उ1 ततस्ता (→ततस्ते) -b) व2 दे4 न1 द1 प्र2 सूर्यो भूत्वा दे1 8 10 मुबें मुए मुब शोषयित्वा (→सूर्या भूत्वा) -c) दे3 8-10 द1 म1 मुबें मुए इम (→इद), व2 कृत्स्न (→सर्वं) -d) दे3 दहन, दे4 ददाति (→दहन्ति), व2 3 मुबें मुए मुब शिखिनो यथा, दे3 शिखिनस्तदा, दे8 10 शखिनस्तथा, प्र2 म1 उ1 शिखिभिस्तथा (→शिखिनस्तथा)

१७ म1 ○ (द्र १३ पा वि) -a) दे4 ते1 उ1 व्याप्नुवति च (→व्याप्नुवन्तश्च), का1 विप्रो, व3 तीव्रा, दे1 8 10 मुबें मुए मुब दीप्ता (→विप्रा), द1 म1 व्याप्नुवन्तश्च तथा विप्रा, प्र2 प्राप्नुवन्श्च स्तो विप्रा -b) व2 दे1 8-10 प्रतापिता, दे4 8 प्रतापित्र, न1 प्रतापना, द1 प्र2 प्रभावित, म1 विभावित, मुबें मुए मुब प्रदीपिता (→प्रतापिन)

१८. व1. ○. -a) दे3 सूर्याश्च?, दे4 सूर्याश्च (→ते सूर्या) -b) द1 प्र2 म1 हृष्टा (→बहु-) -c) व1 सुसमावृत्य, उ1 खण्डमावृत्य (→ख समावृत्य) -d) व2 3 दे1 8-10 मुबें, मुए मुबें प्रदहन्तो, दे8 निर्दहन्ते, द1 प्र2 निर्दहन्ति, म1 विदहन्ति (→निर्दहन्तो)

१९ व1 ○, दे4 6 ab ○ -a) दे2 तेन (→तेषां), दे1 द1 प्र2 उ1 प्रभावेन (→प्रतापेन) -c) दे8-10 यान्ति (→साद्रि-), दे1 यान्ति नद्यर्णवद्वीपा, दे3 साद्रिद्रुमार्णवादीप्ता, दे4 साद्रिनद्य नवद्वीपा, दे8 मन्ति स्वर्णवर्दीपा -d) दे1 8-10 उ1 मुबें, मुए मुब सप्रपद्यते, न1 म1 सप्रपद्यत (→समपद्यत)

२० व1 ○, का1 दे3 8 न1 ते1 cd ⊙ -a) दे4 दीप्ताभि-, दे6 म1 दीप्ताभि (→दीप्ताभि), दे4 महताभिश्च, द1 प्र2 म1 उ1 संहृ(व1 °ह)ताभिश्च (→सन्तताभिश्च), व2 3 मुब मरीचिभि प्रदीप्ताभि -b) व2 3 मुब सततामि, दे4 द1 प्र2 म1 उ1 व्याप्ताभिश्च, दे3 गिरिद्भिश्च (→रश्मिभिर्वै), का1 दे2 8 ते1 ज्वालाभिश्च समावृत, न1 रश्मिभि स समावृत -c) व2 3 दे3 4 द1 प्र2 म1 उ1 अधश्चोर्द्ध्व च तिर्यक् च -d) व2 3 समावृत्य सहस्रश, दे3 द1 प्र2 म1 उ1 दिशश्चैव समावृता, दे4 स दिशश्च समावृत

अत परम् व2 पुस्तके b, c मध्ये अधिकम् —

* 'दीप्ताभि सन्तताभिश्च ज्वालाभिश्च समन्तत (= २०ab)

२१ व1 ○ -a) का1 दे2 8 प्रयाग्निना, प्र2 म1 सूर्याग्निना (→सूर्याग्निना), का1 दे2 प्रसृष्टाना, व2 3 प्रदीप्तानां, दे8 द1 प्र2 म1 प(दे8 म1 प्र)हृष्टानां, ते1 सतप्ताना, उ1 सम्भृतानां (→प्रमृष्टाना), दे3 सूर्याग्निभोदविष्टाना -b) दे3 4 उ1 सतप्ताश्च, दे10 सपृष्टाना, ते1 सम्पृष्टानां, द1 प्र2 सम्प्रहृष्टानां (→ससृष्टाना) -c) व3 एकत्वमुपजाताना, दे4 ते1 द1 प्र2 म1 उ1 एकत्वमुपपन्नाना -d) दे3 एकज्वाला, ते1 एककाल, द1 प्र2 म1 एकशान्त (→एकज्वाल), दे1 भवत्युत, दे4 भवत्युनः, दे10 ते1 भवायत (→भवत्युत)

सर्वलोकप्रणाशश्च सोऽग्निर्भूत्वा सुकुण्डली ।
चतुर्लोकमिदं सर्वं निर्दहत्यात्मतेजसा ॥२२
तत प्रलीने सर्वस्मिञ् जङ्गमे स्थावरे तथा ।
निर्वृक्षा निस्तृणा भूमि कूर्मपृष्ठा प्रकाशते ॥२३
अम्बरीषमिवाभाति सर्वमापूरितं जगत् ।
सर्वमेव तदर्चिभि पूर्णं जाज्वल्यते पुन ॥२४
पाताले यानि सत्त्वानि महोदधिगतानि च ।
ततस्तानि प्रलीयन्त भूमित्वमुपयान्ति च ॥२५
द्वीपाश्च पर्वताश्चैव वर्षाण्यथ महोदधीन् ।
तान् सर्वान् भस्मसात् कृत्वा सप्तात्मा पावक प्रभु ॥२६
समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्वश ।
पिबन्नप समिद्धोऽग्नि पृथिवीमाश्रितो ज्वलन् ॥२७
तत सवर्तक शैलानतिक्रम्य महास्तथा ।
लोकान् दहति दीप्तात्मा रुद्रतेजोविजृम्भित ॥२८
स दग्ध्वा पृथिवीं देवो रसातलमशोषयत् ।
अधस्तात् पृथिवीं दग्ध्वा दिवमूर्ध्वं दहिष्यति ॥२९
योजनाना शतानीह सहस्राण्ययुतानि च ।
उत्तिष्ठन्ति शिखास्तस्य वह्ने सवर्तकस्य तु ॥३०
गन्धर्वांश्च पिशाचाश्च सयक्षोरगराक्षसान् ।
तदा दहत्यसौ दीप्त कालरुद्रप्रचोदित ॥३१ व २४५।३१

---

२२ ब1 ○ –a) तै1 एक (→मय) द1 प्र० उ1 भुव (→लोक) दे3 4 प्रमाणोऽत्र न1 वै1 म1 प्रमाण (वै1 °णश) च (→प्रणाशश्च) –b) दे4 योऽग्निर् (→सोऽग्निर्) ब2 3 दे6 भूत्वाऽग्र दे1 4-8 10 उ1 मुव मुए मुब भूत्वा तु न1 भूत्वानु वै1 भूत्वाथ प्र2 निभूत म1 भूत्वा च (→भूत्वा सु) ब2 3 दे1 4 8 10 म1 वै1 मुवे मुए मुव मण्डली द1 प्र2 म1 उ1 मण्डल (→कुण्डली) दे3 सह सूर्योऽग्निमण्डल –c) दै1 8 10 मुवें मुए इम (→इद) –d) दे1 3 4 8 9 न1 वै1 मुव मुए मुब निदहत्याशु द1 म1 निदहत्यवि° (→निर्दह त्यात्म)

२३ ब1 ○ –a) ब3 दे8 प्रलीन (दे6 °न) (→प्रलीने) दे3 लोकेऽस्मिन् (→सर्वस्मिञ्) –b) स्थावरे जगमे तथा –c) का1 दे2 निम्नगा (→निस्तृणा) –d) दे6 °प्रष्ठा (→°पृष्ठा)

२४ –a) दे1 4 8 10 म1 वै1 व1 प्र2 म1 उ1 मुए अम्बरीष इवाभाति –b) दे3 द1 प्र2 म1 उ1 °व्याप्रित दे4 °व्यापारित (→°मापूरित) –c) ब2 3 मुर्वे सर्वमेवतदर्चिभि दे1 8 10 मुर्वे मुए सर्वमेव तदर्चिर्भि दे3 सर्वमेतत्तदर्चीभि दे4 सर्व चैव त दम्योभि वै1 सर्वमेतत्तदार्चिभि –d) ब2 पूर्व दे8 पूर्णा (→पूर्ण), दे3 4 प्रज्वाल्यते म1 जज्वाल्यते (→जाज्वल्यते) म1 सपूर्णो ज्वाल्यते पुन द1 उ1 पूर्ण न ज्वाल्यते पुन

२५ ब1 ○ दे3 4 म1 cd ○ –a) का1 दे3 ओषधानि, ब० 3 दे6 तै1 तीर्थानि दे3 रत्नानि (→सत्त्वानि) –b) दे3 °चितानि दे4 द1 प्र० म1 °शयानि (→°गतानि) –c) का1 ब2 3 दे6 मुब तत्र तानि प्र3 तत्र स्थानि (→तत स्तानि) –d) का1 ब० 3 दे3 6 वै (→च)

२६ ब1 ○ –b) ब2 म1 सर्वाणिय दे4 सर्वाण्यपि (→वर्षाण्यथ) दे3 महौषधीन् तै1 महोदधिम् (→महोदधीन्)
–c) दे1 3 4 8 10 न1 द1 प्र० म1 उ1 मुर्वें मुए मुब भस्मसाच्चक्र (→भस्मसात्कृत्वा)

२७ ब1 ○ –a) म1 समुद्रेभ्य (→समुद्रेभ्यो) दे4 नदीभिश्च (→नदीभ्यश्च) –b) दे1 8-10 मुर्वें मुए प्राप कुम्भादेव सर्वश न1 सर्वेभ्यश्चैव सर्वश –c) दे3 पिबन्नपि तै1 पिबन्नप (→पिबन्नप) दे3 4 तै1 समुद्रोऽग्नि द1 प्र2 म1 उ1 समुद्रोऽग्नि (→समिद्धोऽग्नि) –d) वै1 जगत्, द1 म1 वह्नी उ1 जल (→ज्वलन्) दे1 पृथिवीमाश्रितोऽभवत् दे4 पृथिवामाश्रित जल

२८ ब1 म1 ab ○ –b) दे3 महानल प्र3 महास्तथा (→महास्तथा) –c) दे3 तेजोभि तै1 दीप्तोऽग्नि (→दीप्तात्मा) –d) दे1 8 10 मुव मुए मारुतेयो (→रुद्रतेजो) दे3 रुद्रतेजो भिजृम्भित उ1 मारुततेजोविजृम्भित

२९ ब1 cd ○ –a) म1 भित्वा स (→स दग्ध्वा) दे3 स दग्धपृथिवीलोको –b) दे4 न1 म1 प्रशोषयत् द1 प्रशोषयेत मुव मुए मुब प्रशोषयत् (→अशोषयत्) –d) दे3 दहत्यपि द1 प्र2 म1 गमिष्यति (→दहिष्यति)

३० ब1 ab ○ दे4 cd ○ –b) दे8 सहस्राणि शतानि च –c) दे3 ध्यतिष्ठन्ति (→उत्तिष्ठन्ति) द1 प्र2 म1 उ1 तत्र (→तस्य) –d) का1 ब1 3 दे० 8 न1 वै1 हि दे3 10 द1 प्र० म1 उ1 च (→तु)

अत्र पर ब3 पुस्तके b c मध्ये अधिकम्—

*रोसज सर्वनुप्राप्य हुत्वा जगदिद शन । (≈३३cd)

३१ ब1 दे4 ab ○ –a) ब3 दे1 8 10 न1 पिशाचान् (→पिशाचान्) –b) दे1 8 10 न1 °राक्षसा (→°राक्षसान्) –c) दे8 दहत्यसौ प्र० हरत्यसौ (→दहत्यसौ) वै1 तदा दहति दीप्त सन् –d) दे8 कालचक्र, न1 प्र2 उ1 कालरुद्र

वे.४५.३२ भूर्लोकं च भुवर्लोकं स्वर्लोकं च तथा महः ।
दहेदशेषं कालाग्निः कालो विश्वतनुः स्वयम् ॥३२
व्याप्तेष्वेतेषु लोकेषु तिर्यगूर्ध्वमथाग्निना ।
तत् तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः ।
अयोगुडनिभं सर्वं तदा चैकं प्रकाशते ॥३३
ततो गजकुलोन्नादास्तडिद्भिः समलंकृताः ।
उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्तका घनाः ॥३४
केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः ।
धूम्रवर्णास्तथा केचित् केचित् पीताः पयोधराः ॥३५
केचिद् रासभवर्णास्तु लाक्षारसनिभास्तथा ।
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे ॥३६
मनःशिलाभास्त्वन्ये च कपोतसदृशाः परे ।
इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा ।
इन्द्रचापनिभा केचिदुत्तिष्ठन्ति घना दिवि ॥३७
केचित् पर्वतसंकाशाः केचिद् गजकुलोपमाः ।
कूटाङ्गारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः ।
बहुरूपा घोररूपा घोरस्वरनिनादिताः ॥३८
तदा जलधराः सर्वे पूरयन्ति नभःस्थलम् ।
ततस्ते जलदा घोरा राविणो भास्करात्मजाः ।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥३९
ततस्ते जलदा वर्षं मुञ्चन्तीह महौघवत् ।
सुघोरमशिवं सर्वं नाशयन्ति च पावकम् ॥४०

(→कालरुद्र-), दे। 8-10 मुबॅ, मुए, मुब °प्रचोदित (→°प्रचोदित ); म। कालरुद्रेण चोदित .

३२ ब। ⊙. -a) तै। भूर्लोकश्च भुवर्लोक -b) म। तथा पर , दे। तथा महान् (→तथा मह ), दे। 8-10 मुबॅ, मुए महर्लोकं तथैव च, तै। स्वर्लोकश्च तथा मह. -d) दे। 4 8-10 द। प। म। उ। मुबॅ. मुए मुब कालाग्नि- (दे। 0 °ए ) (→कालो विश्व-); द। प। म। उ। -तनु (→-तनुः)

३३ ब। cd ⊙. -a) म। ब। -3 दे। 8 म। तै। व्याप्तेषु तेषु लोकेषु, द। प। म। उ। तेन व्याप्तेषु लोकेषु -d) दे। समस्त (→कृत्स्नं ), तै। दृश्यते जगदिद शनै. -c) दे। 8 9 मुबॅ मुए. इव (→निभं); प। सर्वं (→सर्वं); तै। मयोग्रमुनिभं सर्वं -f ) दे। 3 8-10 म। प। मुबॅ मुए तदैवक, दे। तै। द। म। उ। तदैवेदं (→तदा चैकं)

३४. -a) दे। 8-10 म। मुबॅ मुए ततो गजकुलाकाराम्, दे। ततो गजकुलोन्मान , तै। ततो गजाकुलोन्मानाम्, प। ततो गजकुलो ऋगत, प। ततो गजकुलाननाता -b) म। ब। -3 दे। 2-6 तै। स्तनितैः (→तडिद्भि ) -c) दे। तथा (→तदा).

३५ ब। cd ⊙. -b) म। दे। कुङ्कु°, दे। कुमुद° (→कुमुदः°), -c) दे। 9 तै। म। धूम° (→धूम्र°)

३६. ब। ⊙; द। cd ⊙. -a) ब। 3 दे। केचिद् रासभवर्णाभ्याम्, दे। म। द। प। म। उ। केचिन्मासाश्मवर्णाश्च -b) दे। 1 8-10 म। द। प। म। उ। मुबॅ मुए. परे (→तथा), दे। लाक्षारसविभ्रमास्तथा -c) म। °कुन्द° (→°कुन्द°), म। शङ्खकुन्दनिभास्तथा. -d) तै। जात्यञ्जन°, प। उ। माषा-ञ्जन° (→जात्यञ्जन°), दे। 4.8-10 म। मुबॅ, मुए मुब. तथा (→परे)

३७ ब। ⊙; द। cd ⊙, दे। 4 म। उ। de ⊙. -a) दे। 8-10 म। मुबॅ, मुए. च परे, दे। 4 न। तै। द। प। उ। स्तथपरे (→स्त्वन्ये च); दे। मन शिलाभिमास्तथे. -c) न। प। म। °गोप° (→°गोप°) -d) म। केचिद्धालनिभास्तथा. -e) म। कारपक्ष°, ब। 3 दे। 2 कारण्डव° (→इन्द्रचाप°) -f) ब। उत्तिष्ठन्ति घना दिवि .

३८. ब। ⊙; दे। 38c-39ab ⊙ -a) म। दे। पङ्कज° (→पर्वत°) -b) ब। 3 दे। 2 8 म। तै। म। मुब. कूटागार°, द। उ। कूटाकार° (उ। °र°) (→कूटाङ्गार°) -d) दे। तै। द। प। म। उ। °कुलोत्तमा , न। °कुलोद्भवाः (→°कुलोद्वहा ). -e) तै। बहुरूपपरास्त्वन्ये. -f) दे। घोरनि-स्वननादित .

३९ दे। ab. ⊙. -a) म। ब। -3 दे। .3 8.10 म। उ। मुबॅ मुए. मुब. नभस्तलम् (→नभ स्थल) -c) दे। ततस्ते जलदास्तत्र -d) ब। दे। 6 वारिदा, दे। 4 म। रावणा (→राविणो). -e) ब। दे। 4 8-10 म। प। म। उ। मुबॅ मुए. मुब. सप्तधा संवृतात्मानं. दे। तै। सप्तधात्मानम् (→संवृतात्मान ), -f) ब। घोरमनलं, ब। शमयन्ति, दे। 8-10 मुए शमयेद्युत, मुबॅ शमयन्ति ते (→शमयन्त्युत)

४०. ब। cd ⊙. -a) ब। वर्षं (→वर्षं) -b) दे। विमुञ्चन्ति, दे। मुञ्चन्ति च, म। मुञ्चन्तीव (→मुञ्चन्तीह) -b) दे। 4 म। महोदधम्, मुब. महारवं (→महौघवत्). -c) तै। सघोर (→सुघोर); दे। 8-10 मुबॅ. मुए. मुब वर्षं (→सर्वं), दे। तै घोरमशिवं सर्वं, द। उ। सुघोरमशिवं सर्वं. -d) ब। नाशयन्तीव पावकं.

प्रवृष्टे च तदात्यर्थमम्भसा पूर्यते जगत् ।
अद्भिस्तेजोभिभूतत्वात् तदाऽग्निः प्रविशत्यपः ॥४१

नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसंभवाः ।
प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः ॥४२

धाराभिः पूरयन्तीदं चोद्यमानाः स्वयंभुवा ।
अत्यन्तसलिलौघैश्च वेला इव महोदधिः ॥४३

साद्रिद्वीपा तथा पृथ्वी जलैः सछाद्यते शनैः ।
आदित्यरश्मिभि. पीतं जलमभ्रेषु तिष्ठति ।
पुनः पतति तद् भूमौ पूर्यन्ते तेन चार्णवा ॥४४

ततः समुद्राः स्वा वेलामतिक्रान्तास्तु कृत्स्नशः ।
पर्वताश्च विलीयन्ते मही चाप्सु निमज्जति ॥४५

तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
योगनिद्रा समास्थाय शेते देव. प्रजापतिः ॥४६

चतुर्युगसहस्रान्त कल्पमाहुर्महर्षयः ।
वाराहो वर्तते कल्पो यस्य विस्तार ईरित ॥४७

असख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः ।
कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः ॥४८

सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।
तामसेषु हरस्योक्तं राजसेषु प्रजापतेः ॥४९

योऽय प्रवर्तते कल्पो वाराहः सात्त्विको मतः ।
अन्ये च सात्त्विकाः कल्पा मम तेषु परिग्रहः ॥५० मे २ ४५ ५३

---

४१ व1 ⊙ –a) का1 दे2 6 प्रवि(दे2 वृ)ष्टैश्च, व3 प्रवृत्तेन व3 प्रवृष्ट्यैस्तैस्, दे1 8 10 मुए प्रतिवृद्धस् न1 प्रवृत्तैश्च, ते1 प्रवृत्तिश्च, द1 प्रदष्टे च, प्र2 उ1 प्रवृत्त च, म1 प्रवृष्टेषु मुवे प्रतिवृद्ध, मुब प्रवृद्धैस्तै (→प्रवृष्टे च), दे3 ततो°, दे10 तथा° (→तदा°) –b) दे4 मनसा, द1 प्र2 म1 उ1 तमसा (→अम्भसा), व2 किल (→जगत्) –c) मुव °भूतात्मा (→°भूतत्वात्), व2 अद्भिस्तेजो विभूतित्वात्, व3 अद्भिस्तेजोधिभूतात्मा दे1 4 8 10 प्र2 उ1 मुवे मुए अद्भिस्ते-जोभिभूतत्वात् –d) दे2 3 6 10 ते1 द1 तदाग्नि दे4 प्र2 उ1 मे मुए तदग्नि (→तदाग्नि), का1 व2 प्रविनश्यति, दे2 6 । प्रविशत्यपि दे3 शमयत्यथ, प्र2 प्रविशत्यप (→प्रविशत्यप)

४२ –a) व3 दे3 °शते (→°शरै) –b) व1 3 दे4 । ते1 पश°, व2 क्षल° (→क्षय°) –c) दे4 द1 प्र2 म1 प्लावयन्ति (→प्लावयन्तो-), दे1 3 4 8 10 न1 द1 प्र2 म1 । मुवे मुए मुव प्लावयन्तो जगत्सर्वं

४३ –a) द1 प्र2 म1 उ1 वारिभि (→धाराभि), –b) दे1 8-10 न1 पूरयन्तस्ते, ते1 पूरयन्तीह (→पूरयन्तीद) –b) दे4 स्वयभुव, मुवे मुए मुव नोद्यमाना (→चोद्यमाना), दे4 स्वयभुव, दे10 मनो स्वय (→स्वयभुवा) –c) दे1 8 10 मुवे मुए मुव सलिलौघस्तु, दे3 ते1 सलिलौघैस्तु (→सलिलौघैश्च) –d) दे3 महोदधि, दे1 8 10 न1 ते1 द1 प्र2 म1 उ1 मुवे मुए मुव महोदधे (→महोदधि), व2 3 परिप्लाव्य दिशो दश

४४ –a) व2 3 दे4 8 साब्धि°, प्र2 सर्व° (→साद्रि°), दे1 8-10 मुवे मुए मुव तत, दे3 घनै, ते1 तदा (→तथा), दे10 पृथ्वी (→पृथ्वी) –c) दे10 प्र2 म1 आप्लाव्यते, ते1 सपूर्यते (→सछाद्यते), व2 3 ते1 मुव घनै (→शनै), दे3 जलै सहन्यते तदा –d) व1 मध्ये तु दे3 त्वभ्रेषु दे4 म1 वाभ्रेषु द1 प्र2 उ1 चाभ्रेषु (→मभ्रेषु) –e) म1 पुन पतितस्तभूमौ, ते1 पुन पतन्ति ते भूमौ

४५ दे4 ○, व1 cd ○ –a) दे3 समुद्रास्ते, दे10 समुद्रा स्वा म1 समुद्रास्ता (→समुद्रा स्वा) –b) दे1 8-10 प्रतिक्रम्यास्तु (दे1 °शु) (→प्रतिक्रान्तास्तु)

४६ –a) न1 मुवे मुव तस्मिन्नेकार्णवघोरे –c) दे10 समास्थाय, द1 प्र2 म1 उ1 समासाद्य (→समास्थाय) –d) व2 3 जगत्पति (→प्रजापति)

४७ –a) दे6 ते1 द1 प्र2 म1 सहस्रान्ते (→सहस्रान्त) –b) दे1 3 4 8 10 द1 प्र2 म1 उ1 मुवे मुए मुव मनीषिण (→महर्षय) –c) दे1 4 द1 वराहो (→वाराहो) –d) दे1 4 8 10 द1 प्र2 उ1 मुवे मुए मुव विस्तर (→विस्तार)

४८ –a) व3 दे2 6 तदा (→तथा), द1 असंख्यास्तथा कल्पा –b) दे3 °हरात्मका दे6 10 न1 द1 °शिवात्मिका (→°शिवात्मका) –c) व1 कथितानि, दे3 वदितास्तु, दे4 द1 प्र2 द1 कथिताश्च (→कथिता हि) –d) दे3 तत्त्व° (→काल°)

४९ न1 ○ –a) दे3 सात्विकेष्वेव दे6 सात्त्विकेष्वथ, दे10 स्वात्तिकेष्वथ (→सात्त्विकेष्वथ) –b) प्र2 उ1 कथित (→अधिक) –c) का1 व1-3 दे2 शिव° (→हर°)

५० न1 ab ○ –a) व2 सोऽय (→योऽय), दे4 कालो (→कल्पो) –c) दे6 अन्ते च, प्र2 अन्येश्च, म1 अन्येषु (→अन्ये च) –d) न1 तेषु तेषु, द1 मम चेह-, उ1 मानवेषु (→मम तेषु), द1 प्र2 म1 परिग्रह (→परिग्रह), दे6 मम तेष्वपरिग्रह

मैं २४५.२२ ध्यानं तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः ।
आराध्य गिरिशं मां च यान्ति तत् परमं पदम् ॥५१
सोऽहं सत्त्वं समास्थाय मायी मायामयीं स्वयम् ।
एकार्णवे जगत्यस्मिन् योगनिद्रां व्रजामि तु ॥५२
मां पश्यन्ति महात्मानः सुप्तं कालं महर्षयः ।
जनलोके वर्त्तमानास्तपसा योगचक्षुषा ॥५३
अहं पुराणपुरुषो भूर्भुवः प्रभवो विभुः ।
सहस्रचरणः श्रीमान् सहस्रांशुः सहस्रदृक् ॥५४
मन्त्रोऽग्निर्ब्राह्मणा गावः कुशाश्च समिधो ह्यहम् ।
प्रोक्षणी च स्रुवश्चैव सोमो घृतमथास्म्यहम् ॥५५
संवर्तको महानात्मा पवित्रं परमं यशः ।
वेदो वेद्यं प्रभुर्गोप्ता गोपतिर्ब्राह्मणो मुखम् ॥५६
अनन्तस्तारको योगी गतिर्गतिमतां वरः ।
हंसः प्राणोऽथ कपिलो विश्वमूर्त्तिः सनातनः ॥५७
क्षेत्रज्ञः प्रकृतिः कालो जगद्बीजमथामृतम् ।
माता पिता महादेवो मत्तो ह्यन्यन्न विद्यते ॥५८
आदित्यवर्णो भुवनस्य गोप्ता
नारायणः पुरुषो योगमूर्त्तिः ।
मां पश्यन्ति यतयो योगनिष्ठा
ज्ञात्वात्मानममृतत्वं व्रजन्ति ॥५९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे त्रिचत्वारिंशोऽध्यायः ॥४३॥

---

५१ दे₄ cd ○ –a) द₁ प्र₂ ऊ₁ जपस् (→तपस्) –b) दे₁ 8-10 मुवँ मुए लब्ध्वा ते योगिन पर, दे₃ लब्ध्वा तेष्वेव योगिन, ऊ₁ लब्ध्वा तेष्वेव न पर –c) ब₁-₃ न₁ वा (→च), दे₁ 8 10 द₁ प्र₂ म₁ ऊ₁ मुवँ मुए माराध्य त (द₁ प्र₂ म₁ ऊ₁ मा) च गिरीशं, ते₁ आराध्य गिरिश गता

५२ दे₄ ab ○. –a) दे₂ ₃ ते₁ मुवँ मुए मुव तत्वं (→सत्त्व), दे₁ सोहं म हृतमास्थाय –b) का₁ व₁ ₂ द₁ प्र₂ म₁ मायामय, दे₂ ₃ ऊ₁ मुव मायामय, दे₈ मायामयी मुए मायामयीं (→मायामयीं), ब₁ शिव, ब₂ जगत्, ते₁ नरा (→स्वय) –d) दे₃ च (→तु)

५३ –a) दे₁ 8 10 महात्मान (→महात्मान), दे₃ मा प्रपश्यन्ति सगुप्त, –b) ब₁ ₂ दे₁₀ सुप्तकाल, ब₃ स्वप्त काल, दे₁ गतकाल, दे₃ कालकाल, दे₄ सुप्त काल, दे₉ ₀ ते₁ द₁ प्र₂ मुव सप्तकाल, ऊ₁ सर्वकाल, मुवँ सुप्तिकाले, मुए सुप्तकाले (→सुप्त काल) –d) का₁ दे₁ 6 8 10 ते₁ द₁ ऊ₁ मुवँ मुए मुए सायया (→तपसा)

५४ ते₁ ab ○ –a) दे₁ ३ 6 8-9 न₁ मुवँ मुए मुव पुराण, द₁ पुराण (→पुराणपु-) –b) दे₈ म₂ पुरुषो (→प्रभवो), दे₃ भुवःस्वयनो विभु, म₁ भूर्भुव स्वर्भवो विभु –d) दे₁ ३ 8-10 मुवँ मुए, मुव सहस्राण, द₁ प्र₂ ऊ₁ सहस्राक्ष (→सहस्रांशु), का₁ ब₁ ₃ दे₁ २ ३ 6-8 9 न₁ ते₁ मुवँ मुए मुव सहस्रपात्, दे₄ 10 ऊ₁ सहस्रपुत्र (→सहस्रदृक्)

५५ म₂ ○, दे₃ ₄ cd ○ –a) का₁ दे₂-₈ मन्त्राऽग्नि-, द₁ 8-10 मुवँ मुए मुव मन्त्रोऽहं, द₄ मंत्रोऽग्नि-, म₂ मन्त्राग्नि- (→मन्त्रोऽग्नि-), ब₃ दे₁ ते₁ ब्राह्मणो, मुव ब्राह्मणा (→ब्राह्मणा) –b) दे₁ 8-10 मुवँ मुए कुशोऽथ (→कुशाश्च) –c) दे₁ 8 10 प्र₂ मुवँ मुए प्रोक्षणीय स्रुवश्चैव, द₁ ऊ₁ प्रोक्षणीयः स्रुवश्चैव, म₁ यजुश्च स्रुक् स्रुवो चैव –d) दे₆ सोम-, ऊ₁ सोम्यो (→सोमो), दे₁ 8 10 द₁ प्र₂ म₁ ऊ₁ मुवँ मुए घृत (→घृत), द₁ मथो ह्यहं (→मथास्म्यहम्)

५६ ब₁ ○, म₁ cd ○ –a) दे₆ सवर्तक (→संवर्तको), दे₁ प्र₂ महात्मान (प्र₂ °न), दे₉-10 महात्माह (→महानात्मा), ते₁ यदि, प₁ सदा (→यश) –c) ₁ 8-10 मुवँ, मुए मेधाव्यहं, दे₄ वेधावेद्य, न₁ वेदावेद्य, ते₁ तदावद्य, द₁ प्र₂ ऊ₁ वेदवेद्य (→वेदो वेद्य), दे₃ विभुर् (→प्रभुर्), ते₁ पाता (→गोप्ता) –d) का₁ ब₃ दे₁ २ 6 8 9 ते₁ मुवँ मुए मुव ब्राह्मणो (→ब्रह्मणो), द₁ प्र₂ ऊ₁ गोपतिश्चाथ गोमय (ऊ₁ °म)

५७ ब₁ ○ –c) दे₃ महः, ते₁ सिंह (→हंस), प्र₂ हंस यानो कपिलो, प्र₂ हंस प्राणोऽथवा यानो –d) म₁ ह्यनमूर्तिश्च सनातन

५८ म₂ ab ○. –a) म₁ कार्यो (→कालो) –b) न₁ द्वीप (→बीजं) –d) दे₁ 8 10 मुवँ मुए ह्यन्यो (→ह्यन्यन्न), दे₄ मत्तश्चान्य न विद्यते

५९ –a) म₁ हिरण्य° (→आदित्य°) –b) ते₁ परा-यण (→नारायण) –c) दे₁ 4 8-10 न₁ मुवँ मुए त (→मां), दे₁ 8 10 मुवँ, मुए मुव पश्यन्ते (→पश्यन्ति) –d) दे₁ 8 9 प्र₂ मुवँ मुए मम तत्त्वं (→ममृतत्वं), प्र₂ ते₁ द₁ प्र₂ म₁ ऊ₁ अर्थार्थं र, दे₄ मवेद्ये (→व्रजन्ति)

पुष्पिका—[द₁ पुस्तके अध्यायसमाप्तिरहिता]

पुराणनाम—का₁ दे₈ म₁ इति श्रीकू(का₁ कौ)र्मपुराणे, ब₁ इति कौर्मे, ब₂ दे₂ इति कूर्मपुराणे, ब₃ दे₃ इति कू(दे₃ कौ)र्मे

# ४४

कूर्म उवाच ।※

अतः परं प्रवक्ष्यामि प्रतिसर्गमनुत्तमम् ।
प्राकृतं हि समासेन शृणुध्वं गदतो मम ॥१

गते परार्द्धद्वितये कालो लोकप्रकालनः ।
कालाग्निर्भस्मसात् कर्तुं करोति निखिलं मतिम् ॥२

स्वात्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः ।
दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥३

तमाविश्य महादेवो भगवान्नीललोहितः ।
करोति लोकसंहारं भीषणं रूपमाश्रितः ॥४

प्रविश्य मण्डलं सौरं कृत्वाऽसौ बहुधा पुनः ।
निर्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक् ॥५

स दग्ध्वा सकलं सत्त्वमस्त्रं ब्रह्मशिरो महत् ।
देवतानां शरीरेषु क्षिपत्यखिलदाहकम् ॥६

दग्धेष्वशेषदेवेषु देवी गिरिवरात्मजा ।
एका सा साक्षिणी शंभोस्तिष्ठते वैदिकी श्रुतिः ॥७

शिरःकपालैर्देवानां कृतस्रग्वरभूषणः । वं २४६८

---

पुराणे उपरिभागे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे व्यास- गीतासु दे4 उ1 इति श्रीकूर्मपुराणे उत्तरभागे, दे8 9 मुए इति श्रीकूर्मपुराणे उपरि(मुए °वि)भागे व्यासगीतासु दे10 इति श्रीकूर्मपुराणे व्यासगीतासु, ते1 इत्यादिमहापुराणे श्रीकौर्मे उपरिभागे, प्र2 म1 इति श्रीकूर्मपुराणे उपरिभागे मुबँ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुब इति श्रीकौर्मे महापुराणे उपरिभागे अध्यायनाम—दे1 3 4 8 10 न1 ते1 म1 उ1 मुबँ मुए O, वा1 व1-3 दे2 6 प्रतिसर्गवर्णनो (व2 °न) नाम, प्र2 कालनिर्णयं नाम, मुब भूतप्रलयवर्णनं नाम अध्यायसंख्या—व2 दे8 O, का1 द्विचत्वारिंशोऽध्याय ॥४३॥, व1 3 दे2 द्वि(व3 द्वा) चत्वारिंशोऽध्याय, दे1 पञ्चत्वा रिंशोऽध्याय ॥३६॥ दे3 षट्चत्वारिंशोऽध्याय ॥४६॥, दे4 8 9 प्र2 म1 पञ्चचत्वारिंशोऽध्याय, दे10 मुबँ पञ्चचत्वारिंशोऽध्याय ॥४५॥, म1 चतुर्नवतितमोऽध्याय, ते1 त्रिचत्वारिंशोऽध्याय, उ1 पञ्चचत्वारिंशोऽध्याय ॥श्री॥, मुए चतुश्चत्वारिंशोऽध्याय मुब त्रिचत्वारिंशोऽध्याय ॥४३॥

## ४४

※ व1 O, दे3 कूर्म उ, ते1 श्रीशिव, + कूर्म, प्र2 म1 उ1 श्रीकूर्म

१ –c) व1 दे1 न1 ते1 च, दे1 8 10 मुबँ मुए मुब तत्, द1 उ1 च (→हि), दे8 प्राकृत प्रतिममासेन, प्र2 प्राकृतन समासेन, म1 प्राकृतस्य समासेन

२. –a) दे4 परार्द्धे (→परार्द्ध-) –b) दे1 8 10 न1 द1 मुबँ, मुए, मुब काले (→कालो), दे4 6 प्रकाशन (दे8 °न) –d) का1 करोत्यपेशेषं जगत, + करोति खिलं जगत, व2 द1 प्र2 उ1 करोति निखिला मतिम् दे1 8-10 मुबँ मुए मुब, करोते खिलं जगत, दे4 करोति निखिला महीम्, दे4 न1 करोति निखिलं मागम्

३ दे1 O –a) व2 दे3 6 द1 प्र2 म1 उ1 मात्मन्या-, दे1 8 9 स्वात्मना (→स्वात्मन्या), प्र2 चावेश्य (→मावेश्य) –b) व2 दृष्ट्वा (→भूत्वा), म1 सोऽपि (→देवो) –c) प्र2 दहेत शेषं ब्रह्माण्ड –d) व1 दे2 6 न1 °मानव (→°मानुष)

४ –a) व2 तमावेश्य दे4 समाविश्य, प्र2 तत्राविश्य (→तमाविश्य) –c) व3 दे10 लोके (→लोक), का1 दे2 संहार, द1 -माहार (→ संहार) –d) दे10 भूषण (→भीषण), दे3 मास्थित, न1 मास्थित ,+ मास्थित (→माश्रित)

५ –a) का1 दे4 शौरं व1 ते1 घोर (→सौरं) –b) दे10 कृत्वा तु (→कृत्वाऽसौ) –c) दे8 निर्दहेत (→निर्दहत्य), दे3 सर्वं (→लोक) –d) व3 न1 प2 म1 उ1 सप्तसप्त-, दे4 सप्तमूर्ति- (→सप्तसप्ति), दे10 -पुन (→धृक्)

६ –a) उ1 सदग्ध्वा (→स दग्ध्वा), दे1 8 10 मुबँ मुए मुब विश्व, द1 सत्त्व (→सत्त्व) –d) दे1 3 6 क्षिपत्या (→क्षिपत्य-), का1 व1 3 दे2 4 6 न1 ते1 द1 म1 उ1 दाहक, प्र2 नाशक (→ दाहक)

७ –a) दे4 6 दग्धेषु शेष-, म1 दग्धेष्वखिल- (→दग्धे- ष्वशेष), दे4 द1 प्र2 उ1 -देहेषु (→-देवेषु) –c) दे1 4 8-9 मुबँ मुए एष (→एका), प्र2 उ1 सत्याम् (→सभाग); म1 कपालमालिनी शंभोः, –d) व2 तिष्ठते (→तिष्ठते)

८ –a) का1 दे2 शिव (→शिर) –b) व3 उ1 कृत (→कृत-), द1 प्र2 °श्रवण° (→°स्रग्वर°) –c)

६.२.४६.८ आदित्यचन्द्रादिगणैः पूरयन् व्योममण्डलम् ॥८

सहस्रनयनो देवः सहस्राकृतिरीश्वरः ।
सहस्रहस्तचरणः सहस्रार्चिर्महाभुजः ॥९

दंष्ट्राकरालवदनः प्रदीप्तानललोचनः ।
त्रिशूली कृत्तिवसनो योगमैश्वरमास्थितः ॥१०

पीत्वा तत्परमानन्दं प्रभूतममृतं स्वयम् ।
करोति ताण्डवं देवोऽमलोऽस्य परमेश्वरः ॥११

पीत्वा नृत्तामृतं देवी भर्तुः परममङ्गला ।
योगमास्थाय देवस्य देहमायाति शूलिनः ॥१२

संत्यक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् ।
ज्योतिःस्वभावं भगवान् दग्ध्वा ब्रह्माण्डमण्डलम् ॥१३

संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु ।
गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥१४

स वारितत्त्वं सगुणं ग्रसते हव्यवाहनः ।
तेजस्तु गुणसंयुक्तं वायौ संयाति संक्षयम् ॥१५

आकाशे सगुणो वायुः प्रलयं याति विश्वभृत् ।
भूतादौ च तथाकाशं लीयते गुणसंयुतम् ॥१६

इन्द्रियाणि च सर्वाणि तैजसे यान्ति संक्षयम् ।
वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ॥१७

वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ।
त्रिविधोऽयमहंकारो महति प्रलयं व्रजेत् ॥१८

---

प्र₂ °गण. (→°गणैः); दे₃ आदित्यचन्द्रोडुगण-. –d) ते₁ देव (→व्योम-); दे₃ स्फुरज्ज्योतिर्मण्डले.

९. च₁. ⊙; द₁ प्र₂. cd ⊙. –b) दे₁.8-10 उ₂ मुवें. मुए. सहस्राक्ष इतीश्वरः, ते₁ सहस्रांशुरितीश्वरः. –c) दे₄ म₁ सहस्रचरणस्थानः. –d) ते₁ सहस्रार्चि., उ₁ सहस्राक्षो, (→सहस्रार्चिर्).

१०. च₁ द₁ प्र₂. ⊙; उ₁. bc ⊙ (द. स.). –a) च₃ म₁ °वक्त्र (→°वदनः). –c) दे₁.8-10 मुवें. मुए. त्रिशूल- (→त्रिशूली). –d) उ₁ ऐश्वर्यम (→ऐश्वरं); दे₃ स्थितः, दे₄ आस्थितः (→आस्थितः).

११. द₁ प्र₂. ⊙. –b) च₁ प्रभूतम (→प्रभूतम); च₁ प्र₂.₃ दे₃.₄ ते₁ स्वयं, च₁ स्वरः (→स्वयम्). –c) ते₁ [illegible] (→ताण्डवं); प्र₃ उ₁ परमेश्वर (→परमेश्वरः).

१२. च₁. ⊙. –a) च₁ प्र₂.₃ दे₄ मुवें मुए. मुब. नृत्यां° (→नृत्ता°). –b) दे₁.8-10 म₂ ते₁ मुवें. मुए. मुब. °मंगला, दे₄ °मंगलः, द₁ प्र₂ म₁ °मङ्गला (→°मंगला). –c) म₂ [illegible] देवदेवस्य, द₁ प्र₂ योगमास्थाय देवस्य, म₁ योगमास्थाय च देवस्य. –d) दे₃ देहमर्धं त्रिशूलिनः, म₂ देहमायाति शूलिनः.

१३. च₁ ⊙; दे₁.₄ [illegible]. cd [illegible] पादः [illegible]. –a) [illegible], दे₁.₃.₄.8.9 म₁ ते₁ म₃ उ₁ मुवें. मुए. मुब. स [illegible], दे₆ [illegible], दे₁₀ [illegible]. द₁ द₃ [illegible] (→संत्यक्त्वा); च₃ [illegible], ते₁ [illegible], प्र₂ [illegible] (→ताण्डवरसं). –b) दे₄ उ₁ [illegible], द₁ प्र₂ [illegible] (→पिनाकधृक्). –c) च₁ [illegible] दे₁.4.8.9.10 ते₁ द₁ प्र₂ म₁ मुब. [illegible], च₃ [illegible]

(→ज्योतिः); न₁ स्वभावं याति भगवान्, –d) दे₄ दृष्ट्वा (→दग्ध्वा); दे₃ दग्धे ब्रह्माण्डमण्डले.

१४. –a) च₂ सर्वेषु (→देवेषु); ते₁ संस्थितेष्वपि देवेषु. –d) प्र₂ °पिनाकिषु (→°पिनाकिषु); दे₁.8-10 मुवें. मुए. ब्रह्मा विष्णुः पिनाकधृक्. –c) उ₁ प्रकृतिः, + पृथिवी (→पृथिवी); दे₃ गतेषु तेषु पृथिवी.

१५. –a) च₁ प्र₂ उ₁ °सत्त्वं (→°तत्त्वं); द₁ हि गुणं, म₁ हि गुणैर् (→सगुणं); दे₃ तद्वारि सगुणं याति, दे₁ सवारितत्त्वस्य गुणं. –b) दे₃ विलयं हव्यवाहने. –c) च₁ च₂.₃ दे₁.6 तेजांसि, च₁ तेजैः स्व-, दे₁.8-10 म₂ प्र₂ मुवें. मुए. मुब. तेजः स्व-, दे₁ तेजश्च (→तेजस्तु). –d) दे₆ संपूज्य (→संयाति); दे₄ संक्षयी (→संक्षयं).

अत: परं दे₃ पुस्तके अधिकम्—

(1). • वायुश्च गुण संयुक्त आकाशे याति संक्षयम् ।

१६. दे₃. ⊙. –a) दे₂ सुगुणे (→सगुणे). –b) दे₄.10 °भूत्, द₁ प्र₂ उ₁ °भृत्, (→°भृत्). –c) दे₂ यथा-, दे₁ तदा- (→तथा-); च₁ दे₁.8.9 म₁ उ₁ मुवें. मुए. [था]काशे, दे₄ च₁ प्र₂ म₁ [था]काशं, दे₁₀ [था]काशे, म₁ (→[था]काशं). –d) च₁ च₁ दे₁.2.4.8-10 म₁ द₁ प्र₂ मुवें. मुए. मुब. °संयुतः (→°संयुतं).

१७. दे₁. ab ⊙; दे₄ द₁ द₃ म₁ च₁. cd ⊙. –b) च₁ दे₃-10 तेजसे, च₁ दे₁ तैजसि, दे₆ तेजसं, म₂ तेजसे (→तैजसे). –c) च₁ दे₃ वैकारिकाः (→वैकारिके); च₁ दे₁.8-10 म₂ मुवें. मुए. वैकारिको देवगणः (स₁ °ण:).

१८. च₁ दे₁.6.8-10 मुवें. मुए. ⊙. –b) च₁.₃ भूतादि- रचेव (→भूतादिश्चेति).

महान्तमेभिः सहितं ब्रह्माणमतितेजसम् ।
अव्यक्तं जगतो योनिः संहरेदेकमव्ययम् ॥१९

एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः ।
वियोजयति चान्योन्यं प्रधानं पुरुषं परम् ॥२०

प्रधानपुंसोरजयोरेष संहार ईरितः ।
महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ॥२१

गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते ।
प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् ॥२२

कूटस्थश्चिन्मयो ह्यात्मा केवलः पञ्चविंशकः ।
गीयते मुनिभिः साक्षी महानेकः पितामहः ॥२३

एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा ।
प्रधानाद्यं विशेषान्तं दहेद् रुद्र इति श्रुतिः ॥२४

योगिनामथ सर्वेषां ज्ञानविन्यस्तचेतसाम् ।
आत्यन्तिकं चैव लयं विदधातीह शंकरः ॥२५

इत्येष भगवान् रुद्रः संहारं कुरुते वशी ।
स्थापिका मोहनीशक्तिर्नारायण इति श्रुतिः ॥२६

हिरण्यगर्भो भगवान् जगत् सदसदात्मकम् ।
सृजेदशेषं प्रकृतेस्तन्मयः पञ्चविंशकः ॥२७

सर्वज्ञाः सर्वगाः शान्ताः स्वात्मन्येव व्यवस्थिताः ।
शक्तयो ब्रह्मविष्ण्वीशा भुक्तिमुक्तिफलप्रदाः ॥२८

सर्वेश्वराः सर्ववन्द्याः शाश्वतानन्तभोगिनः ।
एकमेवाक्षरं तत्त्वं पुंप्रधानेश्वरात्मकम् ॥२९  गै १.४६.२८

१९ –a) दे३ ४ द१ प्र२ सति (→सहित) –b) द१ प्र२ म१ ब्रह्माण्ड (→ब्रह्माण), प२ दे१ ८ १० न१ तै१ द१ प्र३ म१ मुवें मुए मुब ममितौजस (→मतितेजम) –c) श१ दे३ मव्यक्तो, श१ मव्यक्त- (→मव्यक्तं), दे१ ४ ८ ९ प्र२ च वनो (→जगतो), दे३ योनि, प२ योऽनिर् (→योनि) –d) प३ दे८ तै१ मव्यय (→मव्ययम्)

२० –a) दे७ सहृत्य (→संहृत्य), श१ ३ तै१ भूतादि (→भूतानि) –b) द१ म१ उ१ सत्त्वानि (→तत्त्वानि) –c) का१ श२ ३ दे३-८ न१ द१ प्र२ म१ नियोजयत्यथान्योन्य श१ नियोजयत्तदन्योऽन्य तै१ नियोजयत्तथान्योन्या –d) दे८ प्रधान वै परस्पर

२१ –a) दे३ ºपुरुषयोर् (→ºपुंसोर्) दे७ तै१ मजयोर् (→रजयोर्) –b) श१ ससार (→संहार), दे१ जीवित, द१ कारित, म१ ईश्वर (→ईरित) –c) दे१ महेश्वरे मा, त१ द्देश्वरेच्छा (→महेश्वरेच्छा-), प्र२ -जनिते (→जनितो) –d) दे१ नृप, द१ उ१ च य, म१ मय (→लय)

२२ दे४ ○ –a) दे७ गुणव्यक्तमाप्यन्न, तै१ गुण साम्यतयाव्यक्त –b) तै१ प्रकृति परगीयते –c) का१ श१ दे१ ८-१० तै१ म१ योनि (→योनिर्) –d) दे३ मचेतन, दे१० मिचेतन (→मचेतनम्)

२३ दे४ ○ –a) दे१ ८ १० कूटस्थ, दे२ द१ कूटस्थाम्, म१ नस्थाम, प१ कूटस्थ (→कूटस्थम्) –b) श१ दे१ ३ ९ १० म१ ग१ उ१ मुवें मुए केवल (→केवल) –c) दे१० साक्षं, उ१ सो हि (→साक्षी) –d) दे१ ८ १० मुवें मुए मुब एव (→एक)

२४ दे४ ○ –a) का१ श१ ३ दे२ तै१ मसार- (→संहार-), दे१ ८ १० मुवें मुए मुब शक्तिश्च, प्र२ -र्वरिणी (→करिणी), –b) व३ शुभा दे३ ध्रुवा (→ध्रुवा) –f) श१ ३ दे१ ८ १० न१ प्र२ उ१ मुवें मुए देहे (→दहेद्)

२५ –a) श१ योगिना (→योगिना), दे३ इह (→अथ), द१ मयोगी नाम सर्वेषां, म१ योगी मनाथस्सर्वेषां –b) दे३ ज्ञान (→ज्ञान), दे१ -तेजसा (→चतसा) –c) उ१ मात्यन्ति- कम् (→मात्यन्तिक), दे३ तु विलय दे४ द१ उ१ च प्रलय, तै१ च त्रिलय (→चैव लय)

२६ –b) का१ श१ ३ दे६ शंकर (→संहार) –c) श१ दे३ ४ न१ द१ स्थापिता दे१ ८ ९ तै१ म१ उ१ मुवें मुए मुब स्थापिका, द१ स्थापिता (→स्थापिका), का१ श२ ३ दे१ ३ ६ ८ १० तै१ द१ प्र२ म१ उ१ मुवें मुए मुब मोहिनीº (→मोहनीº), प्र२ स्थापितो मोहशक्तीना

२७ –b) श१ जगत्सर्गं, दे१० निजपद-, म१ महान् सद- (→जगत्सद) –c) का१ श१-३ दे२ ८ म१ प्रकृति (→प्रकृते) –d) दे३ चिन्मय (→तन्मय), म१ ºशक्ति (→ºविंशक)

२८ दे४ ○ –a) दे१ मुवें मुए दुर्वशा (→सर्वज्ञा), प्र२ उ१ शुद्धा (→शान्ता), तै१ सर्वेषं सर्वेष शान्तो –c) म१ ºविष्णवीशा (→ºविष्ण्वीशा)

प२ पुस्तके b, c मध्ये अधिकम्—

८८ सर्वात्मानो ब्रह्मण शान्ता स्वात्मन्येव व्यवस्थिता ।

२९ दे४ ○ –a) श१ सर्वेश्वरा (→सर्वेश्वरा) –b) श१-२ दे७ म१ तै१ उ१ शाश्वतानन्द-, म१ शाश्वतानन्द-

थे २४४.३१ अन्याश्च शक्तयो दिव्याः सन्ति तत्र सहस्रशः ।
इज्यन्ते विविधैर्यज्ञैः शक्रादित्यादयोऽमराः ॥३०
एकैकस्य सहस्राणि देहानां वै शतानि च ।
कथ्यन्ते चैव माहात्म्याच्छक्तिरेकैव निर्गुणा ॥३१
तां तां शक्तिं समाधाय स्वयं देवो महेश्वरः ।
करोति देहान् विविधान् ग्रसते चैव लीलया ॥३२
इज्यते सर्वयज्ञेषु ब्राह्मणैर्वेदवादिभिः ।
सर्वकामप्रदो रुद्र इत्येषा वैदिकी श्रुतिः ॥३३
सर्वासामेव शक्तीनां ब्रह्मविष्णुमहेश्वराः ।
प्राधान्येन स्मृताः देवाः शक्तयः परमात्मनः ॥३४

आद्यः परस्ताद् भगवान् परमात्मा सनातनः ।
गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ॥३५
एनमेके वदन्त्यग्निं नारायणमथापरे ।
इन्द्रमेके परे विश्वान् ब्रह्माणमपरे जगुः ॥३६
ब्रह्मविष्ण्वग्निवरुणाः सर्वे देवास्तथर्षयः ।
एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्तिताः ॥३७
यं यं भेदं समाश्रित्य यजन्ति परमेश्वरम् ।
तत् तद् रूपं समास्थाय प्रददाति फलं शिवः ॥३८
तस्मादेकतरं भेदं समाश्रित्यापि शाश्वतम् ।
आराधयन्महादेवं याति तत्परमं पदम् ॥३९

---

(→शाश्वतान"उ-), द१ -यौगिन (→ यौगिन) -c) श१ व२ एवमेवा-, व३ एवमेवा-, द२ ३ एवमेवा- (→एवमेवा), प२ उ१ °क्षय (→°क्षर) -d) श१ ब१ दे२ ६ यत्प्रधान दे१ गुरुप्रधान, द१ प२ म१ उ१ तत्प्रधाने- (→पुरुषाने), तै१ -स्वरात्मक (→स्वरात्मक), य२ प्रधानेश्वरस्वात्मक

३० -a) द१ प२ उ१ विश्वा (→दिव्या) -b) दे१ ८ १० मुर्वे मुए मुब तत्र सन्ति (→सन्ति तत्र) -c) ध१ युज्य ते, दे१ १० प२ उ१ मुर्वे मुए इज्येत, दे४ पूज्यन्ते (→इज्यन्ते) -d) दे१ ४ ७ ९ म१ उ१ मुर्वे मुए शक्रयादित्या°, द१ शक्रादित्या° (→शक्रादित्य°), त१ चन्द्रादित्यादयो सुरा

३१ -a) दे१ ८ १० मुर्वे मुए मुब एकैकस्या, द१ प२ म१ एकैकस्यां (→एकैकस्य) -b) दे३ देहानांविदध तानि च -c) दे३ कथ्यते चैव माहात्म्यं

३२ -a) श१ समाराध्य, व१ समाभूय, द३ ४ न१ द१ प२ समाश्रयाय (→समाधाय) व२ मुब स्वयं शक्तिं समाध्य (मुब °स्थाय)य, दे६ मुर्वे मुए तां शक्तिं स्वयमास्थाय, दे३ १० तां स्वशक्तिं समास्थाय, दे८ मायाशक्तिं समास्थाय, म१ तानां शक्तिं समास्थाय -c) द३ प२ ध१ दधान् (→देहान्), ब१ ३ दे१ ८-१० न१ त१ मुर्वे मुए मुब करोति विविधान् देहान् (ते१ °धान्) -d) दे१ ८-१० मुर्वे मुए, ग्रसते (→ग्रसते), दे४ लीयते, म१ लक्ष्यया (→लीलया)

३३ -a) दे१३ इज्यते (→इज्यते), प२ °यज्ञेषु (→°यज्ञेषु) -b) श१ °वादिषु द३० °वादिभिः म१ °वादिभिः (→°वादिभिः) -d) दे१ उ१ इत्यषा (→इत्येषा)

३४ दे६ cd ○ -b) म१ ब्रह्मविष्णुर्महेश्वरा -c) श१ म१ प्राधान्य (श१ °न), संस्मृता देव्य (प२ °व) -d) प२ उ१ परमेष्ठिन (→परमात्मन)

३५ दे४ ○ -a) प३ दे१ ८-१० न१ ते१ द१ म१ मुर्वे मुए मुब प्राद्य (→आद्य), श१ पुरस्ताद् (→परस्ताद्) -c) दे१-३ ९ मुर्वे मुए मुप °मायात्मा, दे८ ••• (→°शक्त्यात्मा).

३६ -a) श१ एवमेकं, ब२ ३ मुए एवमेके, दे१ ८ ९ एवमेवं (दे१ °व), दे४ एतस्मात्, दे० १० एवमेके, द१ उ१ एतमेव (→एनमेके), दे१ न१ वदन्त्यग्निर्, द१ म१ वदन्त्यग्ने (म१ °ग्ने) (→वदन्त्यग्नि) -c) द१ प२ उ१ इन्द्रमीनं (→इन्द्रमेके) ब१ विद्वान्, ब२ ३ विश्वा, दे१ ८-१० मुर्वे मुए मुब, प्राण, दे३ द१ प२ उ१ विष्णु म१ विश्वं (→विश्वान्) -d) श१ दे४ मुर्वे ब्राह्मण (→ब्रह्माण) य२ ब्रह्माण परम जगु

३७ -a) दे३ ब्रह्मविष्ण्वीशवरुणा, द६ ब्रह्मा विष्णुश्च वरुण -b) श१ प२ दे२ स्वपर्वत, ब१ द३ ते१ महर्षय, द१ तरगंव (→थर्षय) -c) श१ एकैकस्याथ रुद्रस्य, दे३ एकैकस्यैव रुद्रस्य -d) दे४ वेदाश्चे (→भेदास्ते)

३८ दे१ ८-१० cd ○ -a) व२ ३ दे० यं यं दृष्ट, दे२ नानाभेदं, म१ यद् यद् भेद, दे१ नानाभेदान् (→यं यं भेदं) -c) दे१ त त रूपं (→तत्तद्रूपं) -d) दे३ स ददाति (→प्रददाति).

३९ दे१ ३ ६ १० ○ -a) म१ एकतरं (→एकतरं), म१ स्थान, + भेदं (→भेदं) -b) म१ समाश्रित्यादि-, द१ प२ समाश्रित्यात्म (→समाश्रित्यापि) -c) दे४ म१ द१ प२ उ१ आराधयेत् (→आराधयन्)

किन्तु देवं महादेवं सर्वशक्तिं सनातनम् ।
आराधयेद् वै गिरिशं सगुणं वाऽथ निर्गुणम् ॥४०
मया प्रोक्तो हि भवतां योगः प्रागेव निर्गुणः ।
आरुरुक्षुस्तु सगुणं पूजयेत् परमेश्वरम् ॥४१
पिनाकिनं त्रिनयनं जटिलं कृत्तिवाससम् ।
पद्मासनस्थं रुक्माभं चिन्तयेद् वैदिकी श्रुतिः ॥४२
एष योगः समुद्दिष्टः सबीजो मुनिसत्तमाः ।
तस्मात् सर्वान् परित्यज्य देवान् ब्रह्मपुरोगमान् ।
आराधयेद् विरूपाक्षमादिमध्यान्तसंस्थितम् ॥४३
भक्तियोगसमायुक्तः स्वधर्मनिरतः शुचिः ।
तादृशं रूपमास्थाय समायात्यन्तिकं शिवम् ॥४४
एष योगः समुद्दिष्टः सबीजोऽत्यन्तभावने ।
यथाविधि प्रकुर्वाणः प्राप्नुयादैश्वरं पदम् ॥४५
अत्राप्यशक्तोऽथ हरं विष्णुं ब्रह्माणमर्चयेत् ।
अथ चेदसमर्थः स्यात् तत्रापि मुनिपुंगवाः ।
ततो वाय्वग्निशक्रादीन् पूजयेद् भक्तिसंयुतः ॥४६
ये चान्ये भावने शुद्धे प्रागुक्ते भवतामिह ।
अथापि कथितो योगो निर्बीजश्च सबीजकः ॥४७
ज्ञानं तदुक्तं निर्बीजं पूर्वं हि भवतां मया ।
विष्णुं रुद्रं विरिञ्चिं च सबीजं भावयेद् बुधः ।
अथवाग्न्यादिकान् देवांस्तत्परः संयतेन्द्रियः ॥४८
पूजयेत् पुरुषं विष्णुं चतुर्मूर्त्तिधरं हरिम् ।
अनादिनिधनं देवं वासुदेवं सनातनम् ॥४९ बं.२.४६,४६

---

४०. दे$_1$ 8-10 ⊙, दे$_3$ ab ⊙. –c) दे$_3$ महादेव, दे$_4$ हरि देव दे$_1$ वै गौरीश, द$_1$ वै सहयं, म$_1$ वाथ श्वदि, उ$_1$ पर देव, मुवँ मुए [ह]ह गिरिश (→वै गिरिश) –d) ते$_1$ चापि (→वाथ)

४१. दे$_1$ 8-10 ⊙ –ab) ते$_1$ मया प्रोक्तो हि भगवान् योगी योगे च निर्गुण –d) द$_1$ प्र$_2$ उ$_1$ पूजयेत्परम शिव

४२ –b) व$_1$ कीर्ति (→कृत्ति-). –c) ते$_1$ महासनस्थ (→पद्मासनस्थ), दे$_4$ रुक्मरुग्म (→रुक्माभ), दे$_1$ 8-10 मुवँ मुए मुब रुक्माभ वा सहस्रार्कित्

४३ –b) प्र$_2$ सजीवो (→सबीजो), दे$_1$ 3 4 8-10 द$_1$ प्र$_2$ म$_1$ उ$_1$ मुवँ मुए मुब °पुंगवा (→°सत्तमा) –d) म$_1$ शक्र° (→ब्रह्म°) –f) का$_1$ व$_1$ दे$_2$ 6 न$_1$ ते$_1$ आदित्यान्तर- (→आदिमध्यान्त), द$_1$ प्र$_2$ म$_1$ उ$_1$ वर्जित (→संस्थित).

४४ मुवँ cd ⊙ –a) दे$_1$ 8 10 °समायुक्त (→°समायुक्त) –b) दे$_1$,8-10 मुए स्वकर्म (→स्वधर्म-) –c) प्र$_2$ तादृक्ष (→तादृश) –d) दे$_4$ समासाद्या- (→समायात्य), का$_1$ व$_1$ 3 दे$_6$ मुब शिव, व$_2$ हरे, न$_1$ शुभ (→शिव), दे$_1$ 8-10 मुब भालायात्यन्तिक शिव, प्र$_2$ समासाद्य हर शिव

४५ मुब ab ⊙ –a) ते$_1$ वीज (→योग), द$_10$ एष योग सबीजोऽत्य –b) व$_1$ भारत, दे$_1$ 4 मुब भावन, दे$_3$ °सावक, दे$_8$ 9 °भावना, ते$_1$ भावने (→°भावने); का$_1$ सबीजोत्पत्तिभावने, दे$_10$ तत्रादेव यथाविधि, द$_1$ प्र$_2$ म$_1$ उ$_1$ स बीजो हेव भावने, –c) द$_1$ प्र$_2$ विधि (→°विधि); दे$_10$ प्रकुर्वाण प्राप्नुयादेव –d) दे$_3$ प्राप्नुयादस्य पद, दे$_10$ ऐश्वरं परम पदम्

४६ व$_1$-3 दे$_1$ 3 4 6 8 10 न$_1$ ते$_1$ द$_1$ प्र$_2$ म$_1$ उ$_1$ मुवँ मुए मुब पुस्तकेषु अय श्लोक ४३ श्लोकस्य b, c मध्ये प्राप्त . –a) दे$_3$ द$_1$ प्र$_2$ उ$_1$ मथा- (→अत्रा-), दे$_3$ -प्यशक्तश्च (→ प्यशक्तोऽथ) –b) दे$_1$ 4 8-10 मुवँ मुए मुब विश्वं (→विष्णु) –c) व$_2$ 3 अथ चेन्न, दे$_1$ 8-9 अथवेद-(→अथ चेद-). –d) दे$_3$ यत्रापि (→तत्रापि), द$_1$ प्र$_2$ म$_1$ उ$_1$ द्विज° (→मुनि°) –f) दे$_3$ ततो वाय्वादिकान् देवान्

४७ –a) व$_1$ दे$_1$ 3 8-10 न$_1$ मुवँ मुए द्वे (→ये), व$_1$ ये चान्ये तारये शुद्धे, दे$_3$ द्वे रूपे तस्य सशुद्धे, दे$_4$ द्वे यस्य भावने शुद्धे –c) का$_1$ व$_1$ 3 दे$_3$ 4 6 न$_1$ ते$_1$ म$_1$ मुब अथापि, व$_2$ यस्यापि, द$_1$ प्र$_2$ नाद्यापि, उ$_1$ तथापि (→अथापि), म$_1$ योगिर (→योगो) –d) दे$_3$ तु (→च), दे$_4$ निर्बीज स च बीजक, म$_1$ योगिवीजकश्च बीजक

४८ –b) द$_1$ दे$_4$ भवता (→भवतां) –c) का$_1$ दे$_10$ उ$_1$ विरञ्चि वा (दे$_10$ च) व$_1$ विरञ्च च, व$_2$ 3 दे$_8$ विरिञ्चि वा, दे$_9$ विरन च, दे$_4$ ते$_1$ द$_1$ प्र$_2$ म$_1$ विरिञ्च वा (→विरञ्चि च) –d) व$_1$ ते$_1$ सबीजे, द$_1$ प्र$_2$ सबीजो (→सबीज), दे$_1$ 8-10 सबीजे (दे$_10$ °जो) भावयेद् बुध, न$_1$ सबीजे भावने बुध –e) देवान् (→देवान्), दे$_1$ 3 8-10 न$_1$ द$_1$ प्र$_2$ उ$_1$ मुवँ मुए मुब. अथ वाय्वादिकान् देवान् –f) प्र$_2$ तत्पर (→तत्पर), दे$_8$ संजिते- न्द्रिय, ते$_1$ पूजयेत्तत (→संयतेन्द्रिय), दे$_1$ 8-10 न$_1$ मुवँ मुए मुब तत्परो नियतासंयत, दे$_3$ तत्रैव संयतेन्द्रिय

४९ –b) दे$_1$ 4 8-10 द$_1$ उ$_1$ मुवँ. हर (→हरि). –d) प्र$_1$ जनार्दनं (→सनातन).

खं.२.४६.५०

नारायणं जगद्योनिमाकाशं परमं पदम् ।
तल्लिङ्गधारी नियतं तद्भक्तस्तदपाश्रयः ।
एष एव विधिर्ब्राह्मे भावने चान्तिके मतः ॥५०
इत्येतत् कथितं ज्ञानं भावनासंश्रयं परम् ।
इन्द्रद्युम्नाय मुनये कथितं यन्मया पुरा ॥५१
अव्यक्तात्मकमेवेदं चेतनाचेतनं जगत् ।
तदीश्वरः परं ब्रह्म तस्माद् ब्रह्ममयं जगत् ॥५२

सूत उवाच ॥※

एतावदुक्त्वा भगवान् विरराम जनार्दनः ।
तुष्टुवुर्मुनयो विष्णुं शक्रेण सह माधवम् ॥५३

मुनय ऊचुः ॥※

नमस्ते कूर्मरूपाय विष्णवे परमात्मने ।
नारायणाय विश्वाय वासुदेवाय ते नमः ॥५४
नमो नमस्ते कृष्णाय गोविन्दाय नमो नमः ।
माधवाय नमस्तुभ्यं नमो यज्ञेश्वराय च ॥५५
सहस्रशिरसे तुभ्यं सहस्राक्षाय ते नमः ।
नमः सहस्रहस्ताय सहस्रचरणाय च ॥५६
ॐ नमो ज्ञानरूपाय परमात्मस्वरूपिणे ।
आनन्दाय नमस्तुभ्यं मायातीताय ते नमः ॥५७
नमो गूढशरीराय निर्गुणाय नमोऽस्तु ते ।
पुरुषाय पुराणाय सत्तामात्रस्वरूपिणे ॥५८
नमः सांख्याय योगाय केवलाय नमोऽस्तु ते ।
धर्मज्ञानाधिगम्याय निष्कलाय नमो नमः ॥५९
नमोऽस्तु व्योमतत्त्वाय महायोगेश्वराय च ।

---

५० –c) का1 दे2 °मानी, दे6 °मालो (→°धारी), व2 दे3 वे1 द1 प्र2 म1 उ1 नियमस् (→नियत) –d) का1 मद्भक्त दे1 8 10 न1 मुबें मुए मुब यद् युक्त (दे1 °क्त) (→तद्भक्तस्), दे1 3 4 8 10 ते1 मुबें मुए मुब तदुपाश्रय, द1 प्र2 म1 उ1 तत्परायण (→तदपाश्रय) –e) व1 द1 प्र2 ब्रह्मो, दे3 4 6 उ1 ब्रह्म, दे8 10 ब्राह्म-, ते1 ब्रह्मा, म1 बाह्यो (→ब्राह्मे), दे1 मुबें मुए एष एव विधिर्बसिब –f) दे1 मुबें मुए मुब भान्तिमे, वे3 भावि मे, दे4 ते1 भान्तिको, दे8-10 चान्तमे, न1 शान्ति मे (→चान्तिके), व1 प्र2 म1 उ1 भावने चेवि मे मति (ग1 °त)

५१. –b) दे4 भगवान् (→भावना), न1 -सश्रय मत, म1 -सश्रय पर (→-संश्रयं परम्), ते1 भावमात्माश्रयं परं

५२ –a) का1 ग्रव्यक्तमेवमेवेद, दे4 मव्यक्ताव्यक्त मेवेद, ते1 प्रव्यक्तकारणं सर्वं, द1 मव्यक्त व्यक्तरूपमेव –b) न1 चेतना चेतनात्मक –c) का1 व2 दे1 8-10 न1 प्र2 मुबें मुए तदीश्वर (→तदीश्वर) –d) वे4 ब्रह्मसम (→ब्रह्ममय)

अत पर व2 पुस्तके यथिकम्—इति कूर्मपुराणे

※ दे8 सून उ, न1 वे1 प्र2 सूत, व1 श्री सूत

५३. –a) दे3 एतदुक्त्वा स भगवान्, द1 म1 उ1 इत्येवमुक्त्वा भगवान् –c) उ1 नित्य (→विष्णु) –d) का1 उ1 मुबें मुए शुक्रेण (→शक्रेण)

※ का1 O, व1-3 दे2 6 मुब ऋषय ऊचु ; न1 ते1 ऋषय, प्र2 म1 उ1 मुनय.

५४ –a) न1 धर्म° (→कूर्म°)

५५ ते1 ab O. –a) उ1 रुद्राय (→कृष्णाय) –b) व2 दे4 द1 प्र2 म1 नमोऽस्तु ते, वे1 8-10 मुए मुब, च ते नम (→नमो नम) –c) दे1 8 10 मुबें मुए मुब च ते नित्य, दे3 4 8 द1 प्र2 म1 उ1 नमो नित्य (→नमस्तुभ्य)

५६ दे4 O –a) म1 नित्य (→तुभ्य) –c) वे2 6 न1 ते1 °पादाय, म1 °देहाय (→°हस्ताय), का1 नम शतहस्तपादाय –d) वे1 द1 म1 ते (→च)

५७ दे4 O –a) दे1 नमो ज्ञानविरूपाय, दे10 नमो ज्ञानाय रूपाय –b) दे3 न1 ते1 द1 प्र2 म1 उ1 परमार्थस्वरूपिणे, दे1 8-10 मुबें मुए मुब विष्णवे परमात्मने –d) वे3 वै (→ते)

५८ दे4 O, दे1 द1 प्र2 उ1 cd O, दे6 c O –a) व2 मुब म1 °स्वरूपाय (→°शरीराय) –b) उ1 नमो नम (→नमोऽस्तु ते)

५९ दे4 O, दे3 द1 प्र2 उ1 ab O –a) दे1 सख्याय (→सांख्याय), ग1 महते (→योगाय) –b) व3 कैवल्याय (→केवलाय) –c) व1 दे1 8 10 न1 म1 °ज्ञानाभि°, दे3 ते1 °ज्ञानादि° (→°ज्ञानाधि°), द1 उ1 धर्मज्ञानाधि(द1 °भि)गम्याय –d) दे1 8 10 मुबें मुए नमोऽस्तु ते (→नमो नम).

६० व2 3 पुस्तकयो ६०,६१ सख्याकौ श्लोकौ ५६ श्लोकानन्तरमागतौ, दे4 6 O. –a) व2 3 नमस्ते (→नमोऽस्तु), दे1 8 10 मुबें मुए मुब योग° (→व्योम°) –b) दे3 उ1

504 तत्पुत्रादि स्थिता शय्या दिव्यायाध्यात्मवेदिने ।
दद्याद् द्वादशमे दिवसे मृत स्वर्गमवाप्नुयात् ॥
वह्नीभिर्दक्षिणाभिश्च तोषयेद् द्विजवल्लभम् ॥
—(pp 752 753)

अन्तर्गलतया यत्र संचारो गोशतस्य च ।
508 रात्रौ यावान् प्रदेश स्यात् सवत्साना नृपोत्तम ॥
स तु द्वादशमानेन गोचर्मेति प्रकीर्तित ।
त देश विप्रवर्याय अर्चिताय कुटुम्बिने ॥
यागासक्ताय यो दद्यात् स वै नारायण स्मृत ।
512 पुनर्भुवमुपागम्य मण्डलाधिपतिर्भवेत् ॥
—( p 754 )

षट्पदा द्विमुखीं धेनु सोपस्करसदक्षिणाम् ।
सूयमाना जनो धृत्वा याति मृत्युवश क्षणात् ॥
नरकानुभव कृत्वा नारीजन्म समश्नुते ।
516 केचिद् सत्कारमिच्छन्ति उभयतोमुखीग्रहे ॥
स्त्रीत्वाच्च दोषबाहुल्यात् प्रायश्चित्तविधानत ।
लक्षत्रयेण गायत्र्या शुद्धिमाप्नोति दैहिकीम् ॥
यागादिभ्रशने तात प्रायश्चित्तमिद चरेत् ।
520 प्रायश्चित्तेन पूतात्मा प्रधान सपरित्यजेत् ॥
अनेन विधिना शुद्धिर्न तीर्थैर्न जलादिभि ।
—(p 759)

द्विजो य श्रुतिसम्पन्न प्रतिग्रहपरायण ।
उत्क्रान्तिकाले तन्नाम्नीं धेनु धत्ते स दोषभाक् ॥
524 नरकाननुभूयाशु दरिद्री भुवि जायते ।
अन्नवस्त्रपरिक्षीण सदारो बहुलप्रज ॥
किं करोमि क्व गच्छामि किं वा शरणमाश्रये ।
इति वदत स नित्यमेतद् दारिद्र्यलक्षणम् ॥
528 दारिद्र्य मरणात् कष्ट दरिद्रो न हि पूज्यते ।
वृथा जन्म दरिद्रस्य दरिद्रस्य गुणो वृथा ॥
तत्रापि बाल्दारिद्र्य क्षणमात्र न शक्यते ।
—(p 760)
यमलोके महाघोरे सरिद्वारुरूपिणी ।

532 षष्टियोजनविस्तीर्णा शतयोजनमायता ॥
सा नदी पापिनो दृष्ट्वा ज्वलतीव सदा रुषा ।
दृष्ट्वा पुण्यतमाश्चैव शान्तिमाप्नोति तत्क्षणात् ॥
पापिन पापकर्माणि पुण्यवान् पुण्यमाचरन् ।
536 पापी नरकमाप्नोति पुण्यवान् पुण्यलोकवान् ॥
पुण्य सुखार्थी कुर्वीत दु खार्थी पापमाचरेत् ।
—(p 761)

दुष्टनक्षत्रजातस्य शान्तिकर्मणि यो द्विज ।
आचार्यत्व यदा कुर्यात् गौर्वापि प्रतिगृह्यते ॥
540 तस्यैव नरके वास कालसूत्रे महत्तरे ।
तदन्ते सुखमासाद्य पापफलमवाप्नुयात् ॥
तद्दोषपरिहारार्थं प्रायश्चित्त चरेत्तदा ।
प्रायश्चित्तेन पूतात्मा शुद्धिमाप्नोति पार्थिव ॥
544 स्वाध्यायदिवसे राजन्नुपविश्य सुखाश्रमे ।
तथा पारायणं प्रोक्त दशरात्रमतन्द्रित ॥
तत परमुपोष्यैव पञ्चगव्येन शुद्ध्यति ।
—(pp 769-770)
अद्भुतेष्वेषु दृष्टेषु तच्छान्तिषु द्विजोत्तम ।
518 आचार्यत्व यदा कुर्यात् तदा पाप समश्नुते ॥
स्वल्पद्रव्ये प्रधानस्य प्रतिमास परिग्रहे ।
यथोक्तप्रतिमादाने दोषाधिक्य भवेत्तदा ॥
व्याघ्रो भवति देहान्ते सर्वप्राणिविहिंसक ।
552 अतस्तद् दोषशान्त्यर्थं प्रायश्चित्त समाचरेत् ॥
यथोक्तप्रतिमादाने सार्धं दक्षिणया तथा ।
चान्द्रायणद्वय कुर्यात् तदभावे प्रतिग्रहे ॥
अतो न्यून न सर्वत्र विप्रश्चान्द्रायण चरेत् ।
—(p 774)

556 दुष्टग्रहादिपीडाया जन्मनक्षत्रसंगमे ।
जन्मभे च कुजो यस्य शनिर्वा पाप एव वा ॥
तदा तस्य महद् दु ख भवेदेतस्य संग्रहे ।
तदा राजा प्रकुर्वीत कनकाज्यनिरीक्षणम् ॥
560 ब्राह्मणाय सुशान्ताय दरिद्राय कुटुम्बिने ।

बहुदक्षिणया दत्त्वा तस्माद् दोषात् प्रमुच्यते ॥
—(p 779)

प्रायश्चित्ताङ्गिनी धेनु सा प्राच्यागमुदीरिता ।
सर्वदा न प्रतिग्राह्या द्विजैर्धर्मपरायणै ॥
—(P 780)

564 गृह्यमाणा न गृह्णीयाद् द्विज पापभयादिह ।
गृह्णीयाद् यदि लोभात्मा यमलोक समश्नुते ॥
स्थित्वा तत्र चिर कालमनुभूय महद्भयम् ।
पुनर्भुवमुपागम्य गोराङ्गलो भवेदिह ॥
—(p 783)

568 यस्य राज्ञ प्रभोर्वापि जन्मर्क्षे नागगेऽपि वा ।
कालचक्ररथाद् राजन् सर्वभद्रावसान्त ॥
पचग्रहा प्रपेलन्ते जन्मराशावथाष्टमे ।
चतुर्थे द्वादशे वाऽपि सघाते ससुदायके ॥

572 धनहानिर्यशोहानिर्गृहक्षेत्रापहारणम् ।
देहपीडा भवेत्तस्य मासेऽर्धमासतोऽपि वा ॥
तस्मात्तेषा प्रकर्तव्य शान्तिकर्म सुखाप्तये ।
तत्राचार्यो भवेद्यस्तु विद्वानपि विमृदृशी ॥

576 होमे जपे च पूजाया उपचारो भवेदिह ।
मन्त्रमुच्चार्य मनसा स्वाहान्ते जुहुयाद्धवि ।
अङ्गुष्ठानामिकाभ्या च समिन्मध्य प्रगृह्य च ॥
मन्त्रान्ते जुहुयाद्वह्नौ समिद्धोमो विधीयते ।

580 अंगुल्यग्र गृहीत्वा तु मुष्टिमिश्र तिलैर्युताम् ॥
समिध जुहुयाद् वह्नौ मनसा मन्त्रमुच्चरन् ।
स्वाहान्ते देवतोद्देशं कुर्याद्धोमफलाप्तये ॥
मार्जने मोक्षन होमो दानमुत्तानपाणिना ।

584 अर्चने देवपूजासु मोक्षण चार्प्यमेव च ॥
उत्तानपाणिना कार्यं नाधोरूपेण कारयेत् ।
पष्टिवीजैर्धान्यहोमैराज्येन चतुरङ्गुलम् ॥
ऋचाहुतिं स्रुवे पूर्णे वह्नौ हुत्वा प्रदेशिक ।

588 अङ्गुल्यग्रेण यज्जप्त यज्जप्त मेरुलङ्घने ।
द्विधा चित्तेन यज्जप्त तत्सर्वं निष्फल भवेत् ॥
—(pp 786 787)

पत्नीपाप पतिर्भुङ्क्ते शिष्यपाप गुरुस्तथा ।
राजा राष्ट्रकृत पाप राजपाप पुरोहित ॥

592 आचार्यऋत्विजा पाप ब्राह्मणोऽभिसभवम् ।
आचार्यपापबाहुल्यादज्ञनाथेनुसमहे ॥
पापबाहुल्यमस्त्येव आचार्यस्य न सशय ।
यद्याचार्यो भवेदस्मिन् प्रायश्चित्त चरेद् गुरु ॥
—(p 787)

596 राशिचक्र द्विजो धृत्वा पूजित वस्त्रभूषणै ।
विना निमित्तैर्भुवि पाप मनसि धारयन् ॥
तत्सिद्धातिमहत्वात् तु नरक कालचोदित ।
अनुभूय महद्दु स चक्रवाको भवेद् भुवि ॥
—(p 788)

600 सामान्य यत्र यत्प्रोक्त प्रायश्चित्त द्विजोत्तमे ।
तदेव पूर्वजाना स्यात् प्रायश्चित्त विशोधनम् ॥
तद्वैगुण्य बाहुजानामूरुजाना त्रिधा स्मृतम् ।
चातुर्गुण्य पादजाना सङ्कराणा तु पचधा ॥

604 चतुर्दशविधाना तु समहे पतितोभवेत् ।
—(p 791)

सोमविक्रयिणश्चैव धर्मविक्रयिणस्तथा ।
स्मृतिविक्रयिणश्चैव पुन सस्कारउच्यते ॥
—(p 792)

बन्धुभि सह संगम्य पीत्वा सोमं महाक्रतो ।

608 स्वमन्त्रोच्चारण कृत्वा त्रिवारं शुद्धिमाप्नुयात् ॥
—(p 794)

देवलकश्च गणको ग्राम्यो दु शीलवान् जन ।
शूद्रापति कर्महीन लोको कुत्सितवृत्तिमान् ॥
महापातकिन सर्वो क्षयरोगी भगन्दरी ।

612 दुश्चर्मा शूद्रसेवी च भिषक् शूद्रान्नभक्षक ।
वृथातुल्यादिसग्राही मर्यादाघातकस्तथा ॥
ग्रामदाही ग्रामणीश्च तथा दु संगवान् जन ।
—(p 797)

अनर्हाणामध्वरेषु ये ब्रह्मकाज्जिवादय ।

616 तेषा पापविशुद्ध्यर्थं षडब्द कृच्छ्रमीरितम् ॥

केशाना वपनं कृत्वा पुनः संस्कारमाचरेत् ।
पञ्चगव्यं पिबेत् पश्चात् शुद्धो भवति नाऽन्यथा ॥
—(p 799)

अज्ञात्वा सुवर्णं यत्र शूद्रादन्येभ्य आदरात् ।
620 सुवर्णमात्रं गृह्णीयात् प्राजापत्यं समाचरेत् ॥
तदर्धार्धं पुनः कृत्वा दिनमात्रमुपोषणम् ।
कृत्वा शुद्धिमवाप्नोति शुद्धिर्नाऽन्यत्र दृश्यते ॥
—(p 802)

न पिता न गुरुर्भ्राता पितृव्यश्च पितामहः ।
624 न दद्याद्देवीं गायत्रीं पुनः संस्कारकर्मणि ॥
मोहाद् दत्त्वा तु गायत्रीं षडब्दं कृच्छ्रमाचरेत् ।
तेभ्यो गृह्णन् द्विजो यस्तु सुवर्णं पादमेव वा ॥
स प्रतिग्रहशुद्ध्यर्थं प्राजापत्यं समाचरेत् ।
628 यदा प्रतिग्रहस्तेषु तुलादिषु महत्स्वपि ॥
दानेषु पुत्रवात्सल्यं सन्त्यजेद् बुद्धिमान् पिता ।
नित्यनैमित्तिकानीह कर्माणि विफलान्यथ ॥
कर्मभ्रंशात् पिता तस्य न जपेद् वेदमातरम् ।
632 कृते प्रतिग्रहे मूल्यैरन्यगोत्रं द्विजोत्तमम् ॥
अभ्यर्च्य गन्धवस्त्राद्यैस्तस्माद् देवीं समभ्यसेत् ।
ब्रह्मोपदेशं होमेन सर्वं तेन समभ्यसेत् ॥
—(p 804)

वेदमाता च गायत्री जपता पापनाशनी ।
636. परार्थं तां जपेद्यस्तु स नरो मातृघातकः ॥
—(p 806)

अकृत्वा निष्कृतिं याग वृत्तिदानं द्विजन्मनाम् ।
जनपदं योऽनुगृह्णीयात् ताम्रचूडो भवेद् भुवि ॥
अनाग्न्यप्रतिग्रहे चण्डालादिनिरूपिते ।
640 प्रतिग्राही द्विजो यस्तु स भवेद् वायसो भुवि ॥
पल्लीप्रतिग्रहे राजन् नानावर्णसमाकुले ।
नरकं त्वनुभूयाऽथ खरजन्म भवेद् भुवि ॥
अब्दं षडब्दं चान्द्रं च तप्तकृच्छ्रशतत्रयम् ।
644 प्रायश्चित्तमिदं राजन् यथाक्रममुदीरितम् ॥
वृत्तिदानकृताभावे प्रायश्चित्तं विशोधनम् ।
—(p 808)

प्रायश्चित्ते कृते शान्तौ प्रतिष्ठासु मुनीश्वराः ।
तडागारामग्रामाणां तत्तत्पुण्यप्रवृत्तये ॥
648 दशदानानि विप्रेभ्यो देयानि फलसंस्थया ।
—(p 810)

चतुष्पलप्रमाणेन मूर्तिं केशवरूपिणीम् ।
सुवर्णेनैव यो राजा निर्मितां लक्षणान्विताम् ।
विप्राय वेदविदुषे दरिद्राय कुटुम्बिने ।
652 अर्चितां गन्धवस्त्राद्यैः पूजितां सामभिः पृथक् ॥
दद्यात् पुण्यदिने प्राप्ते स याति परमां गतिम् ।
केशवं पलमानेन सुवर्णेन विचक्षण ॥
पूजयित्वा विधानेन दद्याद् विप्राय धीमते ।
656 स्वर्णं विमानमारुह्य अप्सरोगणसेवितः ॥
प्राप्नोति वैष्णवस्थानं पुनरावृत्तिदुर्लभम् ।
केशवं प्रतिगृह्णीयात् सौम्य विप्रो धनातुरः ॥
दत्तं नृभिर्विधानेन निष्कारणतया नृप ।
660 अकृत्वाऽऽधानमपि वा कुर्यात् स्वोदरपोषणम् ॥
तस्यैव निष्कृतिर्दृष्टा स्नात्वा नित्यं समाप्य च ।
रहः स्थानमुपाविश्य नामत्रयजपं चरेत् ॥
मासं दीक्षामुपाश्रित्य भुञ्जन् यावकमुत्तमम् ।
664 प्रत्यहं स्थण्डिले सुप्तो मासमात्रेण शुद्ध्यति ॥
जपेल्लक्षं ततः पूतः शुद्धो भवति सर्वदा ।
—(pp 812-813)

प्रतिगृह्य द्विजः शंखं देवपूजार्थमादरात् ।
सलक्षणं च शुद्धं च पुण्यकालेषु पर्वसु ॥
668 विक्रयेद्यदि मोहात्मा यमलोकं समश्नुते ।
शङ्खदर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥
तं विक्रयित्वा मोहेन स पापी न भवेत् किमु ।
तस्यैव निष्कृतिरियं कथिता मुनिवल्लभे ॥
स्नात्वा हरिदिने शुद्धे कृतं पापमनुस्मरन् ।
672 उपविश्य शुचौ देशे विष्णोर्नाम्ना सहस्रकम् ॥

प्रातरारभ्य नियतो यावत् सूर्योदयो भवेत् ।
तावज्जपित्वा नामानि परेद्युरुदये त्यजेत् ॥
676 स्नात्वा पुनस्तु द्वादश्यां पञ्चगव्यं पिबेन्मुदा ।
पारणं च ततः कुर्यात् शुद्धिमाप्नोति पौर्विकीम् ॥
—(pp 821-22)

ग्रामं यदि द्विजो लोभात् निगृह्यात् कारणं विना ।
पुण्यकालेषु पुण्यर्क्षे व्यतीपाते च वैधृतौ ॥
680 मृत्वा नरकमाप्नोति वृद्धदण्डः स जायते ।
—(p 824)

योगे हरिहरे विप्र प्रतिगृह्य धनातुर ।
स तु पापं महद् घोरं अनुभूय तदा तदा ॥
स्थावरत्वं व्रजेल्लोके यावदाभूतसम्प्लवम् ।
684 प्रायश्चित्तमिदं राजन् मुनिभिः परिकीर्तितम् ॥
अन्यं धर्मं परित्यज्य वेदास्थानमुपागमत् ।
तैरनुज्ञामवाप्याथ कुर्याच्चान्द्रायणद्वयम् ॥
उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति ।
688 तेन शुद्धिमवाप्नोति न दानैर्ब्राह्मणार्चनैः ॥
—(p 830)

भर्तारं हन्ति या नारी गृहदाहादिभिर्वधैः ।
परप्रेरणया वाऽपि सा नारी भर्तृघातिनी ॥
—(p 840)

क्षीणामहरहः पापं स्मरणाद् दृष्टिनस्तथा ।
692 नष्टत्वं याति राजेन्द्र मासि मासि रवः सदा ॥
परसंसर्गजो दोषो न क्षीणत्वमवाप्नुयात् ।
तदपि क्षीणतां याति गर्भे त्यागो विधीयते ॥
—(p 842)

ज्येष्ठो यद्यङ्गहीनः स्यान्मूकोऽपस्मारवान् यदि ।
696 तदनुज्ञामवाप्याऽथ तरुणं परिकल्प्य च ॥
स्नातकादि व्रतं कृत्वा कदल्याथ विवाह्य च ।
द्वितीयं परिणयेच्चैव अन्यथा पतितो भवेत् ॥
एवं न शास्त्रदोषः स्यात् अहो भवति लौकिकः ।
700 तौ तत्पुत्रौ तयोर्दाराः पतिताः स्युर्न संशयः ॥

दाने नियन्ते कार्ये न कर्मार्हा भवन्ति ते ।
तस्मादेतत् परित्याज्यं दर्शनं भाषणं तथा ॥
परिग्रहं परित्याज्य विप्रैर्धर्मपरायणैः ।
704 तथापि लोभवान् विप्रः कुर्याच्चेत् तत्परिग्रहम् ॥
न तेन शुद्धिमाप्नोति सुराभाण्डोदकं यथा ।
यागार्थं भरणार्थं वा कुरुते यः परिग्रहम् ॥
पराकत्रयमात्रेण स शुद्ध्येत तदर्पणः ।
708 यागार्थं धनबाहुल्ये तत्कृच्छ्रशतं चरेत् ॥
पराकस्त्वल्पमात्रेण अल्पत्वे तदर्पतः ॥
—(p 845)

पुराणं धर्मशास्त्रं च स्मृतिं काव्यं सनाटकम् ।
पुण्यकालेषु सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः ॥
712 यो दद्याद् विप्रवर्याय स भवेत् सर्वशास्त्रवित् ।
द्विजो यः प्रतिगृह्णाति द्रव्यलोभात् सरस्वतीम् ॥
सोऽपि जन्मान्तरे राजन् विद्यावान् सम्प्रजायते ।
प्रतिग्रहधनार्द्धं तु विक्रयित्वाऽऽत्मजीवनम् ॥
716 कुर्याद्यदि स पापात्मा प्राजापत्यत्रयं चरेत् ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेच्छुचिः ॥
अन्यथा दोषमाप्नोति व्रात्यो भवति भूतले ॥
—(p 846)

यस्त्यजेत् तुलसीं साध्वीं लोकवार्तापरायणः ।
720 तस्य वै निष्कृतिर्नास्ति नपुंसकत्वमश्नुते ॥
—(p 863)

मेरुमन्दरपापानि सुमहान्ति महान्ति च ।
रुद्रजापी हरेच्चापि न कन्याहयविक्रयी ॥
पृथ्व्याऽथ विक्रयेयस्तु पृथाभोगेप्सया नृप ।
724 उभयोः संभवे तात षडब्दं कृच्छ्रमाचरेत् ॥
प्रतिग्रहे तदर्धं स्यात् विक्रये पूर्णमाचरेत् ।
—(p 866)

धेनुं यः प्रतिगृह्णाति निमित्तैर्बहुभिर्विना ।
पुण्यकाले पुण्यतीर्थे वस्त्रादिभिरलङ्कृताम् ॥
728 सवत्सां दोहसंयुक्तां मुक्ताहारोपशोभिताम् ।

ताम्रपृष्ठीं स्वर्णशृंगीं स्वर्णघण्टोपशोभिताम् ॥
सुभूषां साधुवृत्तां च धेनुं राज्ञः सुखालये ।
महापापफलं भुक्त्वा नरकायोपपद्यते ॥
732 तस्माद्धेनुस्तु न ग्राह्या द्विजैरध्यात्मवेदिभिः ।
—(p 869)

## 6 पराशरमाधव

( आचारकाण्ड )

तद्वारि तस्य सगुणं ग्रसते हव्यवाहनः ।
इन्द्रियाणि तु सर्वाणि तैजसे यान्ति संक्षयम् ॥
—(p 87) [cf KP 2 44 15ab, 17ab]

अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
4 एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥
—(p 118)

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥
—(p 345) [cf Manu Smr 3,82]

अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ।
0 योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ॥
—(p 538) [= KP 2 28 2]

प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः ।
अन्तःपक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत् ॥
—(p 539) [cf, KP 2 28 4]

ग्रामान्ते पररात्रे च मध्यरात्रे तथैव च ।
12 सन्ध्यास्वह्नि विशेषेण चिन्तयेन्नित्यमीश्वरम् ॥
—(p 568) [= KP, 2 29 10]

## 7 कालमाधव

प्रदोषव्यापिनी यत्र त्रिमुहूर्ता यदा दिवा ।
तदा नक्तमसौ कुर्यात् स्वाध्यायस्य निषेधवत् ॥
—(p 108)

तिथौ भगाद्यपायाश्च समुपोष्य यथाविधि ।
4. शासपालादिनागानां दोषस्य च महात्मनः ॥

पूजा कार्या पुष्पगन्धक्षीराप्यायनपूर्वकम् ।
विषाणि तस्य नश्यन्ति न च तान् घ्नन्ति पन्नगाः ॥
—(p 149)

नन्दा विद्धा तु या पूर्णा द्वादशी मकरे सिता ।
8 भृगुणा नष्टचन्द्रा च एता वै निष्फलाः स्मृताः ॥
—(p 189)

वदन्तीह पुराणानि भूयो भूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥
—(p 191)

यदीच्छेद् विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ।
12 एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥
—(p 192)

द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
तामेवोपवसेत् कामः अकामो विष्णुतत्परः ॥
—(p 207)

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
16 उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः ॥
—(p 208)

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृही ॥
—(p 209)

संक्रान्त्यां कृष्णपक्षे च रविशुक्रदिने तथा ।
20 एकादश्यां न कुर्वीत उपवासं च पारणम् ॥
—(p 210)

एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् ।
नातिक्रमेद् द्वादशीन्तु उपवासव्रतेन च ॥
—(p 212)

कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान् ।
24 शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥
—(p 215)

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्यात् दानार्चनविवर्जितम् ॥
—(p 219)

## 8. स्मृतिरत्नाकर

पनर्वसुबुधोपेता चैत्रमासे सिताष्टमी ।
तस्या नदीषु स्नातस्तु वाजपेयफल लभेत् ॥
—(p 57)

प्रातर्मन्त्रवदाचम्य प्रोक्ष्य सूर्याय चाञ्जलिम् ।
4. दत्त्वा प्रदक्षिण कृत्वा द्विराचम्य यथाविधि ॥
—(p 78)

## 9. नित्याचारपद्धति

सर्वत्र सागर पुण्य पञ्चस्थानेषु मोक्षद ।
गङ्गासरस्वतीसिन्धुसेतुश्रीपुरुषोत्तमे ॥
—(p 107)

## 10 मदनपारिजात

सुस्थस्य ब्राह्मण स्नान ब्राह्म व्याधौ बलक्षये ।
दिव्य श्रद्धावता पुण्य ब्राह्मण्यमुपवापिनाम् ॥
—(p 272)

षष्ठीरात्रि त्यजेदग्नि प्रमादात शृणु मे विभो ।
4. उपवासं तथा कुर्यात् मासापत्यमथापि वा ॥
—(p 878)

## 11. नित्याचारप्रदीप

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकर ।
कामविद्धो भवेद् विष्णुर्न ग्राह्यास्ते तु वासरा ॥
—(p 80)

नरस्य द्विगुणा छायामतिक्रामेद् यदा रवि ।
4. तदा सौर चरेन्नक्त न सक्त्रिशि भोजनम् ॥
उपोषितव्यं नक्षत्र यस्मिन्नस्तमियाद् रवि ।
भुज्यते यत्र निशि वा शशिना सहित यदा ॥
—(p 85)

देशान्तरमृते चैव क्लीबे वैखानसे यती ।
8. सप दीर्घ समाख्यात स्नानादिमरणे तथा ॥
—(p. 132)

## 12. तीर्थचिन्तामणि

पुत्रदाराश्च लभते धार्मिकान् रूपसंयुतान् ।
—(p 45)

गगातोयेषु यस्यास्थि नीत्वा सक्षिप्यते नरै ।
वर्षाणा तु सहस्राणि तस्य स्वर्गे भवेत् स्थिति ॥
—(p 264 65)

## 13. कालसार

'कास्य मास मसूराश्च चणकान् कोरदूषकान् ।
'शाकं मधुपराशच वर्जयेदुपवासकृत् ॥
—(p 54)

बहिर्ग्राम्यान्त्यजान् सूत पतितञ्च रजस्वलाम् ।
4 न स्पृशेन्नापि भाषेत नेक्षेत व्रतवासरे ॥
स्त्रीणान्तु प्रेक्षणात् स्पर्शात् ताभि संकथनादपि ।
नि स्यन्दते ब्रह्मचर्यं न दारेष्वृतुसङ्गमात् ॥
—(p 54)

या तु मार्गशिरे शुक्ला महाषष्ठी नराधिप ।
8 देवद्विजसुहृद्भ्यश्च शीतघ्न तत्र दापयेत् ॥
—(p 84)

शुक्लाष्टमी कार्तिके तु स्मृता गोपाष्टमी बुधै ।
तद्दिने वासुदेवोऽभूद् गोप सर्वत्सप ॥
तत्र कुर्यात् गवा पूजा गोग्रास गोप्रदक्षिणम् ।
12 गवानुगमन कार्यं सर्वपापविशुद्धये ॥
—(p 115)

यदीच्छेद्विष्णुसायुज्य श्रिय सन्ततिमात्मन ।
एकादश्या न भुञ्जीत पक्षयोरुभयोरपि ॥
—(p 127)

एकादश्या न भुञ्जीत पक्षयोरुभयोरपि ।
16 वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृही ॥
—(p 129)

पूर्णाप्येकादशी त्याज्या वर्द्धते द्वितय यदि ।
द्वादश्या पारणालाभे पूर्वैव परिगृह्यताम् ॥
—(p 141)

### ऋषय ऊचुः

इयं गौर्निर्मृता ब्रह्मन् मूर्च्छिता भव्यशच्छिता ।
गा चालय ध्रुवं चैषा उत्स्थास्यति न संशय ॥
प्रायश्चित्तं मृता या स्यादमृतायाः कृतं त्विद ।
44 गतदानेन सुहृत्तमित्युक्त्वा मयधु क्वचित् ॥
गतेषु गौतमो धीमान् हिमवन्तं महागिरिम् ।
समाराधयितुं देवं तेपे च सुमहत्तप ॥
शतमेकं तु वर्षाणां सहस्राराधितो भवम् ।
—( p 30)

### ब्रह्मोवाच

48. पृथग् वक्तुं न शक्नोमि न च त्वं श्रवणे क्षम. ।
तथापि किंचिद् वक्ष्यामि शृणु नारद यत्नत ॥
यान्यतिव्यक्ततीर्थानि अभिवन्द्यानि यानि वै ।
तानि वक्ष्यामि संक्षेपात्नमस्कृत्य त्रियम्बकम् ॥
52 यत्रासौ भगवानासीत् प्रत्यक्षं त्र्यम्बको मुने ।
त्र्यम्बकं नाम तत्तीर्थं मुक्तिमुक्तिप्रदायकम् ॥
—(p 51)

अश्वतीर्थं महापुण्यं सर्वपापप्रणाशनम् ।
अश्वमेधसमुद्भूता नदी यत्र च सगता ॥
56. स्नात्वा च सगमे तत्र हयमेधफलं लभेत् ।
व्याधिभिर्मुच्यते चैव नारी वा यदि वा नर ॥
श्राद्धं तत्र प्रकुर्वीत पितृणां प्रीतिवर्धनम् ।
—(p 99)

## 15. वर्षक्रियाकौमुदी

'सक्रान्त्यां कृष्णपक्षे च एकादश्यां ग्रहे तथा ।
उपवास न कुर्वीत पुत्रपौत्रधनक्षयात् ॥
—(p 46)

कला काष्ठा मुहूर्तं वा यदि स्याद्द्वादशीऽहनि ।
4 द्वादश द्वादशीं हन्ति त्रयोदश्यां तु पारणम् ॥
—(p 52)

मुहूर्तं द्वादशी न स्यात् त्रयोदश्यां यदा मुने ।
उपोष्या दशमीविद्धा सर्वैरेकादशी तिथि ॥
—(p 55)

कांस्यं मांसं क्षुरं क्षौद्रं हिंसा तैलमसत्यताम् ।
8 द्यूतक्रीडा दिवानिद्रा व्यायामं क्रोधमैथुनम् ॥
द्वादश्यां द्वादशैतानि वैष्णव. परिवर्जयेत् ॥
—(p 63)

गोविन्दद्वादशी नाम महापातकनाशनी ॥
अत्र स्नात्वा तु गङ्गायां ज्ञानाज्ञानकृतानि वै ।
12. विधूय ब्रह्महत्यादिपापान्याप्नोति शाश्वतम् ॥
—(p 514)

आर्षक्रमेण सर्वे तु शूद्रा वाजसनेयिन ।
तस्माच्छूद्र स्वक कर्म यजुर्वेदेन कारयेत् ॥
—(p 575)

## 16. श्राद्धकौमुदी

आरण्यमहिषीक्षीरं शर्कराशुण्ठीसयुतम् ।
मध्वक्तं हि नरो दद्यादमृतमेव तत् ॥ (?)
(p 12)

घृतेन भोजयेद्विप्रान् घृत भूमौ समुत्सृजेत् ।
4 शक्तून् लाजास्तथा पूपान् दत्त्वा सत्कृत्य भोजयेत् ॥
शर्कराक्षीरसंयुक्ता. पृथुका नित्यमक्षया ।
—(p 19)

भिक्षार्थमागतान् वापि काले संयमिनो यतीन् ॥
भोजयेत्प्रणिपाताद्यै प्रसाद्य यतमानस ।
(p 38)

8 आर्षक्रमेण सर्वे तु शूद्रा वाजसनेयिन ॥
तस्माच्छूद्र स्वक कर्म यजुर्वेदेन कारयेत् ।
—(p 76)

भिक्षार्थमागतान् वापि काले संयमिनो यतीन् ॥
—(p 78)

साधुभि सन्निमन्त्रयेत् ।
(p 83)

12 श्राद्ध जात्य: प्रशस्ता स्युर्मल्लिका श्वेतयूथिका ।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥
-(p 142 143)

घृतेन भोजयेद्विप्र घृत भूमौ समुत्सृजेत् ।
—(p 160)

सेतुवृक्षजलादीना प्रतिष्ठासु विशेषत ॥
16 तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्ध विधीयते ॥
—(p 267)

गङ्गायाश्च गयायाश्च पिण्डदाने सम फलम् ।
विशेषत कलियुगे गङ्गापिण्ड प्रशस्यते ॥
(p 269)

विदेशगमनश्चैव तीर्थयात्राश्च मैथुनम् ।
20 महागुरुनिपाते तु वर्जयेद् देवदर्शनम् ॥
—(p 359)

अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके ।
पुसवने निषेके च नववेश्मप्रवेशने ॥
सेतुवृक्षजलादीना प्रतिष्ठासु विशेषत ।
24 तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्ध विधीयते ॥
—(p 490)

## 17. शुद्धिक्रियाकौमुदी

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवे ।
शावाशौच न कर्तव्य जन्माशौच विधीयते ॥
—(p 41)

अन्नप्राशनप्रवृत्तानामाममन्नमगर्हितम् ।
4 भुक्त्वा पक्वान्नमेतेषा त्रिरात्रन्तु पय पिवेत् ॥
—(p 60)

ब्रह्मशापहतानाञ्च नाशौच नोदकक्रिया ।
—(p 76)

श्रार्पणेन सर्वे च शूद्रा वाजसनेयिन ।
तस्माच्छूद्र स्वय कर्म यजुर्वेदेन कारयेत् ॥
—(p 154)

8 दानञ्च विधिना दद्यमशुभात्तारक हि तत् ॥
—(p 159)

विदेशगमनश्चैव तीर्थयात्राश्च मैथुनम् ।
10. महागुरुनिपाते तु न कुर्याद् देवदर्शनम् ॥
—(p 187)

## 18 स्मृतितत्त्व

कन्दुपक्वानि तैलेन पायस दधि शक्तव ।
द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि ॥
(p 71)

एकादशी प्रवृद्धा चेत् शुक्ले कृष्णे विशेषत ।
4. उत्तरा तु यति कुर्यात् पूर्वामुपवसेद् गृही ॥
—(p 105)

एकादशीमुपवसेत् द्वादशीमथवा पुन ।
विमिश्रा वा महुर्वीत न दशम्या युता क्वचित् ॥
कुर्यादलाभे सयुता नाला मेऽपि प्रवेशिनीम् ।
8. उपोष्या द्वादशी तत्र त्रयोदश्या तु पारणम् ॥
उदयात् प्राग् दशम्यास्तु शेष सघोष इष्यते ।
उपरिष्टात् प्रवेशस्तु तस्मात् ता परिवर्जयेत् ॥
—(p 106)

त्रयोदश्या यदा न स्यात द्वादशी घटिकाद्वयम् ।
12 दशम्यैकादशी विद्धा सैवोपोष्या सदा तिथि ॥
—(p 107)

द्वौ तिथ्यन्तावेकवारे यत्र स्यात् स दिनक्षय ।
—(p 119)

स्वाध्यायस्य त्रयो भेदा वाचिकोपाशुमानसा ॥
—(p 346)

प्रधानं पुरुष काले ब्रह्मविष्णुमहेश्वरा ।
16 सत्त्व रजस्तमस्तिस्र क्रमाद् व्याहृतय स्मृता
—(p 383)

प्राणानायम्य सप्रोक्ष्य अर्चेनाद्दैवतेन च ।
— p 384)

पौरषेण तु सूक्तेन ततो विष्णुं समर्चयेत् ।
वैश्वदेव तत कुर्याद् बलिकर्म तत परम् ॥
20 अपसर्पन्तु ते भूता ये भूता भूमिपालका ।
भूतानामविरोधेन पूजाकर्म करोम्यहम् ॥
अनेन स्थण्डिलाद् भूतान्यपसार्याथ साधक ।
ततो दिग्बन्धने कृत्वा दिग्भ्यस्तानपसर्पयेत् ॥
—(p 398)

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वित ॥

—(p 844)

द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरि ।
12 पुण्य क्रतुशतस्योक्त त्रयोदश्या तु पारणम् ॥

—(p 844)

एकादश्या न भुञ्जीत पक्षयोरुभयोरपि ।

—(p 845)

यथोत्तरे दक्षिणे वा अयने चैव कीर्तिते ।
तुल्य पुण्यमवाप्नोति द्वादश्योरुभयोरपि ॥
16 सायं प्रातर्यथासन्ध्ये सायं प्रातर्यथाहुती ।
तथा सितासिते पुण्ये द्वादश्यौ धर्मत समे ॥

—(p 845)

एकादश्या न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽय शुक्लामेव सदा गृही ॥

— p 845)

20 काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रत कुर्यात् दानार्चनविवर्जितम् ॥
सूतकान्ते नर स्नात्वा पूजयित्वा जनार्दनम् ।
दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते ॥
24 सप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ।
पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि ॥

—(p 848)

सम कृत्वार्धमासे तु उपवासान् दशाचरेत् ।
पराक मासससर्गे चान्द्रं मासत्रये मतम् ॥
28 कृत्वा षाण्माससंसर्गे कुर्याच्चान्द्रायणद्वयम् ॥
किंचिन्न्यूनाब्दसंसर्गे षण्मास कृच्छ्रमाचरेत् ॥

—(p 898)

अश्वधेनुमनुष्याश्च रासभ कुञ्जरस्तथा ।
कन्या नारी च मेषश्च पुस्तक ब्रह्मसूत्रकम् ॥
32 लवण पलल चर्म लशुन गृञ्जन तथा ।
पिप्पली च मरीचाश्च हरिद्राश्च लवङ्गिका ॥
औषधानि च यावन्ति मत्स्यकुक्कुटसूकरा ।
हिङ्गुजीरकवस्तूनि ताम्र कांस्यादिक तथा ॥
36 एतानि मूल्यैं कृत्वा तु स्वशैर्वापि ततोऽधिकै ।
विक्रयित्वात्मभरण कुर्याद्यदि स पापभाक् ॥
मृत्वा नरकमासाद्य क्रिमिरूपे पतत्यध ।
तस्मादेतद् विशुद्ध्यर्थं प्रायश्चित्तमिहोच्यते ॥
40 एकवार द्विवारं वा बहुवारमनेकश ।
तप्त पराक चान्द्र च यावक वर्षमाचरेत् ॥
तस्योपनयन भूय पञ्चगव्येन शुद्ध्यति ।
वृद्धेरपि च या वृद्धिश्चक्रवृद्धिरुदाहृता ॥
44 मासि मासि च या वृद्धि, सा शिखावृद्धिरिष्यते ॥
ताभ्या जीवेद् यदा विप्र स वार्धुषिक उच्यते ।
मास जीवेद्यदा विप्र पराकं कृच्छ्रमाचरेत् ॥
मासद्वये तु तप्त स्याद् चान्द्र मासत्रये स्मृतम् ॥
48 षण्मासे तु महाचान्द्रं वत्सरे द्विगुण स्मृतम् ।
पतित स्यात् पर विप्र सर्वकर्मबहिष्कृत ॥

—(p 917)

## 22 दानमयूख

कनकाश्वतिला नागा दासीरथमहीगृहा ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥

—(p 164)

पलैक द्विगुण वापि त्रिगुण शक्त्यनुक्रमात् ।
4 कनक स्यात् सुवर्णेन द्वाभ्या त्रिभि सदक्षिणम् ॥
यत्नादघो वा तत् कुर्याद् दक्षिणा स्याद्यथारुचि ॥

—(p 165)

अश्व तन्मूल्यमथवा कनीयो मध्यमोत्तमम् ।
दद्यात् वित्तानुसारेण तारागणपरिच्छदम् ॥
8 शफै पञ्चपले रौप्यै सुवर्णालकृत क्रमात् ।
सदक्षिण सवस्त्र च ब्राह्मणायाग्निहोत्रिणे ॥

—(p 166)

द्रोणैक धान्यसाहस्रं त्रिधा खड्गसदक्षिणम् ॥
आहिताग्नौ द्विजे दत्वा सर्वं तरति दुष्कृतम् ॥

—(p 169)

12. तिलपूर्णं ताम्रपात्रं सहिरण्यं द्विजातये।
मातर्दत्त्वा तु विधिवद् दुःस्वप्नं विनिहन्ति सः॥
तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम्।
ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम्॥
16. द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमम् स्मृतम्।
स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे क्षिपेत्॥
त्रिगुणं चोत्तमे तद्वत् सुवर्णं परिकीर्तितम्।
सुवर्णं दक्षिणां दत्त्वा सर्वपापक्षयो भवेत्॥
—(p. 170)

20. दद्याद् गवां पुराणोक्तं मूल्यं पंचशतानि च।
वित्तानुसारात्तत्रापि कनिष्ठोत्तममध्यमम्॥
—(p 173)

रथं चतुर्बलीवर्दरूढं धान्यावृतं तथा।
वित्तानुसारात् सर्वैश्च रथोपकरणैर्युतम्॥
24. सदक्षिणं च विप्राय दत्त्वा शिवपुरं व्रजेत्॥
—(p. 175)

गोचर्ममात्रं भूखण्डमधिकं वा स्वशक्तितः।
त्रिधा सदक्षिणां कृत्वा दत्त्वा शिवपुरं व्रजेत्॥
—(p. 175)

शक्तितः सर्वविधेन पूर्णं गृहमपि त्रिधा।
28. सदक्षिणं द्विजे दद्या (?) ब्रह्मलोकं व्रजेन्नरः॥
—(p 177)

## 23. समयमयूख

यदीच्छेद् विष्णुसायुज्यं श्रियं सन्ततिमात्मन।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥
—(p 40)

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
4. वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही॥
—(p. 40)

कांस्यं मांसं मसूरं च चणकान् कोरदूषकान्।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियं॥
—(p. 41)

## 24. निर्णयसिन्धु

बहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम्।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे॥
—(p. 18)

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके।
4 तत्र काम्यव्रतं कुर्यात् दानार्चनविवर्जितम्॥
—(p. 21, 140)

न शंखेन पिबेत्तोयं न खादेत् कूर्मशूकरौ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥
यदिच्छेद् विष्णुसायुज्यं श्रियं सन्ततिमात्मनः।
—( p. 25)

8. कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान्।
शाकं मधु परान्नं च त्यजेदुपवसन्स्त्रियं॥
—(p. 32)

एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन दानेन न निर्द्वादशिको भवेत्॥
—(p. 32)

12. कालशाकं च वास्तूकं मूलकं कृष्णनालिका।
—(p. 289)

तमालं शतकन्दं च मध्वालु. शीतकन्दली।
—( p. 292)

प्रायश्चित्ती व्रजेत्तीर्थं पत्नीविरहितोऽपि वा।
यज्ञेष्वनधिकारी वा यश्च वा मन्त्रसाधकः।
—(p 358)

16. यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्।
—(p. 419)

## 25. वीरमित्रोदय

(पूजाप्रकाश)

अनर्चयित्वा गोविन्दं यैर्भुक्तं धर्मवर्जितैः।
शुनो विष्ठासमं चान्नं शरीरं च सुरया समम्॥
—(p. 7)

अतिरम्या अरस्वाश्च दुःस्पृश्या मण्डकादयः।
4. नैवेद्ये तेऽप्ययोग्याः स्युः मोदकाद्याः पुरातनाः॥

अतिपक्वमपक्वं च सुपक्वं कृमिसंयुतम् ।
दुर्भाण्डस्यमसंयस्कं दुर्गन्धि न शुभं स्मृतम् ॥
—(p 80 81)

मध्याह्ने विधिवत् पूज्य श्रीविष्णुं वैष्णवोत्तम. ।
8 नैवेद्यं शिरसा नत्वा श्लोकमेतदुदीरयेत् ॥
यस्योच्छिष्टं हि वाञ्छन्ति ब्रह्माद्या ऋषयोऽमला ।
सिद्धाद्याश्च हरेस्तस्य वयमुच्छिष्टभोजिन ॥
उच्छिष्टभोजनस्तस्य वयमद्भुतकर्मण ।
12 येन लीलावतारेण हिरण्याक्षो निपातित ॥
—(p 85)

( तीर्थप्रकाश )

गङ्गायां च जले मोक्षो वाराणस्या जले स्थले ।
जले स्थले नान्तरिक्षे गंगासागरसङ्गमे ।
—(p 180)

प्रवेशात्तस्य तद्भूमावश्वमेध पदे पदे ।
(p 229)

16 दशाहाभ्यन्तरे यस्य गङ्गायामस्थिमज्जति ।
गङ्गाया मरणे यादृक् तादृक् फलमवाप्नुयात् ॥
अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्दे न कुर्वीत कृतेऽपि हि सपिण्डने ॥
—(p 373)

## 26. कालतत्त्वविवेचन

नन्दा विद्धा तु या पूर्णा द्वादशी मकरे सिता ।
भृगुणा नष्टचन्द्रा च एता वै निष्फला: स्मृता ॥
—(p 52)

एकभक्तेन नक्तेन बालवृद्धातुर क्षिपेत् ।
4. पयोमूलफलैर्वापि न निर्द्वादशिको भवेत् ॥
—(p 115)

यदीच्छेद् विष्णुसायुज्यं श्रियं संततिमात्मन ।
एकादशीसमं किंचित् पापत्राणं न विद्यते ॥
स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी ।
8 सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ॥
—(p 119)

बहिर्ग्रामान्त्यजान् सूर्ति पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥
—(p 122)

कांस्यं मासं मसूरं च चणकान् कोरदूषकान् ।
12 शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥
—(p 123)

द्विस्पृगेकादशी यत्र तत्र संनिहितो हरि ।
तामेवोपवसेत्कामाकामो विष्णुतत्पर ॥
—(p 156)

दिनक्षये तु संप्राप्ते उपोष्या द्वादशी भवेत् ।
16 दशमीशेषसंयुक्ता न कुर्वीत कदाचन ॥
—(p 158)

एकादशीमुपवसेद् द्वादशीमथवा पुन ।
विमिश्रा वापि कुर्वीत न दशम्या युता क्वचित् ॥
कुर्यादलाभे संयुक्ता नालाभेऽपि प्रवेशिनीम् ।
20 उपोष्य द्वादशीं तत्र त्रयोदश्यां तु पारणम् ॥
उदयात् प्राग् दशम्यास्तु शेष प्रयोग इष्यते ।
उपरिष्टात् प्रवेशस्तु तस्मात्तां परिवर्जयेत् ॥
उदयोपरिविद्धा तु दशम्यैकादशी यदि ।
24 दानवेभ्य प्रीणनार्थं दत्तवान् पाकशासन ॥
—(p 160)

दशम्यैकादशी विद्धा गान्धारी तामुपोषिता ।
तस्या पुत्रशतं नष्टं तस्मात् तां परिवर्जयेत् ॥
ये कारयन्ति कुर्वन्ति दशम्यैकादशीयुताम् ।
28 आलोक्य तन्मुखं प्राज्ञ सूर्यदर्शनमाचरेत् ॥
—(p 161)

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
सोपोष्या च प्रयत्नेन महापुण्यविवर्धनी ॥
—(p 162)

एकादशीमुपवसेद् द्वादशीमथवा पुन ।
32 विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥
—(p 164)

एकादशी दिवायुक्ता पलोऽपि न वर्धते ।

गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥
—(p 165)

प्रदोषव्यापिनी यत्र त्रिमुहूर्ता दिवा यदि ।
36. तदा नक्तव्रतं कुर्यात् स्वाध्यायस्य निषेधवत् ॥
—(p. 209)

नरस्य द्विगुणं छायामतिक्रामेद्यदा रविः ।
तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम् ॥
—(p. 211)

अमावस्या तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः । (?)
—(p 346)

40. सपिण्डीकरणं कृत्वा कुर्यात् पार्वणवत् सदा ।
प्रतिसंवत्सरं विद्वान् छागलेयोदितो विधिः ॥
—(p 432)

## 27. निधानपारिजात

निक्षिप्याग्निं स्वदारेषु परिकल्प्यार्त्विजं तथा ।
प्रवसेत् कार्यवान् विप्रस्तथैव न चिरं वसेत् ॥
—(p 84)

पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत् ।
4 वैश्वदेवं ततः कुर्याद् बलिकर्म तथैव च ॥
—(p 270)

तस्मात्ताराधिते देवे सर्वमाराधितं भवेत् ।
—(p. 279)

ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती ।
सनाथा मृतनाथा वा तस्या नास्तीह निष्कृतिः ॥
—(p. 202)

8 अकुर्वन् देवतापूजां भुञ्जीयाद् ब्राह्मणो यदि ।
माससंख्यांल्लोहपिण्डानश्नाति यममन्दिरे ॥
—(p 303)

बहिर्धर्मानपत्नान् सूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत भरवासरे ॥
12. उपवासे तथा श्राद्धे न खादेद् दन्तधावनम् ॥
श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्र्याः शतसंपूतमम्बु प्राश्य विशुद्ध्यति ॥
—(p. 425)

कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान् ।
16. शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥
शाकं माषं मसूरांश्च पुनर्भोजनमैथुने ।
घृतमत्यम्बुपानं च दशम्यां वैष्णवस्त्यजेत् ॥
—(p. 430)

स्वाभीष्टदेवतामन्त्रजपं कुर्यात् प्रयत्नतः ।
—(p. 46)

20. यज्ञे यथा पण्डमूकवनितादिविवर्जनात् ।
—(p 513)

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्याद् दानार्चनविवर्जितम् ॥
—(p 657)

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम् ।
24. नरयाने तदर्धं स्यात् पद्भ्यां तच्च चतुर्गुणम् ॥
तीर्थानुगमनं पद्भ्यां तपः परमिहोच्यते ।
तदेव कृत्वा यानेन स्नानमात्रफलं लभेत् ॥
—(p 730-731)

तीर्थयात्रां प्रकुर्वन्ति दम्भेन कपटेन ( च ) ये ।
28. तीर्थे मृता न सिद्ध्यन्ति ते नरा नरकार्णिनि ॥
सर्वस्वेनस्तीर्थयात्रां ब्राह्मणानवमन्यते ।
नासौ प्रतिनिवर्तेत तदन्तं तस्य जीवितम् ॥
तीर्थं गच्छन् द्विजः सन्ध्यास्तिस्र एकत्र वा (वा) चरेत् ।
32. नास्नातो नाशुचिर्गच्छेत् न भुक्त्वा न च सूतकी ।
—(p 747-749)

एषु तीर्थेषु यच्छ्राद्धं तत् कोटिगुणमिष्यते ।
यस्मात् तस्मात् प्रयत्नेन तीर्थे श्राद्धं समाचरेत् ।
देशानां तु विशेषेण भवेत् पुण्यमनन्तकम् ॥
—(p 777)

## 28. तीर्थेन्दुशेखर

कामतोऽकामतो वापि यत् करोति शुभाशुभम् ।
तत्सर्वं त्वयि सन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥
—(p 52)

## 29. जयसिंहकल्पद्रुम

तस्मात् कालात्मकं विश्वं स एव परमेश्वरः ॥

—(p. 5)

[नक्तव्रतकालनिर्णये कूर्मपुराणेऽपि]—

नरस्य द्विगुणां छायामतिक्रामेद्यदा रविः ।
तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम् ॥

—(p. 50)

[व्रताधिकारिधर्मनिर्णये कौर्मे]—

4. बहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥

—(p. 58)

[व्रते सूतकादिनिर्णये माधवीये कौर्मे]—

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥

—(p. 64; 126)

[कूर्मपुराणोक्त नागव्रत मदनरत्ने]—

8. तिथौ युगाद्ययायां तु समुपोष्य यथाविधि ।
शङ्खपालादिनागानां शेषस्य च महात्मन ॥
पूजा कार्या पुष्पगन्धक्षीराप्यायनपूर्वकम् ॥

—(p. 212)

[तदुक्त कूर्मपुराणे]—

कुम्भे शुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम् ।
12. सम्पूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नरः ॥

—(p. 215)

[इति कूर्मपुराणोक्त यमव्रतम्]—

भरण्या तु चतुर्थ्यां तु शनैश्चरदिने यमम् ।
पूज्यते सप्तजन्मोत्थैर्मुच्यते पातकैर्नर. ॥

—(p. 221)

[षष्ठीतिथिव्रतनिर्णये कौर्मे]—

दशसौवर्णिके शृंगे खुराः पञ्चपलान्विताः ॥
16. पञ्चाशत्पलिकं ताम्रं कांस्यं चैतावदेव तु ॥
वस्त्रं तु त्रिगुणं धेन्वा दक्षिणा तु चतुर्गुणा ।
एतैश्चालंकृता धेनुर्घण्टाचामरविभूषिता ॥

कपिला विप्रमुख्याय दत्ता स्वर्गोक्षदा मता ।

—(p. 254)

[अष्टमीतिथिव्रतनिर्णये कौर्मे]—

20. चैत्रे मासि सिताष्टम्यां बुधवारे पुनर्वसौ ।
अशोककुसुमैः रुद्रमर्चयित्वा विधानतः ॥
अशोकस्याष्टकलिका मन्त्रेणोक्तेन भक्षयेत् ।
शोकं नैवाप्नुयान्मर्त्यो रूपवानपि जायते ॥

—(p. 280)

[एकादशीतिथिव्रतनिर्णये कौर्मंदवलायत्त]—

24. न शङ्खेन पिबेत्तोयं न खादेत् कूर्मशूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

—(p. 399)

[तथा च कूर्मपुराणे]—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृही ॥

—(p. 402)

[कूर्मपुराणेऽपि]—

28. संक्रान्त्यां कृष्णपक्षे तु रविशुक्रदिने तथा ।
एकादश्यां न कुर्वीत उपवासं च पारणम् ॥

—(p. 402)

[कूर्मपुराणे]—

एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् ।
नातिक्रमेद् द्वादशीं च उपवासव्रतेन च ॥

—(p. 404)

[कूर्मपुराणे]—

32. स ब्रह्महा सुरापः स्यात् कृतघ्नो गुरुतल्पगः ॥

—(p. 405)

[तदुक्त कूर्मपुराण]—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

—(p. 416)

[कूर्मपद्मपुराणयोः]—

एकादशी दशाविद्धा दशमी न च वर्धते ।
36. तदोपोष्या द्वादशी स्यात् त्रयोदश्यां च पारणम् ॥

—(p. 418)

[ कूर्मपुराणवचन ]—

एकादशी यदा विद्धा द्वादशी च क्षय गता ।
क्षीणा सा द्वादशी ज्ञेया नक्त तत्र विधीयते ॥
—(p 418)

[ कूर्मपुराणात् ]—

उदयात् प्राग् दशम्यास्तु शेष सयोग उच्यते ।
—(p 420)

[ ब्रह्मवैवर्त कूर्मपुराण ]—

40 एकादशीमुपवसेद् द्वादशीमथवा पुन ।
विमिश्रा वापि कुर्वीत न दशम्या युता क्वचित् ॥
—(p 422)

[ कूर्मपुराण ]—

कास्य मास मसूर च चणकान् कोरदूषकान्
शाक मधु पराान्न च त्यजेदुपवसन् स्त्रियम् ॥
—(pp 424 425)

[ त्रयोदशीव्रततिथिनिर्णय कूर्मपुराणोक्ता मदनपूजा तदुक्त मदन रत्ने ]—

44 मधौ शुक्लत्रयोदश्या मदन चन्दनात्मकम् ।
कृत्वा सम्पूज्य यत्नेन वीजयेद् व्यजनेन च ॥
तत्र सम्पूजित काम पुत्रपौत्रसमृद्धिद ॥
—(p 567)

[ कूर्मपुराणोक्त प्रदोषव्रत हेमाद्रौ ]—

त्रयोदश्या तथा रात्रौ सोपवासस्त्रिलोचनम् ।
48 दृष्ट्वा तु प्रथमे यामे मुच्यते सर्वपातकै ॥
—(p 586)

[ पूर्णिमा तिथिव्रतनिर्णय कूर्मपुराणे ]—

दशसौवर्णिके शृङ्ग खुरा पञ्चपलान्विता ।
पञ्चाशत्पलिक ताम्र कास्य वै तावदेव च ॥
वस्त्र तु त्रिगुण धे वा दक्षिणा च चतुर्गुणा ।
52 पतैरलङ्कृता धेनु घण्टाभरणभूषिताम् ॥
कपिला विप्रमुख्याय दत्त्वा मोक्षमवाप्नुयात् ।
द्विगुणोपस्करोपेता महती परिकीर्तिता ॥
दत्ता सा विप्रमुख्याय स्वर्गमोक्षफलप्रदा ।
56 सप्तजन्मकृतात् पापान्मुच्यते दशसयुत ॥

यान् यान् प्रार्थयते कामास्तास्तानाप्नोति मानव ।
अन्ते स्वर्गापवर्गौ च फलमाप्नोत्यसशयम् ॥
—(pp 762 763)

[ कूर्मपुराण ]

तिलपूर्ण ताम्रपात्र सहिरण्य द्विजातये ।
60 प्रातर्दत्त्वा तु विधिवद् दु स्वप्न प्रतिहन्ति स ।
तिलपात्र त्रिधा प्रोक्त कनिष्ठोत्तममध्यमम् ॥
ताम्रपात्र दशपल जघन्य परिकीर्तितम् ।
द्विगुण मध्यम प्रोक्त त्रिगुण चोत्तम स्मृतम् ।
64 स्वर्णमेक जघन्ये तु द्विगुण मध्यमे क्षिपेत् ॥
त्रिगुण चोत्तम तद्वत् सुवर्ण परिकीर्तितम् ॥
सुवर्ण दक्षिणा दत्त्वा सर्वपापक्षयो भवेत् ।
तिला पापहरा नित्य विष्णुर्देहसमुद्भवा ।
68 तिलदानेन सर्व मे पाप नाशय केशव ॥
औदर्यहृमनुष्येव स्वर्णबीज तव प्रभो ।
दत्त गृहाण देवेश पाप सहर सत्वरम् ॥
—(p 767 768)

[ एकादशीव्रतनिथिनिर्णय कूर्मपुराणे वैशाखशुक्लपक्ष मोहिन्ये कादशीमाहात्म्यम ]—

### युधिष्ठिर उवाच

वैशाखशुक्लपक्षे तु किनामैकादशी भवेत् ।
72 कि फल को विधिस्तस्या कथयस्व जनार्दन ॥

### श्रीकृष्ण उवाच

कथयामि कथामेता शृणु त्व ब्रह्मनदन ।
वसिष्ठो यामकथयत्पुरा रामाय पृच्छते ॥

### राम उवाच

भगवन्श्रोतुमिच्छामि व्रतानामुत्तम व्रतम् ।
76 सर्वपापक्षयकर सर्वदु खनिकृन्तनम् ॥
मया दु खानि भुक्तानि सीताविरहजानि वै ।
ततोऽह भयभीतोऽस्मि पृच्छामि त्वा महामुने ॥

### वसिष्ठ उवाच

स तु पृष्ट त्वया राम तवैषा नैष्ठिकी मति ।
80 त्वन्नामग्रहणेनैव पूतो भवति मानव ॥

तथापि कथयिष्यामि लोकानां हितकाम्यया ।
पवित्रं पावनानां च व्रतानामुत्तमं व्रतम् ॥
वैशाखस्य सिते पक्षे द्वादशी राम या भवेत् ।
84 मोहिनी नाम सा प्रोक्ता सर्वपापहरा परा ॥
मोहजालात्प्रमुच्येत् पातकानां समूहतः ।
अस्याः व्रतप्रभावेण सत्यं सत्यं वदाम्यहम् ॥
अतः कारणतो वापि कर्तव्यैषा भवादृशैः ।
88 पातकानां क्षयकरी महादुःखविनाशिनी ॥
शृणुष्वैकमना राम कथां पापहरां पराम् ।
अस्याः श्रवणमात्रेण महापापं प्रणश्यति ॥
सरस्वत्यास्तटे रम्ये पुरी भद्रवती शुभा ।
92 द्युतिमान् नाम नृपतिस्तत्र राज्यं करोति वै ॥
सोमवंशोद्भवो राम धृतिमान् सत्यसंगरः ॥
तत्र वैश्यो निवसति धनधान्यसमृद्धिमान् ।
धनपाल इति ख्यातः पुण्यकर्मप्रवर्तकः ॥
96 प्रपासत्राप्यायतनतडागारामकारकः ।
विष्णुभक्तिपरः शान्तस्तस्यासन् पञ्चपुत्रकाः ॥
सुमना द्युतिमांश्चैव मेधावी सुकृती (?) तथा ।
पञ्चमो धृष्टबुद्धिश्च महापापरतः सदा ॥
100 वारस्त्रीसङ्गनिरतो विटगोष्ठीविशारदः ।
द्यूतादिव्यसनासक्तः परस्त्रीरतिलालसः ॥
न देवानतिथीन् वृद्धान् पितॄंश्चैव द्विजानपि ।
समानयति नास्तिक्यात् सदा दुःसगलालसः ॥
104 अन्यायकर्ता दुष्टात्मा पितुर्द्रव्यक्षयकरः ।
अभक्ष्यभक्षकः पापः सुरापानरतः सदा ॥
वेश्याकण्ठार्पितबाहुर्भ्रमति स्म चतुष्पथे ।
पित्रा निष्कासितो गेहात् परित्यक्तः स बान्धवैः ।
108 स्वदेहभूषणान्येव क्षयं नीतानि तेन वै ।
गणिकाभिः परित्यक्तो निन्दितश्च धनक्षयात् ॥
ततश्चिन्तापरो जातो वस्त्रहीनः क्षुधार्दितः ।
किं करोमि क्व गच्छामि केनोपायेन जीव्यते ।
112 तस्करार्थं समारब्ध तत्रैव नगरे पुनः ॥
गृहीतो राजपुरुषैर्मुक्तश्च पितृगौरवात् ।
पुनर्बद्धः पुनर्मुक्तः पुनर्बद्धः ससम्भ्रमैः ॥
दुष्टबुद्धिर्दुराचारो निबध्य निगडैर्दृढम् ।
116 कशाघातैस्ताडितश्च पीडितश्च पुनः पुनः ॥
न स्थातव्यं हि मन्दात्मंस्त्वया मद्देशगोचरे ।
एवमुक्त्वा ततो राज्ञा मोचितो दृढबन्धनात् ॥
निर्जगाम भयात्तस्य गतोऽसौ गहनं वनम् ।
120 क्षुत्तृषापीडितश्चापमितश्चेतश्च धावति ॥
सिंहवन्निजघानासौ मृगशूकरचित्तलान् ।
आमिषाहारनिरतो वने तिष्ठति सर्वदा ॥
करे शरासनं कृत्वा निषङ्गं पृष्ठसंगतम् ।
124 अरण्यचारिणो हन्ति पक्षिणश्च चतुष्पदान् ॥
चकोरांश्च मयूरांश्च कङ्कान्तित्तिरिमूषकान् ।
एतानन्यान् हन्ति नित्यं धृष्टधीर्निर्गतान् नरान् ॥
पूर्वजन्मकृतैः पापैर्निमग्नः पापकर्दमे ।
128 दुःखशोकसमाविष्टश्चिन्तयन् सोऽप्यहर्निशम् ॥
कौण्डिन्यस्याश्रमपदं प्राप्तः पुण्यागमे क्वचित् ।
माधवे मासि जाह्नव्यां कृतस्नानं तपोधनम् ॥
आससाद धृष्टबुद्धिः शोकभारेण पीडितः ।
132 तद्वस्त्रबिन्दुस्पर्शेन स पापात्मा गताशुभः ॥
कौण्डिन्यस्याग्रतः स्थित्वा प्रत्युवाच कृताञ्जलिः ।

धृष्टबुद्धिरुवाच

प्रायश्चित्तं ब्रूहि ब्रह्मन् विना वित्तेन यद् भवेत् ।
आजन्मकृतपापस्य नास्ति वित्तं ममाधुना ॥

ऋषिरुवाच

136 शृणुष्वैकमना भूत्वा येन पापक्षयस्तव ।
वैशाखस्य सिते पक्षे मोहिनी नाम नामतः ॥
एकादशी व्रतं तस्याः कुरु मद्वाक्यनोदितः ।
मेरुतुल्यानि पापानि क्षयं नयति देहिनाम् ॥
140 बहुजन्मार्जितान्येषा मोहिनी समुपोषिता ।
इति श्रुत्वा मुनेर्वाक्यं धृष्टबुद्धिः प्रसन्नहृत् ॥

व्रतं चकार विधिवत् कौण्डिन्यस्योपदेशतः ।
कृते व्रते नृपश्रेष्ठ हतपापो बभूव स ॥
144. दिव्यदेहस्ततो भूत्वा गरुडोपरिसंस्थितः
जगाम वैष्णवं लोकं सर्वोपद्रववर्जितम् ॥
इतीदृशं रामचन्द्र उत्तमं मोहिनीव्रतम् ।
नातः परतरं किञ्चित् त्रैलोक्ये सचराचरे ॥
148. यज्ञादितीर्थदानानि कलां नार्हन्ति षोडशीम् ।
पठनाच्छ्रवणाद्राजन् गोसहस्रफलं लभेत् ॥
इति श्रीकूर्मपुराणे माहात्म्ये वैशाखशुक्लैकादशी माहात्म्यम् ॥
—(pp 448 450)

[ This same मोहिन्येकादशीव्रत occurs also in the *Vrata-rāja* of Śrī Viśvanātha Śarmā of Kāśī (A. D 1736), pub. by Venkatesvara-Press, Bombay, Saṁvat 2020, A D 1963, pp 556-557 It contains the following variants —

-L73. धर्मनन्दन (→ब्रह्मनन्दन) -L87 पातस्तु कारणाद् राम (→पत्र कारणतो वापि) -L89 पुण्यप्रदां शुभाम् (→पापहरां पराम्) L98. चु्तिमान (→गुह्य्मान्), सुकृती (→कृष्णती ?) -L102 पितृश्राद्धं (→पितृश्चैव) -L103 O. -L106 भ्रमद्दृष्टिस् (→भ्रमति स्म) -L114 पुनर्मुक्त स वै भटं (→धुनवद्ध ससम्भ्रमं) -L115 धृष्टबुद्धिर् (→दुष्टबुद्धिर्) -L123 शरासने शर कृत्वा (→करे शरासन कृत्वा), पृष्ठ -(→मुष्टि-) -L126 धृष्टबुद्धिः स निघृंण (→धृष्टधीर्निगतान् नरान्) -L129 कौण्डिन्यस्याश्रमं प्राप्य कस्माच्चित् पुण्यगौरवात् L132, गतपाप्मा हताशुभ (→स पापात्मा गताशुभ ) -L141 इति वाक्यं मुने श्रुत्वा (→इति श्रुत्वा मुनेर्वाक्य) -L146 तमोमोहनिकृन्तनम् (→उत्तम मोहिनीव्रतम्)]

## 30. पुरुषार्थचिन्तामणि

प्रदोषव्यापिनी यत्र त्रिमुहूर्ता यदा दिवा ।
तदा नक्तव्रतं कुर्यात् स्वाध्यायस्य निषेधवत् ॥
—( p. 58 )

नरस्य द्विगुणा छायामतिक्रामेद्यदा रविः ।
4. तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम् ॥
—( p. 59 )

माघशुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदा शिवम् ।
सम्पूज्य यो हि नक्ताशी संप्राप्नोति श्रियं नरः ॥
—( p. 120 )

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
8. उत्तरां तु यतिः कुर्यात् पूर्वामुपवसेद् गृही ॥
—(pp 209, 231)

द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।
तस्मिन् स्नानं जपो होमो नोपवासो गृहाश्रमे ॥
—(p. 244)

वह्निर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम् ।
12. न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥
—(p 259)

एकादश्यामुपोष्यैवं द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत् कुर्याद् द्वादशद्वादशीक्षयात् ॥
—(p 265)

कलाद्वयं त्रयं वापि द्वादशीं न त्वतिक्रमेत् ।
16. अतिक्रान्ता द्वादशी तु हन्ति पुण्यं पुराकृतम् ॥
—( p 265 )

## 31. आचारभूषण

ब्रह्मामुरारिस्त्रिपुरान्तकारि-
र्भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः,
4. कुर्वन्तु सर्वे मम सुप्रभातम् ॥
भृगुर्वसिष्ठ क्रतुरङ्गिराश्च,
मनुः पुलस्त्यः पुलहश्च गौतमः ।
रैभ्यो मरीच्यश्च्यवनश्च दक्ष,
8 सनत्कुमारः सनकः सनन्दनः ॥
सनातनोऽप्यासुरिपिङ्गलौ च,
सप्तस्वराः सप्तरसातलानि ।
सप्तार्णवाः सप्तकुलाचलाश्च,
12. सप्तर्षयो द्वीपवनानि सप्त ॥
—( p. 10 )

महादि कृत्वा भुवनानि सप्त,
पृथ्वी सगन्धा सरसास्तथापः ।
स्पर्शी च वायुर्ज्वलितं च तेजः,
16. नभः सशब्दं महता सहैव ॥
इत्थं प्रभाते परमं पवित्रं,
पठेत् स्मरेद्वा शृणुयाच्च तद्वत् ।
दुःस्वप्ननाशस्त्विह सुप्रभातम्,
20. भवेच्च नित्यं भगवत्प्रसादात् ॥
—(p 11) [cf Vām-P 14 23-28, see also the Introduction to Appendix 1 p 689]

स्नानं सन्ध्यां ततो होमं गृहस्थोक्तेन वर्त्मना ।
कृत्वा सूर्यं गणपतिं लक्ष्मीमीशं तथा हरिम् ॥
पौरुषेण तु सूक्तेन नित्यमर्चां समारभेत् ।
—(p 202)

24 नाराधयति यः सायं देवदेवोत्तमं शिवम् ।
स पिशाचो भवेच्चैव नात्र कार्या विचारणा ॥
—(p 325)

इन्दौ वृद्धिक्षयं प्राप्ते ब्रह्मयज्ञं न कारयेत् ।
न जपेद् वैदिकं मन्त्रं गायत्र्यष्टोत्तरं शतम् ॥
—(p 399)

**Index of common verses ascribed to the Kūrma-Purāṇa and quoted in more than one Nibandha-works or in more than one places in a Nibandha-work**

( अनेकनिबन्धग्रन्थेषूद्धृता कूर्मपुराणस्थत्वेन निर्दिष्टा समाना श्लोकपङ्क्तयः )


अतिक्रान्ता द्वादशी तु—चतु चि L 165 पु चि L 16
अनन्ते स्वर्गापवर्गौ च—चतु चि L 12, ज क द्र L 58
आर्षक्रमेण सर्वे तु—व दी I 13, श्रा दी L 8
आहिताग्नौ द्विजे दत्त्वा—चतु चि L 51 दा म L 11
उत्तरां तु यतिं कुर्यात्—चतु चि L 132 स्मृ त (भाग १) L 4, पु चि L 8
उदयात् प्राग् यदाभ्यासतु—का वि L 13; स्मृ त L 9 का त वि १ L 21 ज क द्र L39
उपरिष्टात् प्रवेशस्तु—का वि L 14 स्मृ त L 10, का त वि L 22
उपवासं न कुर्वीत—का. मा L 16, स्मृ सु I 10
उपवासं कृतवत्या—स्मृ च I 14 चतु चि L 146
उपोष्या द्वादशी तत्र—का वि I 12, चतु चि L 159 स्मृ त L 8
एकभक्तेन नक्तेन—चतु चि I 60, I 122; का मा I 21, का त वि I 3 ज क द्र L 30
एकादशी दशाविद्धा—चतु चि L 156, ज क. द्र L 35
एकादशी द्वादशी च—स्मृ च L 12; चतु. चि L 144, का मा I 15 स्मृ सु L 9, का त वि L 29; ज क द्र L 33
एकादशीमुपवसेत्—स्मृ त ( भाग ? ) L 5 का त वि L 17
एकादशीमुपवसेद्—का त वि I 31, ज क द्र L 40
एकादश्यां न कुर्वीत—अपरार्क L 2 का मा I 20 ज क द्र L 29
एकादश्यां न भुञ्जीत—का मा L 12 L 17, का मा L 14, I 15; स्मृ सु L 6, L 13, L 18 स म L 2, L 3, नि सि L 6, ज क द्र L 25, L 26
एकादश्यामुपोष्यैव—चतु चि L 162, पु चि I 13
एकोद्दिष्टेना पेनु—चतु चि L 6 ज क द्र L 52
एष साधारणो धर्मः—चतु चि L 101 आ र I 2

कनकं स्यात् सुवर्णेन—चतु. चि L 18, दा. म. L 4
कनकाश्वतिला नागा—चतु. चि. L 119; स्मृ. त L 30; दा. म. L 1
कन्या च कपिला धेनुः—चतु. चि L 16, L 120; स्मृ त L 31; दा म L 2
कपिलां विप्रमुख्याय—चतु. चि L 7; ज क द्रु L 19, L 53
कलाद्वयं त्रयं चापि—चतु. चि. L 164; पु. चि L 15
कांस्यं मांसं मसूरं च—अपरार्क. L 7; स्मृ. च L 1; चतु. चि L 58, L 127, L 129; स. म L 5; का त वि (?) L 11; ज क. द्रु. L 42
कांस्यं मांसं मसूरांश्च—का. मा L 23; का सा. L 1; नि. सि L 8; वि पा. L 15
काम्योपवासे प्रक्रान्ते—का मा L 25; स्मृ. मु L 20; नि. सि L 3, वि. पा. L 21, ज. क. द्रु. L 6
कुर्यादलाभे संयुक्तां—का. वि L 11; स्मृ त. L 7; का. त वि L 19
कृत्वा षण्मासंसर्गे—चतु चि. (प्रा.) L 96, स्मृ मु. L 29
गोचर्ममात्रं भूखण्ड—चतु चि. L 13; दा. म L 25
गोयाने गोवध प्रोक्तो—नि से. सा L 1 वि. पा L 23
तत्र काम्यव्रतं कुर्यात्—का. मा. L 26, स्मृ मु L 21, नि सि L 4, वि पा L22 ज क द्रु. L 7
तदा नक्तव्रत कुर्यात्—का सा L 2; स्मृ. मु L 2, का. त. वि L 36; पु चि L 2
तदा क्षीरं चरेद्भक्तं—का. त. वि. (?) L 30, ज. क द्रु L 3, पु. चि L 4
तद्दोषपरिहारार्थे—चतु चि (प्रा.) L 189 L 237, L 542
तमाल शतकन्दं च—चतु चि. L 76; नि. सि. L 13
तस्मात् कालात्मकं विश्वं—चतु चि L 118; ज. क द्रु. L 1
तस्माच्छूद्र स्वकं कर्म—व. कौ L 14; आ. कौ L 9
तस्मादेतद् विशुद्ध्यर्थं—चतु चि; (प्रा.) L 258, L 388, स्मृ मु L 39
तस्मिन् स्नानं जपो होमो—अपरार्क L 4; चतु चि L 126; पु चि. L 10
तस्याः पुत्रशतं नष्टं—का. वि L 8; चतु. चि L 155; का. त. वि L 26
तस्यैव निष्कृतिरियं—चतु. चि. (प्रा) L 210, L 671
तामेवोपवसेत कामं—अपरार्क. L 6; स्मृ. च L 6; चतु. चि. L 136; का. मा L 14; स्मृ मु. L 8; का. त. वि. L 14
ताम्रपात्रं दशपलं—चतु चि. L 35; दा म L 15; ज. क. द्रु. L 62
तिलपात्रं त्रिधा प्रोक्तं—चतु. चि L 34; दा म. L 14; ज. क. द्रु L 61
तिलपूर्णं ताम्रपात्र—चतु. चि L 32; दा. म. L 12; ज. क. द्रु L 59
तीर्थयात्रावृषोत्सर्गे—आ कौ L 16, L 24
त्रिगुण चोत्तमे तद्वत्—चतु. चि. L 38, दा म. L 18
त्रयोदश्यां न तत्कुर्यात्—स्मृ च. L 16; चतु चि L163
दद्याद् वित्तानुसारेण—चतु. चि L 22; दा. म. L 7
दशमीशेषसंयुक्तो—का वि. L 5; L 7 चतु. चि. L 138, L 152, का. त वि L 16
दश सौवर्णिके शृङ्गे—चतु चि L 3, ज क. द्रु L 15, L 49
दिनक्षये तु सम्प्राप्ते—चतु चि L 137, का. त वि. L 15
द्रोणैक वाससाछन्नं—चतु चि L 27, दा म L 10
द्वादश्यामुपवासोऽत्र स्मृ च L 9, चतु चि L 143
द्विगुण मध्यमं प्रोक्तं—दा म L 16, ज. क द्रु L 63
द्विगुणोपस्करोपेता—चतु चि L 8 ज क द्रु L 54
द्विस्पृगेकादशी यत्र—अपरार्क L 5 स्मृ च L 5, चतु. चि. L 135, का. मा L 13, स्मृ. मु. L 7, L 11
द्वौ तिथ्यन्तावेकवारे—का चि L 15, अपरार्क. L 3; स्मृ. च L 13; पु. चि. L 9
नन्दा विद्धा तु या पूर्णा—का. मा. L 7; का त. वि L 1
न भोक्तव्यं न भोक्तव्यं—का मा. L 10; स्मृ मु. L 4
नरयाने तदर्धं स्यात्—त्रि. से. सा. L 2; वि पा L 24
नरस्य द्विगुणां छायां—नि प्र L 3; का. त. चि L 37, पु चि L 3
न शक्नोति विवेक्तुं—नि. सि L 5; ज. क. द्रु. L 24
न स्मृतेऽस्त्यभिप्रायेत—का सा. L 4; नि. सि L 2; का. त वि. L 10, वि पा. L 11; ज क द्रु L 5; पु चि L 12

नातिक्रमेत् द्वादशीं च—चतु. चि. L 123 ; ज. क द्रु L 31,
नित्यमभ्युदयात् पूर्वे—चतु. चि L 103, आ. र L 1
नैवेद्य शिरसा नत्वा—आ. र L 11 ; वी मि. L 8
पराक मास संसर्गे—चतु चि. (प्रा) L 95 ; स्मृ. मु. L27
पूजा कार्या पुष्पगन्ध°—का. मा L 5 ; ज क. द्रु L 10
पौरुषेण तु सूक्तेन—स्मृ त. L 18 ; वि. पा. L 3 ; आ. भृ. L 23
प्रदोषव्यापिनी यत्र—का मा L 1, स्मृ मु L 1, पु चि L 1
प्रातर्दत्वा तु विधिवद्—दा. म L 13 ; ज क द्रु. L 60
बर्हिर्मासान्यमान् धृति—नि सि L 1 ; का त वि L 9; वि पा L 10 ; ज. क द्रु L 4, पु. चि. L 11
भृगुणा सहचन्द्रा च—का. मा L 8 ; का. त वि L 2
महागुरुनिपाते तु—श्रा. कौ L 20, शु कौ. L 10
मृत्वा नरकमासाद्य—चतु. चि.(प्रा.) L257; स्मृ मु. L 38
यजेत वाऽश्वमेधेन—चतु. चि L 170 ; नि सि L 16
यदीच्छेद् विष्णुसायुज्य—रा मा L 11, का मा L 13, स्मृ मु L 5, स. म L 1, नि. सि L 7 ; का त वि L 5
यस्योच्छिष्ट हि वाञ्छंति—आ र L 12, वी मि. L 9
यतस्ययतिधर्मोऽयं—स्मृ. मु. L 19 ; स. म. L 4
वस्त्रं तु त्रिगुणं धेन्वा—चतु चि. L 5, ज क द्रु L 17, L 51
वानप्रस्थो यतिश्चैव—रा. मा. L 18, का मा L 16; ज. क द्रु L 27
विप्रयितास्त्वभरणं—चतु. चि (प्रा) L 256, स्मृ मु. L 37
वित्तानुसारात्त्रापि—चतु चि L 41, दा म L 21
वित्तानुसारात् सर्वेत्र—चतु चि. L 47 ; दा म. L 23
विदेशगमनश्चैव—श्रा कौ L 18 ; शु कौ L 9
विमिश्रां वापि कुर्वीत—का वि L 10 ; का. त. वि. L 18, L 32; ज क द्रु. L 41
वैशाखस्य सिते पक्षे—ज क. द्रु L 83, L 137
वैश्वदेव तत कुर्यात्—स्मृ त. L 19, आ. र L 15, वि. पा L 4
शरत्पाकादिनागानां—का. मा L 4, ज क द्रु. L 9
शंकित सर्वविच्चेन—चतु चि L 49 दा. म L 27
शफे पंचपले रौप्ये—चतु चि. L 23, दा म. L 8
शाक मधु परान्न च—अपरार्क L 8; स्मृ. च L 2; चतु चि L59, L 128; का मा. L 24; का सा. L 2; स म L 6, नि सि. L 9, का. त. वि. L 12; वि पा L 16 ; ज. क. द्रु L 43
शुक्लान्त्यां कृष्णपक्षे च—अपरार्क L 1; का. मा L 19, ज क. द्रु. L 28
स गत्वा नरकं घोरं—चतु चि. (प्रा.) L 324, L 326
सदक्षिण च विप्राय—चतु चि L 40, दा म. L 24
सदक्षिण सवस्त्र च—चतु. चि. L 24; दा. म. L 9
सम्पूज्य यो हि नक्ताशी—ज क द्रु L 12; पु. चि. L 6
सम्पूर्णाद्वादशी यत्र—चतु. चि L 131; पु चि. L 7
सिद्धार्थाश्च हरेस्तस्य—आ र. L 13, वी मि. L 10
सुवर्णं दक्षिणा दत्वा—चतु चि. L 39, दा. म L 19, ज. क. द्रु L 66
सेतुवृक्षजलादीनां—श्रा कौ L 15; L 23
स्त्रीभिः शूद्रैश्च कर्त्तव्यं—चतु चि. L 105 ; आ. र L 3
स्वर्णमेव जघन्यं तु—चतु. चि L 37 ज. क द्रु. L 64
हिरण्यदेयस्तुति—चतु चि (प्रा) L 253, स्मृ मु L 35

## APPENDIX II

## ( परिशिष्टम् २ )

## SUBJECT-CONCORDANCE OF THE KURMA-PURĀṆA WITH THE OTHER PURĀNAS AND THE EPICS

### कूर्मपुराणस्य विषयैः सह अन्यपुराणानां रामायणमहाभारतयोश्च समानविषयाणां संवादः

Several topics of the Kūrma-Purāṇa have their parallel topics in some of the other Purāṇas and the Epics These parallel topics have similar contents and sometimes *a number of parallel slokas too Such similarities of the topics, contents and the* slokas also help sometimes in reconstructing the text of the Kurma-Purāṇa A few such cases have been noted in the critical notes on the constituted text of the Kurma-Purana

The *topics* are *given* here *in* the *order* of the Adhyāyas of the Kurma Purana The other Puranas containing the parallel topics are referred to below that in the alphabetical *order And then the* Epics and the Harivamsa are referred to

[ कूर्मपुराणस्य कतिचिद् विषया अन्येषु पुराणेषु महाभारतरामायणादिषु चोपलभ्यन्ते । अत एषां समानविषयाणां संवादोऽत्र प्रदीयते । कुत्रचित् स्थलेषु समानविषयेषु मध्ये समानपाठा अपि प्राप्यन्ते । कूर्मपुराणस्य पाठनिर्धारणे क्वचित् संवादोऽयं सहायकोऽभूत् । कूर्मपुराणपाठस्य समीक्षात्मकटिप्पणीषु केषुचित् स्थलेषु एतत् साहाय्यं निर्दिष्टम् ।

अत्र विषया कूर्मपुराणस्य अध्यायक्रमेण प्रदत्ता । तदनु पुराणानां नामनिर्देशः स्थलनिर्देशसहितः अकारादिक्रमेण कृता । तदनु रामायणमहाभारतहरिवंशानां निर्देशो वर्तते । ]

**Scheme of Reference**

1 The reference figures for the main divisions, adhyayas and the slokas are given in Devanagari *numerals But in the case of the* भविष्यपुराण शिवपुराण, *and the* स्कन्दपुराण the reference-figures for the subdivisions (other than the adhyayas) are given in the International forms of the numerals

2 The number of a sloka referred to is printed in smaller type

3 In the case of the अग्निपुराण, ब्रह्मपुराण मत्स्यपुराण, मार्कण्डेयपुराण, वराहपुराण and वामनपुराण there are two reference numerals, the first denotes the number of the adhyaya and the second the *number of the* sloka *referred to*

4 In the case of the कूर्मपुराण गरुडपुराण नारदीयपुराण, लिङ्गपुराण and वायुपुराण (Venkt, edn ) there are three reference numerals, of which the first (*1* or 2 ) denotes the पूर्वखण्ड, पूर्वभाग, पूर्वार्द्ध ( १ ) or the उत्तरखण्ड उत्तरभाग उत्तरार्द्ध ( २ ) as the case may be the second and the third *reference numerals respectively* denote *the* number of the adhyāya and of the sloka referred to

5. In the case of the ब्रह्माण्डपुराण (Venkt edn ) there are three reference-numerals, of which the first (1, 2, or 3) denotes its पूर्वभाग ( consisting of the प्रक्रियापाद and the अनुषङ्गपाद) (१), or मध्यमाग ( = उपोद्घातपाद) (२), or the उत्तरभाग ( = उपसंहारपाद) (३)

